

अष्टमस्कंध वीराटरूप श्रीनारायण - बलिराजा

॥ श्रीकृष्णाय नमः ॥ ॥ येन प्रवर्तितो धर्मो येनैव परिरक्ष्यते ॥ अष्टमस्कन्धटीकायां स एव शरणं मम ॥ १ ॥ एवं पञ्चदशाध्यायैर्वासना विनिरूपिताः ॥ चतुर्विंशतिभिश्चाथ सद्धर्मे विनिरूप्यते ॥ २ ॥ प्राकृतत्वेन चोतीनां चतुर्विंशतिभेदतः ॥ तन्निवर्तकधर्माणा तावद्भिर्विनिरूपणम् ॥ ३ ॥ महान्तोऽत्र त्रयो धर्मा आपत्सु हरिसंस्मृतिः ॥ सम्पत्सु सर्वदानानि वाक्यनिर्वाह एव च ॥ ४ ॥ तेषा वक्ता हरिश्चेति क्रमेणात्र निरूप्यते ॥ चतुर्भिर्दशभिश्चैव ह्येकेन नवभिस्तथा ॥ ५ ॥ ॥ सप्तमस्कन्धे ऊतिलीला निरूप्य अथाष्टमस्कन्धे मन्वन्तरलीलां निरूपयति, तत्र ' मन्वन्तराणि सद्धर्मः ' इति वाक्यात् पूर्वोक्तवासनानिवर्तको मन्वादिभिः सद्भिः प्रवर्तितः सद्धर्मो मन्वन्तरशब्दवाच्यः । ' मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ' इति द्वादशस्कन्धोक्तं तु सामान्यलक्षणम्, सद्धर्मस्य षट्स्वनुगतत्वात् । तत्रापि प्राकृतो गणश्चतुर्विंशतिसङ्ख्याकस्तत्रोत्पन्ना वासनाः सर्वथा सद्धर्मो नाशयत्येवेति द्योतनाय चतुर्विंशतिभिरध्यायैस्तान्निरूपणम् । तत्र आपत्सु हरिसंस्मरणं सम्पत्सु च सर्वदानानि स्वोक्तनिर्वाहश्चेति त्रयो धर्मा मुख्याः । तद्वक्ता भगवानेव मुख्य इति प्रकरणचतुष्टयेनात्र निरूप्यते । तत्र हरिसंस्मरणस्य पुमर्थचतुष्टय-

॥ ॐनमो भगवते वासुदेवाय । श्रीकृष्णाय नमः ॥ ॥ राजोवाच ॥ स्वायम्भुवस्येह गुरो वंशोऽयं विस्तराच्छ्रुतः ॥
यत्र विश्वसृजां सर्गो मनूनन्यान् वदस्व नः ॥ १ ॥

हेतुत्वात्तन्निरूपणं चतुर्भिरध्यायैः क्रियते । दानस्य कर्तुः पात्रस्य च त्रिगुणत्वात् गुणानां मिश्रणेन नवविधत्वात् गुणातीतस्य चैकविधत्वात् एवं सगुणनिर्गुणभेदेन दानस्य दशविधत्वात् तन्निरूपणं दशभिरध्यायैः क्रियते । स्वोक्तनिर्वाहप्रकरणेऽपि बलिप्रकरणे दानस्य साधनत्वे प्रविष्टत्वात् दानस्य सगुणस्य नवविधत्वात् स्वोक्तनिर्वाहप्रकरणनिरूपणमपि नवभिरध्यायैः क्रियते । पूर्वप्रकरणे दानस्यैव मुख्यत्वेन निरूपणादत्र च साधनत्वेन दानस्य निरूपणान्मुख्यत्वेन सत्यवाक्यस्यैव निरूपणात् प्रतिपाद्यभेदात् प्रकरणभेद इति बोध्यम् । धर्मस्य वक्तुर्भगवतो मत्स्यस्यैकविधत्वात्तच्चरित्रनिरूपणमेकेनाध्यायेन क्रियते । एवं सद्धर्मनिरूपणे चतुर्विंशत्यध्यायाः प्रकरणचतुष्टयं च भवति । तत्र तु प्रथमेऽध्याये हरिं सस्मरतो मनोः ॥ तपसा मन्त्रपाठेन धर्मसिद्धिर्निरूप्यते ॥ ६ ॥ ॥ 'स्वायम्भुवस्य च मनोर्वंशः परमसम्मतः ॥ कथ्यता भगवन्यत्र मैथुनेनैधिरे प्रजाः ' इति तृतीयस्कन्धकृतविदुरप्रश्नानुसारेण वर्णित स्वायम्भुवस्य मनोस्तद्दुहितृणा वंशं भगवतो यज्ञस्य कपिलस्य नृसिंहस्य च चरितं श्रुत्वा परमनिर्वृतो राजा भगवच्चरितान्तरं श्रोतुकामो मन्वन्तराणि पृच्छति— स्वायम्भुवस्येति । हे गुरो इह व्यतीते ग्रन्थे स्वायम्भुवस्य मनोर्वंशोऽयं मया विस्तराच्छ्रुतः ।

१ ' गुरो ' इति पाठान्तरम् । २ व्याख्यातृकृतावतरणस्य षष्ठश्लोकोऽयम् ।

गुरोरिति पाठान्तरे गुरोस्त्वत्तः श्रुत इत्यर्थः । वंशं विशिनष्टि– यत्रेति । यत्र वंशे विश्वसृजां मरीच्यादीनां मनुकन्यासु पुत्रपौत्रादिरूपः सर्गो जात इत्यर्थः । अथ नोऽस्मभ्यमन्यान् मनून् वदस्व । सच्चरित्रास्तद्वंशान् कथयेत्यर्थः ॥ १ ॥ भगवत्तोषहेतुभूतधर्मश्रवणार्थं भगवच्चरितश्रवणार्थं च मन्वन्तरश्रवणेऽस्माकं प्रवृत्तिर्नान्यथेति स्वाभिप्रायमाह– यत्रेति सार्द्धेन । यत्र यत्र मन्वन्तरे चातुर्वर्ण्याश्रिताः शुभा भगवत्परितोषजनका विविधा धर्मा निरूप्यन्ते । यत्र यत्र च हरेर्जन्मकर्माणि कवयो गृणन्ति तानि मन्वन्तराणि नोऽस्माकं शृण्वतां वदेत्यन्वयः । नच तवाविदितं किञ्चिदस्तीति त्वमेव कथनयोग्योऽसीति सूचयन् सम्बोधयति– हे ब्रह्मन्निति । हरिजन्मकर्मश्रवणेच्छाया हेतुं सूचयंस्तं विशिनष्टि–महीयस इति । सकलभक्तजनोद्धारकत्वेन ब्रह्मादिवन्दनीयस्येत्यर्थः ॥ २ ॥ मुख्यतया भगवच्चरितमेव वक्तव्यमित्याह– यद्यस्मिन्निति । भगवान् यस्मिन्नतीते मन्वन्तरे यत्कर्म कृतवान्, यस्मिन्ननागते यत्कर्ता करिष्यति, अद्य वा वर्तमाने यत्कुरुते, तत् हे ब्रह्मन्नो वदेत्यन्वयः । कर्मकरणे हेतुमाह–

यत्र धर्माश्च विविधाश्चातुर्वर्ण्याश्रिताः शुभाः ॥ यत्र यत्र हरेर्जन्म कर्माणि च महीयसः ॥ गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥ २ ॥ यद्यस्मिन्नन्तरे ब्रह्मन् भगवान्विश्वभावनः ॥ कृतवान् कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥ ऋषिरुवाच ॥ मनवोऽस्मिन् व्यतीताः षट् कल्पे स्वायम्भुवादयः ॥ आद्यस्ते कथितो यत्र देवादीनां च सम्भवः ॥ ४ ॥ आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ॥ धर्मज्ञानोपदेशार्थं भगवान् पुत्रतां गतः ॥ ५ ॥ कृतं पुरा भगवतः कपिलस्यानुवर्णितम् ॥ आख्यास्ये भगवान् यज्ञो यच्चकार कुरूद्वह ॥ ६ ॥ विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ॥ विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥ ७ ॥

विश्वभावन इति । यतो विश्वपालक इत्यर्थः । तत्र शास्त्रप्रसिद्धिं द्योतयति– हीति ॥ ३ ॥ एवमापृष्ट उत्तरमाह– मनव इति । अस्मिन् कल्पे स्वायम्भुवादयः षण्मनवो व्यतीताः । तत्राद्यः स्वायम्भुवो मनुस्ते कथितो यत्र देवादीनां सम्भव उत्पत्तिरुक्ता । आदिपदेन दैत्यमनुष्यतिर्यगादीनां सङ्ग्रहः ॥ ४ ॥ तस्य स्वायम्भुवस्यैव मनोर्दुहित्रोराकूत्यां देवहूत्यां च धर्मज्ञानोपदेशार्थं भगवान् विष्णुः पुत्रतां गतः प्राप्त इत्यन्वयः ॥ ५ ॥ तत्र भगवतः कपिलस्य कृतं ज्ञानभक्त्युपदेशादिकं पुरा तृतीयस्कन्धे मया वर्णितम्, तच्च त्वया श्रुतमेव । हे कुरूद्वह परीक्षित् भगवान् यज्ञो यच्चकार तदिदानीमाख्यास्ये कथयिष्यामीत्यन्वयः ॥ ६ ॥ एवं भगवतो यज्ञस्य चारितवर्णनं प्रतिज्ञाय तद्विवक्षुस्तदुपोद्घाततया स्वायम्भुवस्य मनोर्वृत्तान्तमाह– विरक्त इत्यादिना । काम्यन्त इति कामाः शब्दादयो विषयास्तेषां भोगेषु विरक्तः शतरूपायाः पतिर्भर्ता स्वायम्भुवो मनुः प्रभुः जितेन्द्रियतया त्यागे समर्थः राज्यं विसृज्य परित्यज्य तपसे तपः कर्तुं सभार्यो वनमाविशत् जगामेत्यन्वयः ॥ ७ ॥

१ कुत्रचित् ' अनुवर्णन ' इति पाठान्तरम् ।

वनं गत्वा सुनन्दायां सुनन्दायाँ नद्यास्तीरे एकेन पदा भुवं स्पृशन् वर्षशतं वर्षशतपर्यन्तं घोरं दुष्करं तपस्तप्यमानः कुर्वाणः स मनुरिदं वक्ष्यमाण-माहेत्यन्वयः । तत्र तु तपआदिक्लेशं विनैव भगवान् प्रसन्न इति सूचयन् सम्बोधयति— हे भारतेति ॥ ८ ॥ मनुवाक्यान्येव दर्शयति— येनेत्यष्टभिः । येन चिदात्मना विश्वं देहेन्द्रियान्तःकरणादिरूपं चेतयते न चेतनीभवति विश्वं तु यं न चेतयते न चेतनीकरोति स्वत एव चिन्मयत्वात्, अस्मिन् देहादौ शयाने स्वपति सति यो जागर्ति, साक्षितया वर्तते, अयं जनस्तं न वेद स तु इमं वेद ॥ ९ ॥ तस्येश्वरत्वं प्रपञ्चयन् लोकस्य हितमुपदिशति—आत्मेति । जगत्यां लोके यत्किञ्चिज्जगत् स्थावरजङ्गमात्मकं वस्तु तत् विश्वं सर्वमात्मना ईश्वरेण आवास्यं सत्ताचैतन्याभ्यां संव्याप्तम्, अतस्तेनैवेश्वरेण यत्किञ्चित्त्यक्तं दत्तं धनं तेनैव भुञ्जीथाः भोगान् भुंक्ष्व । यद्वा—तेन हेतुना त्यक्तेन ईश्वराय समर्पितेनैव भुञ्जीथाः देहादिनिर्वाहं कुरु । कस्यस्वित् कस्यचिदपि धनं मागृधः माभिकाङ्क्षीः । यद्वा— धनं कस्यस्वित् ? न कस्यापि, किन्त्वीश्वरस्यैवातो माकाङ्क्षीः । अन्यथाऽधिकं योऽभिमन्येत स स्तेनो

**सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ॥ तप्यमानस्तपो घोरमिदमन्वाह भारत ॥ ८ ॥ मनुरुवाच ॥ येन चेतयते विश्वं विश्वं चेतयते न यम् ॥ यो जागर्ति शयानेऽस्मिन्नायं तं वेद, वेद सः ॥ ९ ॥ आत्मावास्यमिदं विश्वं यत्किञ्चि-ज्जगत्यां जगत् ॥ तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद्धनम् ॥ १० ॥ यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति ॥ तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥**

दण्डमर्हतीत्युक्त्यनुसारेण दण्ड्यत्वापत्तेरिति भावः । श्रुतिश्च[1] ईशावास्यमिति यथाश्लोकमेव ॥ १० ॥ ननु यदि परमात्मना सर्वं जगद्व्याप्तं तर्हि तत्त-द्वस्तुवत् स कुतो न दृश्यते इत्यपेक्षायां चक्षुराद्यविषयत्वादित्यभिप्रेत्याह— यमिति । यं सर्वं पश्यन्तमप्ययं जनश्चक्षुर्वा न पश्यति । नहि तत्कृपां विना तं कोऽपि विषयीकरोति ' दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ' इति वचनादिति भावः । तथाच श्रुतिः—"चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम्"इत्यादि । ननु एवं सर्वं पश्यतोऽपि तस्य ज्ञानमस्मदादिज्ञानवद्विनश्येत् तर्ह्यसर्वज्ञता स्यादित्याशङ्क्याह—चक्षुरिति । पश्यतोऽपि यस्य चक्षुर्ज्ञानं न रिष्यति न नश्यति । अस्मदादिवृत्त्यात्मकज्ञानस्य विनाशित्वेऽपि तस्य स्वरूपात्मकज्ञानस्याविनाशित्वादिति भावः । तमुपधावत भजध्वमित्यन्वयः । ननु तद्भजनेन किं स्यादित्यपेक्षायां "तमसाधु कर्म कारयति यमधो निनीषति, तं साधु कर्म कारयति यमूर्ध्वं निनीषति" इत्यादिश्रुतेः शुभाशुभ-कर्मणि प्रवृत्तेस्तत्फलप्राप्तेश्च तदधीनत्वात्तद्भजनात्परमपुरुषार्थावाप्तिरेव तस्य सर्वान्तर्यामित्वादित्यभिप्रेत्याह—भूतनिलयमिति । भूतानि निलयो

१ ईशावास्य इत्यादिका यथाश्लोकमित्यर्थः । श्लोके तु ईशावास्यमित्यस्य प्रतिपदं आत्मावास्यं इति । सर्वं इत्यस्य प्रतिपद विश्वं इति यत्किञ्चेत्यस्य प्रतिपदं यत्किञ्चित् इति बोध्यम् ।

यस्य तं सर्वान्तर्यामिणम् । ननु किमर्थमेवं सर्वभूतेषु स्थित्वा तानि प्रवर्तयतीत्याकाङ्क्षायां नानाविधक्रीडार्थमित्यभिप्रेत्याह– देवमिति । ननु तथापि तस्य विकारित्वं स्यादित्याशङ्क्याह– सुपर्णमिति। असङ्गमित्यर्थः ॥ ११ ॥ निर्विकारित्वमेव प्रपञ्चयति– न यस्येति । यस्य भगवतः आदिः जन्म न भवति अन्तो विनाशश्च न भवति । अतएव मध्यं च नास्ति, मध्यावस्थाया आद्यन्तसापेक्षितत्वात् । स्वः स्वकीयः परश्च नास्ति । सर्वात्मकत्वात् । तथा अन्तरं बहिश्च नास्ति, सर्वत्र परिपूर्णत्वात् । विश्वस्य अमूनि आद्यन्तादीनि यस्माद्भवन्ति विश्वं च यत् यद्रूपं तत् महत् परिपूर्णं ब्रह्मैव ऋतं सत्य परमार्थभूतम् ॥ १२ ॥ तदेवं श्लोकचतुष्टयेन भगवतो विश्वप्रकाशत्वं विश्वस्वामित्वं विश्वसाक्षित्व विश्वान्तर्यामित्वं निर्विकारित्व चोक्त्वाऽथ विश्वकर्तृत्वादिकमाह– स इति । स पूर्वोक्त ईश एव अजया अनादिसिद्धया स्वशक्तिरूपया मायया अस्य विश्वस्य जन्मादि धत्ते करोतीत्यन्वयः । आदिपदेन स्थितिसंहारयोर्ग्रहणम् । विश्वमेव कायो यस्य सः । अतएव पुरूणि बहूनि हूतानि नामानि यस्य सः । ननु विश्वप्रकाशत्वेऽपि तस्य प्रकाशकान्तरं स्यादिति शङ्कानिरासायाह– स्वयञ्ज्योतिरिति। ननु जगज्जनकस्यापि जनकः कश्चिदन्यः स्यादित्याशङ्कानिरासायाह–अज इति । तत्र हेतु-

**न यस्याद्यन्तौ मध्यं च स्वः परो नान्तरं बहिः ॥ विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् ॥ १२ ॥ स विश्वकायः पुरुहूत ईशः सत्यः स्वयञ्ज्योतिरजः पुराणः ॥ धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥ अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे ॥ ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४ ॥**

माह–पुराण इति, चिरन्तन इत्यर्थः । अतएव परमार्थसत्यः स एवेत्याह–सत्य इति । ननु तस्यापि मायासम्बन्धात् किं जीववन्मोहोऽस्तीत्याशङ्कानिरासायाह–तामिति । विद्यया चिच्छक्त्या तां मायामुदस्य तिरस्कृत्य निरीहः सर्वकामनाविनिर्मुक्त एवास्ते इत्यन्वयः ॥ १३ ॥ यस्मादीश्वराधीनमेव सर्वं तत्कृपयैव विमुच्यते, नान्यथा, अथ तस्मात् ऋषयो विवेकिनः अकर्महेतवे बन्धनरूपकर्मविमोक्षार्थं अग्रे आदौ भगवदर्पितानि कर्माण्येवेहन्ते । कुर्वन्ति । हि यस्मात् ईहमानो भगवदर्पणेन कर्माणि कुर्वाणः पुरुषः प्रायोऽनीहां मोक्षं प्रपद्यते प्राप्नोतीत्यन्वयः । क्वाचिज्जडभरतादिवद्विघ्नोपि भवतीति प्रायग्रहणम् । अहं करोम्येतत्फलं भोक्ष्ये इत्यासक्तिर्हि बन्धहेतुः, भगवदर्पणेन क्रियमाणे कर्मणि तदभावान्न बन्धनं, प्रत्युत बन्धनिवर्तकं च । तदुक्तं प्रथमस्कन्धे– ‘ एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ॥ त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ॥ गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च’ इत्यादि ॥ १४ ॥

एतदेव भगवत्कर्मदृष्टान्तेन द्रढयति— ईहत इति । भगवान् षड्गुणपूर्णोऽपि ईशो ईहते रामकृष्णाद्यवतारे वेदोक्तकर्माणि करोति । परन्तु तत्र कर्मसु न विषज्जते अहं करोम्येतत्फल भोक्ष्ये इत्यासक्तिं न करोति । हि यस्मात् परमानन्दात्मलाभेनैव पूर्णार्थः पूर्णकामः । अतो ये तं भगवन्तमनुवर्तन्ते तेऽपि नावसीदन्ति, कर्मभिर्न निबद्ध्यन्ते इत्यर्थः ॥ १५ ॥ एवमन्यानुपदिश्य स्वयं भगवदुपकारं प्रदर्शयस्तं शरणं व्रजति— तमिति । त स्वीकृतरामकृष्णाद्यवतारं भगवन्तमहं प्रपद्ये शरणं व्रजामीत्यन्वयः । तत्कृतमुपकारमाह— ईहमानमिति । मनुष्याधिकारप्राप्तकर्माणि कुर्वन्तमित्यर्थः । तर्ह्यस्मदादितः को विशेष इत्यपेक्षायामाह—निरहङ्कृतामिति । अहं करोम्येतत्फलं भोक्ष्ये इत्यासक्तिरहितमित्यर्थः । तत्र हेतुमाह— बुधमिति । अविद्याराहित्येन सदाऽऽविर्भूतपरमानन्दस्वरूपमित्यर्थः । अतएव पूर्णमिति, आत्मलाभेनैव पूर्णकाममित्यर्थः । अतएव निराशिषमिति, विषयकामनारहितमित्यर्थः । ननु तर्हि कथं तस्य वेदाद्यधीना कर्मसु प्रवृत्तिरित्याशङ्क्याह—अनन्यचोदितमिति । स्वेच्छयैव तस्य कर्मसु प्रवृत्तिर्न विधिनिषेधा-

**ईहते भगवानीशो न हि तत्र विषजते ॥ आत्मलाभेन पूर्णार्थो नावसीदान्ति येऽनु तम् ॥ १५ ॥ तमीहमानं निरहंकृतं बुधं निराशिषं पूर्णमनन्यचोदितम् ॥ नॄञ्छिक्षयन्तं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥ श्रीशुक उवाच ॥ इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ॥ दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा ॥ १७ ॥ तांस्तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः ॥ यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टपम् ॥ १८ ॥**

धीनेति भावः । नन्वीश्वरत्वेन तस्य कर्मफलाभावात्किमर्था स्वेच्छयाऽपि कर्मसु प्रवृत्तिरित्याशङ्क्याह—निजवर्त्मसंस्थितामिति । स्वप्रवर्त्तितवेदमार्गे सम्यक्स्थितमित्यर्थः । वेदमार्गप्रचाराय तत्र प्रवृत्तिरिति भाव । तत्रापि हेतुमाह—अखिलेति । अखिलान् धर्मान् भावयति प्रवर्तयति तथा तमित्यर्थः । तत्प्रवर्तनमपि नृणा पुरुषार्थसिद्ध्य एवेत्याह—नॄन् शिक्षयन्तामिति । शिक्षणेऽपि हेतुमाह—प्रभुमिति । स्वामित्वाच्छिक्षणमुचितमेवेति भावः ॥ १६ ॥ इत्येवं मन्त्रात्मिकामुपनिषदं व्याहरन्तं यतः समाहितं समाहितचित्तं स्वायम्भुवं मनुं दृष्ट्वा असुरा यातुधानाश्च क्षुधानिमित्तेन जग्धुमत्तुमभ्यद्रवन् ॥ १७ ॥ तथाऽवसितान् मनुभक्षणे कृतनिश्चयांस्तान् सुरादीन् वीक्ष्य सर्वगतः सर्वसाक्षी यज्ञाख्यो हरिः यामैः स्वपुत्रैर्देवैः परिवृतस्तान् हत्वा त्रिविष्टपं स्वर्गमशासत् अपालयत् । स्वयमेवेन्द्रो बभूवेत्यर्थः । तत्र प्रतिमन्वन्तरं मन्वादयः षडन्येऽन्ये भवन्ति । तथा हि सूतो द्वादशे वक्ष्यति—' मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंशावतारश्च हरेः षड्विधमुच्यते ' इति । तत्राद्यः स्वायम्भुवो मनुः प्रियव्रतोत्तानपादौ मनुपुत्रौ । यामाद्यो देवाः । ' तुषिता नाम ते देवा आसन् स्वायम्भुवान्तरे' इति चतुर्थस्कन्धवचनं तु कल्पान्तरीयमिति ज्ञेयम् ।

'मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः ॥ पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणः सुताः' इति हरिवंशोक्ताः सप्तर्षयः। यज्ञो हरेरवतारः। इन्द्रश्च स एवेति तन्मन्वन्तरं पञ्चविधमेवेति ॥ १८ ॥ द्वितीये मन्वन्तरे मन्वादिषट्कमाह—स्वारोचिष इति । अग्नेः सुतः स्वारोचिषाख्यो द्वितीयो मनुरभवत् । द्युमदादयस्तस्यात्मजाः पुत्राश्च बभूवुरित्यर्थः ॥ १९ ॥ तत्र मन्वन्तरे यज्ञपुत्रो रोचन इन्द्रो जातः । यज्ञपुत्रास्तुषितादयो देवा आसन् । आदिपदेन 'तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः ॥ इध्मः कविर्विभुः स्वह्नः सदेवो रोचनो द्विषट् ' इति चतुर्थस्कन्धोक्तावशिष्टा ज्ञेयाः। ऊर्जस्तम्भादयः सप्त ब्रह्मवादिन ऋषयो बभूवुः । आदिपदेन 'ऊर्जो वसिष्ठपुत्रश्च स्तम्भः काश्यप एव च ॥ प्राणो बृहस्पतिश्चैव दत्तोऽत्रिश्च्यवनस्तथा' इति हरिवंशोक्ता अन्ये ज्ञेयाः ॥ २० ॥ मन्वादयः पञ्चोक्ताः, भगवदवतारमाह—ऋषेरिति । वेदशिरस ऋषेस्तुषितेति नाम प्रसिद्धा पत्न्यभूत् । तस्यां

स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥ तत्रेन्द्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ॥ ऊर्जस्तम्भादयः सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥ ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् ॥ तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥ अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ॥ अन्वशिक्षन् व्रतं तस्य कौमारब्रह्मचारिणः ॥ २२ ॥ तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ॥ पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ॥ २३ ॥ वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ॥ सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥ २४ ॥ धर्मस्य सूनृतायां तु भगवान् पुरुषोत्तमः ॥ सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥

तुषितायां ततो वेदशिरसः सकाशात् विभुरित्यभिविश्रुतः विख्यातो देवो विविधक्रीडापरः सर्वेश्वरो भगवान् जज्ञे प्रादुरभूदित्यन्वयः ॥ २१ ॥ तस्यावतारकार्यमाह—अष्टाशीतीति । अष्टाशीतिसहस्रसङ्ख्याका ये धृतव्रताः यमनियमादिसाधनसम्पन्ना मुनयस्ते तस्य कौमारब्रह्मचारिणो विभोर्व्रतमाचारमन्वशिक्षन्नित्यन्वयः ॥ २२ ॥ तृतीये मन्वन्तरे मन्वादिषट्कमाह—तृतीयेति । हे नृप प्रियव्रतस्य सुत उत्तमाख्यस्तृतीयो मनुः अभवत् । पवनादयस्तस्य सुता अभवन् ॥ २३ ॥ तत्र वसिष्ठस्य तनयाः पुत्राः प्रमदादयः सप्त ऋषय आसन् । सत्यादिसञ्ज्ञकाश्च देवगणा आसन् । सत्यजिदाख्यश्चेन्द्र आसीत् ॥ २४ ॥ भगवदवतारं तच्चरितं चाह—धर्मस्येति द्वयेन । धर्मस्य भार्याया सूनृताख्याया तु भगवान् पुरुषोत्तमः सत्यसेन इति नाम्ना ख्यातः प्रसिद्धो जातः । स च सत्यव्रतादिभिर्देवैः सहितः सत्यजितः इन्द्रस्य सखा भूत्वा यक्षराक्षसादीनवधीदिति द्वयोरन्वयः ॥ २५ ॥

तद्वधे हेतुं सूचयंस्तान्विशिनष्टि—असत इति, दुष्टानित्यर्थः । एतदेव स्पष्टयति । अनृतमनृतभाषणमेव व्रतं येषां, दुष्टं शीलं येषा तेच तेच तान् । दुश्शीलत्वमेवाह—भूतद्रुह इति । भूतानि द्रुह्यन्तीति तथा तान् ॥ २६ ॥ चतुर्थे मन्वन्तरे मन्वादिषट्कमाह—चतुर्थ इति । उत्तमस्य भ्राता प्रियव्रतस्य पुत्रो नाम्ना च तामसश्चतुर्थो मनुरासीत् । पृथ्वादयो दश तस्य सुता आसन् ॥ २७ ॥ सत्यकादयस्तत्र देवा आसन् । त्रिशिखसञ्ज्ञकः ईश्वरः इन्द्र आसीत् । तामसे मन्वन्तरे ज्योतिर्धामादयः सप्त ऋषय आसन् । आदिपदेन 'ज्योतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्धनदस्तथा ॥ पीवरश्चर्षयो ह्येते सप्त तत्रापि चान्तरे' इति हरिवंशोक्ता अन्येऽपि ग्राह्याः ॥ २८ ॥ अन्यानपि विशिष्टपराक्रमान् देवानाह—देवा इति । हे नृप विधृतेस्तनया वैधृतय इति प्रसिद्धास्तामसमन्वन्तरे देवा बभूवुः । तेषां कार्यमाह— नष्टा इति । यैर्वैधृतिभिः स्वेन तेजसा स्वबुद्धिबलेन कालेन नष्टाः लुप्ताः वेदाः

सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ॥ भूतद्रुहो भूतगणांस्त्ववधीत् सत्यजित्सखः ॥ २६ ॥ चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः ॥ पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥ २७ ॥ सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ॥ ज्योतिर्धामादयः सप्त ऋषयस्तामसान्तरे ॥ २८ ॥ देवा वैधृतयो नाम विधृतेस्तनया नृप ॥ नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥ २९ ॥ तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः ॥ हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥ ३० ॥ राजोवाच ॥ बादरायण एतत्ते श्रोतुमिच्छामहे वयम् ॥ हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥ तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभम् ॥ यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥ ३२ ॥

विधृताः ॥ २९ ॥ तत्र भगवदवतारं तच्चरितं चाह— तत्रेति । तत्रापि मन्वन्तरे हरिमेधसो भर्तुः सकाशात् हरिण्या भार्याया हरिरित्याहृतो व्याख्यातो भगवान् जज्ञे । येन हरिसञ्ज्ञकेन भगवता ग्रहात् मकरात् गजेन्द्रो मोचित इति ॥ ३० ॥ एवं सङ्क्षेपतो गजेन्द्रमोक्ष श्रुत्वा विस्तरेण तच्छ्रोतुं लब्धप्रश्नावसरो राजा पृच्छति— बादरायण इति । व्यासपुत्रत्वादस्मदुपकाराय भगवद्यशोवर्णनं तत्रोचितमेवेति सूचयन् सम्बोधयति—हे बादरायणे इति । हर्याख्यो भगवान् ग्राहग्रस्तं जगपतिं यथा अमूमुचत् मोचयामास, तदेतत् ते त्वत्तो वयं सर्वं श्रोतुमिच्छामहे इत्यन्वयः ॥ ३१ ॥ श्रवणेच्छाया हेतुमाह— तदिति । यत्र यत्र कथायां हरिर्गीयते तत् सैव कथा सर्वासु कथासु महत्पुण्यं महत्पुण्यावहं धन्यं धनावहं स्वस्त्ययनं कामावहं शुभं मोक्षावहं च । भगवद्यशसो मोक्षहेतुत्वे हेतुं सूचयन् भगवन्तं विशिनष्टि—उत्तमश्लोक इति । उत्तमः अविद्यानिवर्तकः श्लोको यशो यस्य तथा । धर्मा-

१ 'वृषा ख्याति' इति पाठ' पुस्तकान्तरेषु ।

दिप्रदत्वे हेतुं सूचयन्नाह—भगवानिति, ऐश्वर्यादिगुणसम्पन्न इत्यर्थः ॥ ३२ ॥ एवं पृष्टः श्रीशुक उत्तरं दत्तवानित्याह—परीक्षितेति । स तु सर्वज्ञतया प्रसिद्धः बादरायणिः वेदव्यासस्य पुत्रः शुक एवं परीक्षिता भगवत्कथासु चोदितः प्रश्नेन प्रवर्तितः सन् पार्थिवं परीक्षितं प्रतिनन्द्य अहो त्वया साधु पृष्टमित्यभिनन्द्य स्वस्यापि भगवत्कथारसिकत्वात् मुदा हर्षेण मुनीनां सदसि सभायां तेषामपि शृण्वता सतामुवाच गजेन्द्रमोक्षेतिहासं वर्णितवानित्यन्वयः। श्रवणाधिकारं सूचयन् राजानं विशिनष्टि—प्रायोपविष्टेनेति । यूयमपि श्रवणाधिकारिण इति सूचयन् सम्बोधयति—हे विप्रा इति ॥ ३३ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमाद्रिरधिराख्येन भजनानन्दासिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र हरिसंस्मृतिरूपणे ॥ प्रथमो विवृतोऽध्यायो धर्मसिद्धिनिरूपकः

सूत उवाच ॥ परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः ॥ उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे आपत्सु हरिसंस्मरणप्रकरणे धर्मसिद्धिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ आसीद्गिरिवरो राजंस्त्रिकूट इति विश्रुतः ॥ क्षीरोदेनाऽऽवृतः श्रीमान् योजनायुतमुच्छ्रितः ॥ १ ॥ तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ॥ दिशश्च रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ २ ॥ अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥

॥ ३ ॥ ॥ छ ॥॥ प्राप्तस्य कौञ्जरीं योनिं हरिसेवानुभावतः ॥ द्वितीये तु गजेन्द्रस्याप्यर्थसिद्धिर्निरूप्यते ॥ १ ॥ गजेन्द्रमोक्षेतिहासमेवाह—आसीदित्यादिनाऽध्यायत्रयेण । तत्र प्रथमं तस्य स्थानादिकं दर्शयति । सावधानतया श्रोतव्यमिति भावेन सम्बोधयति—हे राजन्निति । त्रिकूट इति विश्रुतः प्रख्यातः कश्चिद्गिरिवरः आसीत् अस्तीत्यन्वयः । तं वर्णयति— क्षीरोदेनेति सार्धसप्तभिः । क्षीरसमुद्रेणावृतः क्षीराब्धिद्वीपस्थ इत्यर्थः । श्रीमान् रत्नादिसमृद्ध्या शोभावानित्यर्थः । योजनायुतमुच्छ्रितः उन्नतः ॥ १ ॥ पर्यक् परितस्तावता योजनायुतेन विस्तृतश्च । त्रिकूटसमाख्याबीजमाह—शृङ्गैरिति । रौप्यायसहिरण्मयैस्त्रिभिर्मुख्यैः शृङ्गैः पयोनिधिं दिशश्च रोचयन् प्रकाशयन्नास्ते इत्यन्वयः ॥ २ ॥ तथा रत्नैर्धातुभिर्गैरिकादिभिश्च विचित्रितैरन्यैश्च शृङ्गैः ककुभो दिशः रोचयन्नास्ते इति पूर्वेणैव सम्बन्धः ॥ ३ ॥

स च त्रिकूटः पयोधेरूर्मिभिः समन्तात्सर्वतोऽवनिज्यमाना विशोध्यमाना अङ्घ्रयः मूलप्रान्ता यस्य स तथाभूतः ऊर्मिभिरितस्तत आकर्षणेन घर्षितैः हरिद्भिः पालाशवर्णैर्मरकतमणिभिर्भूमिं श्यामलां करोतीत्यन्वयः ॥ ४ ॥ तथा क्रीडद्भिः सिद्धादिभिर्जुष्टाः सेविताः कन्दरा गुहा यस्य स तथाभूतः ॥ ५ ॥ यत्र त्रिकूटे किन्नरादीनां सङ्गीतसन्नादैर्नदन्त्यो गुहा यस्मिन्प्रदेशे तं प्रदेशं हरयः सिंहाः अभिगर्जन्तीत्यन्वयः । तत्र हेतुमाह— परशङ्कयेति । सिंहान्तरागमनशङ्कया निमित्तेन, अमर्षया असहनेन । तत्रापि हेतुमाह— श्लाघिन इति, यतः स्ववीर्यश्लाघिन इत्यर्थः ॥ ६ ॥ नानाविधा ये आरण्याः अरण्यप्रभावाः पशवो महिष्यादयस्तेषा व्रातैः सङ्कुलाभिर्व्याताभिः द्रोणीभिरलङ्कृतः आस्ते इति सम्बन्धः । किञ्च चित्रा द्रुमा येषु तेषु सुरोद्यानेषु कलकण्ठा मधुरस्वरविहङ्गमा यस्मिन् सः ॥ ७ ॥ किञ्च स्वच्छोदकैः सरित्सरोभिर्युतः । मणय इव वालुका येषु तैः पुलिनैश्च युतः । देवस्त्रीणां

स चावनिज्यमानाङ्घ्रिः समन्तात् पय ऊर्मिभिः ॥ करोति श्यामलां भूमिं हरिन्मरकताश्मभिः ॥ ४ ॥ सिद्धचारण-गन्धर्वविद्याधरमहोरगैः ॥ किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥ ५ ॥ यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया ॥ अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया ॥ ६ ॥ नानारण्यपशुव्रातसङ्कुलद्रोण्यलङ्कृतः ॥ चित्रद्रुमसुरोद्यानकलकण्ठ-विहङ्गमः ॥ ७ ॥ सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभाम्ब्वनिलैर्युतः ॥ ८ ॥ तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः ॥ उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ सर्वतोऽलङ्कृतं दिव्यैर्नित्यं पुष्पफ-लद्रुमैः ॥ ९ ॥ मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः ॥ चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ॥ १० ॥ क्रमुकै-र्नारिकेरैश्च खर्जूरैर्बीजपूरकैः ॥ मधुकैः सालतालैश्च तमालैरसनार्जुनैः ॥ ११ ॥ अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ॥ १२ ॥

मज्जनेन य आमोदस्तेन सौरभेण युक्तान्यम्बूनि अनिलाश्च तैश्च युत आस्ते ॥ ८ ॥ 'ये मां त्वां च सरश्चेदम्' इत्यादिना गिरिवनादिसम्बन्धोऽयमिति वक्ष्यति तत्र गिरिमुपवर्ण्य वनं वर्णयति— तस्येति सार्धैः पञ्चभिः । तस्य त्रिकूटस्य द्रोण्या भगवत ऐश्वर्यादिसम्पन्नस्य महात्मनो लोकपालस्य वरुणस्य ऋतुमदाख्यमुद्यानमस्ति । कथम्भूत? सुरयोषितामाक्रीडं क्रीडास्थानम् । अत्र हेतुमाह— नित्य पुष्पाणि फलानि च येषां तैर्दिव्यैर्द्रुमैः सर्वतोऽलङ्कृतमिति ॥ ९ ॥ द्रुमानेव कांश्चिद्दर्शयति— मन्दारैरिति । मन्दारादिभिर्वृत इति चतुर्थेनान्वयः । वनप्रदेश इति विवक्षया पुंल्लिङ्ग-निर्देशः ॥ १० ॥ ११ ॥ १२ ॥

---

१ 'सौरभाम्भोऽनिलैः' इति पाठान्तरम् ।

॥ १३ ॥ तस्मिन्नुद्याने सरोऽस्ति । तद्वर्णयति— सुविपुलमतिविस्तृतम् । लसन्ति काञ्चनपङ्कजानि यस्मिंस्तत् ॥ १४ ॥ कुमुदादीनां श्रिया ऊर्जितं समृद्धम् । मधुपानेन मत्तैः षट्पदैर्भ्रमरैः निर्घुष्टम्, कलो मधुरस्वनो येषां तैः शकुन्तैः पक्षिभिश्च निर्घुष्टं नादितम् ॥ १५ ॥ हंसैः कारण्डवैश्चाकीर्णं सङ्कुलम् । चक्राह्वैः सारसैरप्याकीर्णम् । जलकुक्कुटादीनां कुलैः कूजितम् ॥ १६ ॥ मत्स्याना कच्छपाना च सञ्चारेण चलतां पद्मानां रजसा युक्तं पयो जल यस्मिंस्तत् । कदम्बादिभिर्वृतम् ॥ १७ ॥ कुन्दादिभिरल शोभितामिति द्वयोरन्वयः ॥ १८ ॥ नित्यमृतवः फलपुष्पादिसम्पत्तिहेतवो येषां तैरन्यैश्च तीरजैर्द्रुमैरलं शोभितम् ॥ १९ ॥ तत्रैवं सति स गिरिः काननं चाश्रयः स्थानं यस्य स वारणयूथपः गजेन्द्रः करेणुभिर्गजीभिः

द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ बिल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ॥ १३ ॥ तस्मिन्सरः सुविपुलं लसत्काञ्चनपङ्कजम् ॥ १४ ॥ कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ॥ मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः ॥ १५ ॥ हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ १६ ॥ मत्स्यकच्छपसञ्चारचलत्पद्मरजःपयः ॥ कदम्बवेतसनलनीपवञ्जुलकैर्वृतम् ॥ १७ ॥ कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः ॥ कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८ ॥ मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ॥ शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः ॥ १९ ॥ तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ॥ सकण्टकान् कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन् वनस्पतीन् ॥ २० ॥ यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः ॥ महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः ॥ २१ ॥ वृका वराहा महिषर्क्षशल्यगोपुच्छसालावृकमर्कटाश्च ॥ अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥

सह चरन् कीचकवेणुवेत्रवन्तं विशालं गुल्मं लतादिसन्दर्भं वनस्पतींश्च प्ररुजन् प्रभञ्जंस्तृषार्दितेन स्वयूथेन वृतस्तस्य सरोवरस्याभ्याशं समीपमगमदिति पञ्चमेनान्वयः ॥ २० ॥ तं गजेन्द्रं विशिनष्टि— यद्गन्धेति । यस्य गजेन्द्रस्य गन्धमात्राद्वायुनोपनीतात् सिंहादयो भयाद्द्रवन्ति पलायन्ते इत्यन्वयः । हरयः सिंहाः । गजेन्द्राः अन्ये प्रतिपक्षिणो गजाः ॥ २१ ॥ वृकादयस्तु क्षुद्रा अल्पप्राणिनो यदनुग्रहेण यस्यानुज्ञानेन अन्यत्र दृष्टिपथं त्यक्त्वा अभीता[3] निर्भयाश्चरन्ति चेरुरित्यन्वयः ॥ २२ ॥



१ सुवर्णवर्णानि कमलानि । २ कचित् ' मृगाश्च खड्गा ' इति पाठ । ३ सिंहव्याघ्रादिभयरहिता ।

स गजेन्द्रो घर्मेण आतपेन तप्तः करिभिः गजैः करेणुभिः गजीभिश्च वृतः मदच्युत् मदस्रावी कलभैर्गजपोतैरनुद्रुतः गरिम्णा स्थौल्येन गिरिं प्रकम्पयन् मदमश्नन्तीति तथा तैरलिकुलैः परितो निषेव्यमाणः ॥ २३ ॥ पङ्कजरेणुभिः रूषितं व्याप्तं सरसः सम्बन्धिनमनिलं विदूरादेव जिघ्रन्, मदेन विह्वले चलिते ईक्षणे यस्य सः, तृषा पिपासया अर्दितेन पीडितेन स्वयूथेन वृतस्तस्य सरोवरस्याभ्याशं समीपं द्रुतं सत्वरं अथानन्तरमेवागमादित्यन्वयः ॥ २४ ॥ तस्मिन् सरसि विगाह्य प्रविश्य अद्भिः सरोजलैरात्मानं स्नपयन् गतक्लमः श्रमरहितः सन् निजपुष्करेण स्वशुण्डाग्रेण उद्धृतममृतं च स्वादु अम्बु जलं निकामं यथेष्टं पपावित्यन्वयः। यथेष्टपाने हेत्वन्तरं सूचयन्नम्बु विशिनष्टि—निर्मलं स्वच्छम्। हेमवत्प्रकाशमानानामरविन्दादीनां रेणुभिर्वासितमिति ॥ २५ ॥ स्वपुष्करेणोद्धृतैः शीकराम्बुभिः जलबिन्दुभिः करेणूः गजीः कलभांस्तत्पोतांश्च पाययन् संस्नपयंश्च कृच्छ्रं कष्टमागतं नाचष्ट

स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत्कलभैरनुद्रुतः ॥ गिरिं गरिम्णा परितः प्रकम्पयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥ २३ ॥ सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः ॥ वृतः स्वयूथेन तृषाऽर्दितेन तत्सरोवराभ्याशमथागमद्द्रुतम् ॥ २४ ॥ विगाह्य तस्मिन्नमृताम्बुनिर्मलं हेमारविन्दोत्पलरेणुवासितम् ॥ पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन् गतक्लमः ॥ २५ ॥ स्वपुष्करेणोद्धृतसीकराम्बुभिर्निपाययन् संस्नपयन् यथा गृही ॥ घृणी करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥ तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ॥ यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥

नालोचितवानित्यन्वयः। तत्र हेतुः—घृणीति, तेषु कृपायुक्त इत्यर्थः। तत्रापि हेतुः। अजस्य भगवतो मायया कृपणस्तेष्वासक्तः दुर्मदश्च। तत्र दृष्टान्तमाह—यथा गृही गृहाद्यासक्तः पुरुष इत्यर्थः ॥ २६ ॥ प्राप्तं कष्टमेव दर्शयति—तमिति। हे नृपेति सम्बोधनेन यथा कदाचिन्नृपस्य वैरिभिः प्रतिरोधो भवति तथेति सूचयति। तत्र सरसि दैवेन प्रारब्धकर्मानुगुण प्रवृत्तेनेश्वरेण चोदितः कश्चिद्बलीयान् ग्राहो मकरस्तं गजेन्द्रं चरणे पादे रुषा क्रोधेनाग्रहीत् जग्राह। स गजेन्द्रो यदृच्छया दैवेनैवं व्यसनं दुःखं गतः प्राप्तः सन् यतोऽतिबलोऽतो यथाबलं स्वबलानुसारेण विचक्रमे आत्मानं मोचयितुं पराक्रममकरोदित्यन्वयः ॥ २७ ॥

---

१ 'जिघ्रन्नदूरात्' इति पुस्तकान्तरेषु पाठो दृश्यते।

तथा बलीयसा ग्राहेण तरसा बलेन विकृष्यमाणं अतएवातुरं विवशं यूथपतिं गजेन्द्रप्रति दीनाधियः करेणवो विचुक्रुशुः रुरुदुः । पार्ष्णिग्रहाः पृष्ठत उपोद्बलका अन्ये च गजास्तं तारयितुं ततो विमोचयितुं नाशकन् नाशक्नुवन्नित्यन्वयः ॥ २८ ॥ हे महीपते इभेन्द्रनक्रयोर्गजेन्द्रग्राहयोरेवं मिथो नियुद्ध्यतोः सप्राणयोर्जीवतोरेव सहस्रं समाः संवत्सरा व्यगमन् अतिक्रान्ता बभूवुः । तद्दृष्ट्वाऽमरा देवा अपि चित्रं आश्चर्यममंसत मेनिरे इत्यन्वयः । तयोर्नियुद्धमेव स्पष्टयंस्तौ विशिनष्टि—अन्तरतो बहिश्च विकर्षतोरिति । एवं तु युद्धं महीपतीनामपि दुर्घटमिति सम्बोधनेन सूचितम् ॥ २९ ॥ ततः संवत्सरसहस्रानन्तरं दीर्घेण भूयसा कालेन जले विकृष्यमाणस्य अतएव अवसीदतः खिद्यतः गजेन्द्रस्याहारसञ्चाराभावात् मनआदीनां महान् व्ययः क्षयोऽभूदित्यन्वयः । तत्र मन उत्साहशक्तिः, बलं शरीरशक्तिः, ओज इन्द्रियशक्तिः । जलमोकः स्थानं यस्य तस्य ग्राहस्य तु जलरूपाहारसद्भा-

तथाऽऽतुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ॥ विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥ नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ॥ समाः सहस्रं व्यगमन्महीपते सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥ ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः ॥ विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्सकलं जलौकसः ॥ ३० ॥ इत्थं गजेन्द्रः स यदाऽऽप सङ्कटं प्राणस्य देही विवशो यदृच्छया ॥ अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥ न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् ॥ ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥ ३२ ॥

रसद्भावात् सकलं मनआदिकं विपर्ययोऽधिकमभूदित्यर्थः ॥ ३० ॥ स गजेन्द्रो यदा इत्थं यदृच्छया विवशो ग्राहवशस्तत आत्मानं विमोचयितुमपारयन् प्राणस्य सङ्कटं प्राणस्थितावपि संशयं प्राप, यतो देही देहभृत् आहाराभावेन देहधारणासम्भवात्, तदाऽऽत्मविमोक्षणे चिरं दध्यौ कथं ग्राहान्मम विमोक्षणं स्यादिति चिरं चिन्तितवान् । अथानन्तरमिमां वक्ष्यमाणा बुद्धिमभ्यपद्यत प्राप ॥ ३१ ॥ ता बुद्धिमेवाह— न मामिति । आतुरं ग्राहवशवर्तितया व्याकुलं मामिमे ज्ञातयो गजा मोचितु न प्रभवन्ति तदा करिण्यः कुतः प्रभवेयुः । अतो विधातुर्दैवस्य पाशरूपेण ग्राहेणावृतो निबद्धोऽप्यहं तमेव विधातारं परं परमेश्वरं यामि ग्राहादात्मानं विमोचयितुं शरणं व्रजामीत्यर्थः । ननु सोऽपि विमोचयितुं कथं प्रभवेदित्यत आह—परायणमिति, परेषां ब्रह्मादीनामपि अयनमाश्रयः ॥ ३२ ॥

१ गजेन्द्रस्य मनआदीना व्ययोऽभूत्, ग्राहस्य तु तद्विपर्ययोऽधिकमित्यर्थ ।

कोऽसावीश्वरो यं शरणं व्रजसीत्यपेक्षायामाह— य इति। अन्तं विनाशं करोतीत्यन्तको मृत्युः स एवोरगो महासर्पस्तस्मादभिधावतः सर्वत्रागच्छतो भीतमत एव प्रपन्नं स्वशरणागतं जनं यः कश्चनेशः परिपाति। मृत्युश्च यस्य भयात् प्रधावति सर्वप्राणिषु प्रवर्तते। तथाच श्रुतिः—"भीषास्माद्वातः पवते ॥ भीषोदेति सूर्यः ॥ भीषास्मादग्निश्चेन्द्रश्च ॥ मृत्युर्धावति पञ्चमः" इति। 'यद्वा मृत्युरस्मादपैति' इति दशमोक्तेर्मृत्युः शरणागतान्निवर्तते तमेवारण शरणमीमहि व्रजेमेत्यर्थः। तच्छरणमन्तरेण मृत्युर्नैव निवर्तते इत्याशयेन तं विशिनष्टि—बलिन इति। ब्रह्मादीनामपि विनाशकादित्यर्थः। तत्र हेतुमाह—प्रचण्डवेगादिति, दुर्द्धर्षवेगादित्यर्थः ॥ ३३ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र हरिसंस्मृतिरूपणे ॥ द्वितीयो विवृतोऽध्यायोऽप्यर्थसिद्धिनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ तृतीये तु गजेन्द्रस्य पूर्वाराधनयोगतः ॥ हरिं संस्मरतस्तस्मात् कामप्राप्तिर्निरूप्यते ॥ १ ॥ ॥ 'तत्र तं बुद्धि-

**यः कश्चनेशो बलिनोऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम् ॥ भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे आपत्सु हरिसंस्मरणप्रकरणेऽर्थनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ॥ जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥ गजेन्द्र उवाच ॥ नमो भगवते तस्मै यत एतच्चिदात्मकम् ॥ पुरुषायादिबीजाय परेशायाभिधीमहि ॥ २ ॥**

संयोगं लभते पौर्वदेहिकम् ॥ यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः' इति भगवदुक्तिरीत्यैवं कृतनिश्चयो गजेन्द्रः पूर्वजन्माभ्यस्तं स्तोत्रं जजापेत्याह— एवमिति। एवं व्यवसितः कृतनिश्चयो गजेन्द्रो बुद्ध्या मनो हृदि समाधाय स्थिरीकृत्य विषयान्तरेभ्यः प्रत्याहृत्य प्राग्जन्मनि इन्द्रद्युम्नसञ्ज्ञके जन्मनि अनुशिक्षितमभ्यस्तं परमं जाप्य स्तोत्र जजापेत्यन्वयः ॥ १ ॥ स्तोत्रमेव दर्शयति—नम इति। यतश्चिद्रूपादेतद्देहेन्द्रियादिक चिदात्मक चेतन भवति तस्मै शास्त्रप्रसिद्धाय भगवते ऐश्वर्यादिषड्गुणपूर्णाय नमो नमनमभिधीमहि केवलमभिध्यायेम, ग्राहगृहीतत्वेन कायप्रणतेरशक्यत्वात्। एवं प्रकाशकत्वमुक्त्वा नियन्तृत्वेन प्रणमति—पुरुषायेति। अन्तर्यामितया पूर्षु शेते तिष्ठतीति तथा तस्मै नमः। परमकारणतया प्रणमति—आदिबीजायेति। सर्वपालकत्वेन प्रणमति—परेशायेति, परेषा ब्रह्मादीनामपीशाय पालकाय नमः ॥ २ ॥

परमैश्वर्यं विवृण्वन् शरणं व्रजति—यस्मिन्निति । यस्मिन्नधिष्ठाने इदं विश्वं तिष्ठति, यतश्चोपादानादिदं भवति, येन कर्त्रा येन साधनेन चेदं क्रियते, यश्च स्वयमेवेदं भवति, योऽस्मात् स्थूलात् कार्यात् परस्मात्सूक्ष्मात्कारणाच्च परस्तं स्वयम्भुवं स्वतस्सिद्ध प्रपद्ये शरणं व्रजामीत्यर्थः ॥ ३ ॥ सर्वसाक्षित्वं दर्शयन् स्वरक्षां प्रार्थयते— य इति । यः स्वात्मनि स्वस्मिन्नेव निजमाययाऽर्पित स्वसङ्कल्पमात्रेण विरचितं क्वचित्कदाचित् सृष्टिसमये स्थूलकार्यतया विभातमभिव्यक्तं क्वच प्रलये तत्तिरोहितं सूक्ष्मकारणरूपेण लीनं च तत्कार्यकारणात्मकमुभयमपीक्षते पश्यति स मामवतु रक्षत्वित्यन्वयः । एव सर्वं पश्यतोऽपि विकारित्व स्यादित्याशङ्क्याह— साक्षीति । तथापि लौकिकसाक्षिवल्लुप्तज्ञानत्वं स्यादित्याशङ्क्याह—अविद्धदृगिति, अलुप्तदृष्टिरित्यर्थः । तत्र हेतुमाह—परात्पर इति, परात् ब्रह्मणोऽपि परः कारणभूत इत्यर्थः । नन्वेवमपि तस्यापि कश्चिदुत्पादकः स्यादित्याशङ्क्याह—आत्ममूल इति, अनन्यकारण इत्यर्थः ४ ॥ क्वच तत्तिरोहितमिदमीक्षत इत्युक्तम्, तज्जगत्तिरोभूय कां दशामापद्यते, स च तद्दशायां कथम्भूतोऽवस्थितस्तदी-

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ॥ योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥ यः स्वात्मनीदं निजमाययाऽर्पितं क्वचिद्विभातं क्वच तत्तिरोहितम् ॥ अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥ कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु ॥ तमस्तदाऽऽसीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥ न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ॥ यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥

क्षत इत्यपेक्षायां तद्दर्शयति । जगदभिव्यक्तदशायामपि तस्य दुर्ज्ञेयत्वमाह— कालेनेति द्वयेन । द्विपरार्धावसानरूपेण कालेन निमित्तेन कृत्स्नशो लोकेषु चतुर्दशभुवनात्मकेषु तथा तत्पालेषु ब्रह्मादिशरीरेषु च पञ्चत्वं पञ्चमहाभूतात्मकत्वं इतेषु प्राप्तेषु तथा सर्वहेतुषु महत्तत्त्वादिषु च प्रकृतौ लीनेषु सत्सु तदा गहनं दुरवगाहं दुःखबोधं वा गभीरमनन्तं तमः प्रकृत्याख्यमासीत् । यस्तस्य पारः तेनानभिभूतः संस्तस्याश्रयभूतो विभुर्व्यापकोऽभितो विराजते ॥ ५ ॥ सत्त्वप्रधाना देवादयोऽपि यस्य पदं यथावत्स्वरूपं न विदुस्तर्हि पुनरन्यो रजस्तमःप्रधानो जन्तुः प्राणी तं गन्तुं ज्ञातुमीरितुं वर्णयितुं वा कोऽर्हति । एवं दुरत्ययं दुर्गममनुक्रमणं चरितं कथन वा यस्य स मामवत्विति द्वयोरन्वयः । अज्ञाने दृष्टान्तमाह—यथेति । यथा राजादिनानाकृतिभिर्विचेष्टतो नटस्य स्वरूपं जनो न जानाति तथा देवाद्यवतारैर्विचेष्टतो भगवतोऽपि स्वरूपं देवादयो न जानन्तीत्यर्थः । ६ ।

एवं देवादीनां दुरवगमस्यापि स्वभक्तानां सुलभत्वं सूचयंस्तत्प्राप्तिं प्रार्थयते— दिदृक्षव इति । यस्य पदं स्वरूपं दिदृक्षवः साक्षात्कर्तुमिच्छवः विमुक्तसङ्गाः विमुक्तो दारपुत्रादिषु शब्दादिविषयेषु च सङ्गो यैस्तथाभूताः तथा भूतात्मभूताः भूताना प्राणिनामात्मभूताः स्वात्मसमदर्शिनश्च सन्तो वने स्थिताः अव्रणमच्छिद्रं निरन्तरमलोकव्रतं ब्रह्मचर्यादिपूर्वकं भगवद्ध्यानजपादिरूपं चरन्ति कुर्वन्तीत्यन्वयः । कथमेवं तस्य स्वरूपं दुर्लभमलौकिकं येन सर्वं त्यक्त्वा तद्दर्शनार्थं यत्नं कुर्वन्तीत्याशङ्क्याह—सुमङ्गल इति, परमानन्दात्मकतया परमपुरुषार्थरूपत्वादित्यर्थः । तर्हि कथं सर्व एव तदर्थं यत्नं न कुर्वन्तीत्यपेक्षायामाह—मुनय इति, मननशीला इत्यर्थः । तत्र हेतुमाह—सुहृद इति, विशुद्धान्तःकरणा इत्यर्थः । तत्रापि हेतुमाह—साधव इति, अनेकजन्मस्वनुष्ठितसाधना इत्यर्थः । स सच्चिदानन्दविग्रहो भगवान् मे मम गम्यते इति गतिः प्राप्तव्योऽस्त्विति ॥ ७ ॥ नन्वस्मदादिवद्भगवतोऽपि जन्मकर्मादिदर्शनात् कथं तस्योपास्यत्वमित्याशङ्क्याह— नेति । यद्यप्यस्मदादिवत् प्रारब्धकर्माधीनं यस्य जन्मादि न विद्यते

दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः ॥ चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ॥ ७ ॥ न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा ॥ तथाऽपि लोकाप्ययसम्भवाय यः स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥ तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ॥ अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥ नम आत्मप्रदीपाय साक्षिणे परमात्मने ॥ नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥ सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ॥ नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥

तथापि लोकस्य अप्ययः प्रलयः सम्भव उत्पत्तिस्तयोर्द्वन्द्वैक्यं तदर्थं स्वमायया स्वेच्छया तानि जन्मादीनि अनुकालं तत्तदवसरे य ऋच्छति स्वीकरोति तस्मै परेशाय नम इत्युत्तरेणान्वयः ॥ ८ ॥ परेशत्वमेव प्रपञ्चयन् प्रणमति— ब्रह्मणे परिपूर्णाय । अनन्ता शक्तयो यस्य तस्मै । अरूपाय प्रारब्धाधीनप्राकृतस्वरूपरहिताय । स्वेच्छया उरूणि बहूनि रूपाणि यस्य तस्मै । आश्चर्यं विश्वसृष्ट्यादिरूपं कर्म यस्य तस्मै ॥ ९ ॥ आत्मनैव प्रदीप्यते इत्यात्मप्रदीपः स्वयम्प्रकाशस्तस्मै । साक्षिणे विकाररहितत्वे सति साक्षात्सर्वद्रष्ट्रे । परमात्मने सर्वान्तर्यामिणे । गिरां वाचा मनसश्चेतसां चित्तवृत्तीनां च विदूराय अविषयाय ॥ १० ॥ विपश्चिता विवेकिना भक्तेन प्रतिलभ्याय नमः । ननु विवेकः कथ भवतीत्यपेक्षायां 'सत्त्वात्सञ्जायते ज्ञानं' इति वाक्यादुद्भूतेन सत्त्वगुणेनेत्याह— सत्त्वेनेति । तर्हि सत्त्वोद्भवोऽपि कथमित्यपेक्षायामाह— नैष्कर्म्येणेति, उपादानात्मकेन निवृत्तिधर्मेणेत्यथः । तथाचोक्तं

द्वितीये—'यदङ्घ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्त्वमात्मन'" इति। कैवल्य प्रकृतिसम्बन्धराहित्यमोक्षाख्यं तस्य नाथाय अधिपतये दात्रे नमः। निर्वाणसुखसंविदे निर्दुःखानन्दज्ञानस्वरूपाय नमः॥ ११ ॥ शान्ताय अशनापिपासाकामक्रोधलोभमोहादिरहिताय नमः। घोराय दुष्टाना भयङ्करनरसिंहादिस्वरूपाय नमः। गूढाय सर्वत्र विद्यमानत्वेऽपि अप्रकटाय। गुणधर्मिणे गुणाः सत्वादयो धर्मतयाऽधिष्ठेयतया विद्यन्तेऽस्येति तथा तस्मै नमः। निर्विशेषाय प्राकृतदेहेन्द्रियादिरहिताय नम.। तत्र हेतुमाह—ज्ञानघनायेति, सच्चिदानन्दविग्रहायेत्यर्थः। अतएव साम्याय कामक्रोधादिप्रयुक्तवैषम्यरहिताय नम.॥ १२ ॥ क्षेत्र शरीरेन्द्रियादिसङ्घात जानातीति तथा तस्मै नम.। तथापि निर्विकारित्वमाह—साक्षिण इति। सर्वाध्यक्षाय सर्वाधिपतये पुरुषाय सर्वान्तर्यामिणे नम.। आत्ममूलाय स्वत सिद्धाय सर्वेषा मूलप्रकृतये परमकारणाय नम.॥ १३ ॥ सर्वेषामिन्द्रियाणा तद्गुणाना शब्दादिविषयाणा च द्रष्ट्रे। सर्वे ये प्रत्ययाः प्रमाणसंशयविपर्ययादयस्तेषा हेतवे। 'मत्त. स्मृतिर्ज्ञानमपोहन च' इति

नमः शान्ताय घोराय गूढाय गुणधर्मिणे ॥ निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥ क्षेत्रज्ञाय नमस्तुभ्य सर्वाध्यक्षाय साक्षिणे ॥ पुरुषायाऽऽत्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥ सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ॥ असता च्छाययोक्ताय सदाभासाय ते नम.॥ १४ ॥ नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय ॥ सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥

वचनात्। असता जडेन देहेन्द्रियादिसङ्घातेन छायया अविनाभूतेन उक्ताय चैतन्यतया सूचिताय, तदुक्त तृतीये—'यथा जलस्थ आभासः स्थलस्थेनावदृश्यते' इत्यादिना। अक्तायेति पाठे छायया अध्यासेन अक्ताय युक्ताय तदधिष्ठानायेत्यर्थः। 'प्रकृतिरस्योपादानमाधारः पुरुष. पर.' इति वक्ष्यमाणत्वात्। तत्र हेतुमाह—सदाभासायेति। सत्सु कार्येषु देहेन्द्रियादिषु आभासो यस्य तस्मै नमः॥ १४ ॥ अस्मिन् स्तोत्रे द्विरुक्तिस्त्रिरुक्तिश्च बहुश उपलभ्यते सा च ग्राहगृहीततया भक्त्यौत्कण्ठ्येन च व्याकुलत्वेन पूर्वापरानुसन्धानाभावादिति बोध्यम्। अखिलकारणाय सर्वस्य प्रपञ्चमात्रस्य कारणरूपाय ते तुभ्य नमो नमोऽस्तु। निष्कारणाय अखिलकारणत्वेऽपि स्वय तु कारणान्तरासाध्याय। अद्भुतकारणाय कारणत्वेऽपि विकारराहित्येन मृदादिलौकिककारणतो विलक्षणाय। एवम्भूतत्वे प्रमाणमाह—सर्वेति। सर्वे आगमाः पञ्चरात्रादयः आम्नाया वेदाश्च तेषा महार्णवाय स्रोतसा समुद्र इव पर्यवसानभूमये। तत्र हेतुमाह—अपवर्गाय मोक्षरूपाय। अतएव परायणाय उत्तमानामाश्रयरूपाय॥ १५ ॥

१ 'असत्यच्छाययाक्ताय' इति 'असता छाययाक्ताय' इति च पाठान्तरद्वयम्।

सत्त्वादयो गुणा एवारणिस्तया च्छन्नं चिज्जीवसमष्टिरूपमूष्माणमाग्निं पिबति संहारकाले स्वस्मिन्नुपसंहृत्य यो निदधाति स तथोक्तस्तस्मै नमः। तेषा गुणाना क्षोभे कार्ये विस्फूर्जितं बहिर्वृत्तिकं मानसं मनो यस्य तस्मै नमः "सोऽकामयत बहुस्याम्" इति श्रुतेः। नैष्कर्म्यमात्मतत्त्वं तस्य भावो भावना तेन विवर्जिता निवर्तिता आगमा विधिनिषेधलक्षणा यैस्तेषा स्वयमेव प्रकाशो यस्य तस्मै नमस्करोमि ॥ १६ ॥ मादृक् मद्विधश्चासौ प्रपन्नः शरणागतश्चासौ पशुश्च पशुवदविद्यया निबद्धश्च तस्य पाशः अविद्या तस्य विशेषेण निर्मूलतया मोक्षणं यस्मात्तस्मै ते तुभ्यं नमः। तत्र योग्यता-माह— मुक्तायेति। स्वयमविद्यापारवश्यरहिताय ते नमः। स्वयं विमुक्तो स्वान्यान् विमोचयितुं योग्यो भवतीति भावः। पाशविमोक्षणमपि कृपामात्रेणैव तत्तु किञ्चित्स्वार्थमपेक्षते इत्याह—भूरिकरुणायेति। अतएव तत्र[1] अलयाय अनलसाय नमः, यद्वा न विद्यते लयो विनाशो भक्तानां यस्मात्स तथा तस्मै नमः 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' इति भगवदुक्तेः। स्वांशेन अन्तर्यामिरूपेण सर्वेषां तनुभृतां मनसि प्रतीतो[2] या प्रत्यक्

**गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ॥ नैष्कर्म्यभावेन विवर्जितागमस्वयम्प्रकाशाय नमस्करोमि ॥ १६ ॥**
**मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय ॥ स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्य-ग्दृशे भगवते बृहते नमस्ते ॥ १७ ॥ आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसङ्गविवर्जिताय ॥ मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥ १८ ॥ यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नु-वन्ति ॥ किन्त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १९ ॥**

दृक् तस्मै। भगवते ऐश्वर्यादियुक्तत्वेन सर्वथा समर्थाय। तनुभृता मनसि स्थितत्वेऽपि बृहते अपरिच्छिन्नाय ॥ १७ ॥ अन्तस्थत्वेऽप्यात्मादिषु सक्तैर्दुष्प्रापणाय दुखेनापि प्राप्तुमशक्याय नमः। तत्र आत्मा देहः आत्मजाः पुत्राः, आप्ता वृद्धाः, गृहाः, वित्तं धनं, जना भृत्यपश्वादयः, तेषु। तत्र हेतुमाह— गुणसङ्गविवर्जितायेति। गुणागुणकार्यं विश्वं तत्र सङ्ग आसक्तिस्तेन विवर्जिताय नमः। यो हि यत्सङ्गरहितः स तत्सङ्गरहितैरेव प्राप्यते समानशीलत्वात् तत्रासक्तैश्च न प्राप्यते विषमस्वभावत्वादिति भावः। अतएव मुक्तात्मभिः गुणकार्येषु रागादिविनिर्मुक्तमनोभिः स्वहृदये परितो भाविताय निरन्तरं चिन्तिताय नमः। तैः परिभावितं स्वरूपं प्रणमति— ज्ञानात्मने इति। सच्चिदानन्दविग्रहाय भगवते अचिन्त्यानन्तगुणपूर्णाय ईश्वराय सर्वनियन्त्रे नमः ॥ १८ ॥ धर्मादिचतुर्विधपुरुषार्थान् कामयमाना य भजन्तः सन्तः इष्टां स्वाभिप्रेतां गतिं धर्मादिफलं प्राप्नुवन्त्येव। न तु तावदेव, किन्तु यास्तैरकामिता अन्या अप्याशिषो भोगान् राति ददाति। अव्ययमनश्वरं देहं च राति स्वपार्षदं करोति। सोऽदभ्रदयोऽपारकरुणो विमोक्षणं करोतु,

१ तत्र करुणाया विषये। २ प्रतीता प्रख्यातेति श्रीधरस्वामिन।

नाधिकं प्रार्थये ॥ १९ ॥ भक्तिसुखानभिज्ञत्वेनैव अहं विमुक्तिं वाञ्छामि, ये भगवत्प्रपन्ना भगवन्तं शरणं प्राप्ताः यस्य भगवत एकान्तिनोऽनन्यपरा भक्तास्ते ये धर्मादिषु चतुर्विधपुरुषार्थेषु मध्ये कञ्चनाप्यर्थं न वाञ्छन्ति वै नेच्छन्ति । नन्ववलम्बनं विना मनसः स्थित्यसम्भवात्तेषां मनसः किमाम्बनमित्यपेक्षायामाह— तच्चरितमिति तस्य भगवतश्चरितं गायन्त एव आनन्दसमुद्रे निमग्ना भवन्ति । ननु तच्चरितगानस्य कथमेवमानन्दहेतुत्वमित्याशङ्क्य विशिनष्टि— अत्यद्भुतमिति, अत्यलौकिकमित्यर्थः । सुमङ्गलमिति अनेकजन्मसञ्चितदोषनिवर्तकमित्यर्थः ॥ २० ॥ तमहमीडे स्वविमुक्त्यर्थं स्तौमीत्यन्वयः । स एव विमोचयितुं शक्तो नान्य इत्याशयेन तं विशिनष्टि—अक्षरमित्यादिचतुर्भिः । अक्षर स्वरूपतो गुणतो वा क्षयरहितम् । ब्रह्म अन्तर्बहिश्च व्यापकम् । परं सर्वोत्तमम् । परेशं परेषां ब्रह्मादीनामपि नियन्तारम् । तथाऽप्यव्यक्तं चक्षुराद्यगम्यम् । तथापि आध्यात्मिकयोगेन भक्तियोगेन स्वकृपया गम्यम् । अव्यक्तत्वे हेतुमाह— अतीन्द्रियमिति, इन्द्रियाविषयमित्यर्थः । तत्रापि हेतुमाह— सूक्ष्ममिति । अतीन्द्रियत्वे दृष्टान्तमाह— अतीव दूरमिति, यथाऽतिदूरं

**एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः ॥ अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ २० ॥ तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ॥ अतीन्द्रियं सूक्ष्ममतीव दूरमनन्तमाद्यं परिपूर्णमीडे ॥ २१ ॥ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ॥ नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २२ ॥ तथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ॥ तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः ॥ २३ ॥**

वस्तु अतीन्द्रियं भवति तथेत्यर्थः । अनन्तं विनाशरहितम् । आद्यमादौ वर्तमानं सर्वकारणम् । अचिन्त्यानन्तगुणैः परिपूर्णम् ॥ २१ ॥ ब्रह्मादयो देवा वेदाः चराचरात्मका लोकाश्च नामरूपविभेदेन यस्य फल्ग्व्या स्वल्पया कलया अंशेनैव कृता रचिताः स जयतादिति तृतीयेनान्वयः ॥ २२ ॥ कथं कृता इत्यपेक्षायां दृष्टान्तद्वयमाह— यथेति । तत्र प्रवाहे दृष्टान्तमाह— यथाऽग्नेः सकाशादर्चिषः विस्फुलिङ्गाः । आनन्त्ये दृष्टान्तमाह— यथा च सवितुः सकाशाद्गभस्तयः असकृन्निर्यान्ति उद्भवन्ति संयान्ति पुनस्तत्रैव लीयन्ते । तत्र हेतुमाह— स्वरोचिष[3] इति, स्वरोचिष्ट्वेन स्वांशत्वात् । तथा बुद्धिर्मनः खानीन्द्रियाणि शरीरसर्गा देवादिशरीरसङ्घातश्चेत्येवं गुणसम्प्रवाहः गुणपरिणामप्रपञ्चो यतो निर्याति यत्र संयाति च तदंशत्वादित्यर्थः ॥ २३ ॥



१ सूक्ष्म परमाणुवत् । २ 'सूक्ष्ममिवातिदूर' इति कुत्रचित् पाठान्तरम् । ३ स्वरोचिष इत्येतदग्ने सवितुश्च विशेषणम्, स्वप्रकाशस्येत्यर्थ ।

स वै सर्वमूलकारणभूतो भगवान् देवादीनां मध्ये कतमोऽपि न भवति, यतो निषेधशेषः सर्वस्य देवादिप्रपञ्चस्य निषेधे प्रलयेऽपि शिष्यत इति। तथा पुनश्च सृष्ट्यवस्थायामशेषः सर्वरूपो भवति, स जयतात् मद्विमोक्षणायाविर्भवत्वित्यर्थः। सत् स्थूलं कार्यम्। असत् सूक्ष्मकारणम्। ननूक्तादतिरिक्तः कश्चित्प्राणी स्यादित्याशङ्क्याह— न जन्तुरिति। कश्चिदपि प्राणिविशेषो न भवतीत्यर्थः ॥ २४ ॥ बहुशो विमोक्षप्रार्थनया प्रकरणादयं ग्राहादेव विमोक्षं प्रार्थयते इति शङ्का मा भूदित्यभिप्रायेण स्वाभिप्रायमाविष्करोति— जिजीविष इति। अहं न जिजीविषे ग्राहाच्छरीरस्य मोक्षणेन जीवितुं नैवेच्छामीत्यर्थः। तत्र हेतुमाह— इहेति। इह दुःखालये संसारे अन्तर्बहिश्चावृतया दुःखेन व्याप्तया अमुया इभयोन्या गजशरीरेण किं प्रयोजनं? न किमपीत्यर्थः। किन्तु यस्यात्मलोकावरणस्य स्वात्मरूपप्रकाशावरणस्याज्ञानस्य कालेन विप्लवो विनाशो नास्ति तस्यैव मोक्षं निवृत्तिमिच्छामीत्यन्वयः। ग्राहाद्विमोक्षणं तु कालेन निमित्तेनान्यतरदेहनाशादपि स्यादेवेति भावः ॥ २५ ॥ नन्वेवं विमोचकस्य परमोपकारिणो मम त्वया कः

**स वै न देवासुरमर्त्यतिर्यङ् स्त्री न षण्ढो न पुमान्न जन्तुः॥ नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः॥ २४॥**
**जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या॥ इच्छामि कालेन न यस्य विप्लवस्तस्याऽऽत्मलोकावरणस्य मोक्षम्॥ २५॥ सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम्॥ विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परम्पदम्॥ २६॥**
**योगरन्धितकर्माणो हृदि योगविभाविते॥ योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम्॥ २७॥**

प्रत्युपकारः कार्य इत्यपेक्षाया केवलनमस्कारमात्रमेव नातोऽधिकं किञ्चित्तव सर्वोत्तमत्वेन पूर्णकामत्वादित्याशयेनाह— सोऽहमिति। सोऽहं मुमुक्षुः परं पदं प्राप्तव्य उत्तमं भगवन्तं प्रणतोऽस्मीत्यन्वयः। सर्वोत्तमत्वमेव प्रपञ्चयति— विश्वसृजमिति, विश्वस्रष्टारमित्यर्थः। विश्वं विश्वरूपम्, अविश्वं विश्वव्यतिरिक्तं च। विश्वं वेदो धनं क्रीडोपकरणं यस्य तम्। विश्वात्मानं विश्वान्तर्यामिणम्। अजं जन्मादिविकाररहितम्। ब्रह्म सर्वव्यापकम्॥ २६॥ एवम्भूते भगवति किं शास्त्रमेव प्रमाणं किंवाऽस्त्यन्यदपि प्रमाणमित्यपेक्षायां महतामनुभवोऽपि तत्र प्रमाणमिति प्रदर्शयन् प्रणमति— योगेति। योगेन भक्तियोगेन ध्यानादिना रन्धितानि दग्धानि कर्माणि दर्शनप्रतिबन्धकानि पुण्यपापरूपाणि येषा ते योगिनो योगेन विभाविते शोधिते हृदि यं प्रपश्यन्ति साक्षात्कुर्वन्ति तं योगेशं योगफलदातारमहं नतोऽस्मि॥ २७॥

हृदि चेदस्ति तर्ह्यन्ये कुतो न पश्यन्तीत्यपेक्षायां तत्र हेतुं प्रदर्शयन् प्रणमति— नमोनम इति। इन्द्रियपारवश्येन विषयासक्तत्वान्न पश्यन्तीत्याशयेनाह— कदिन्द्रियाणामनवाप्यवर्त्मने इति। कुत्सितानि विषयाभिमुखानीन्द्रियाणि येषां तेषामनवाप्यं दुरवगम्यं वर्त्म मार्गोऽपि यस्य तस्मै तुभ्य नमोनमोऽस्त्वित्यन्वयः। कथमेवमिन्द्रियपारवश्यमपीत्यपेक्षायां तच्छक्त्यैवेत्याशयेनाह—असह्यवेगशक्तित्रयायेति। असह्यः अप्रतिहतः वेगो यस्य तथाभूतं शक्तित्रयं सत्वादिगुणत्रयात्मकं यस्य तस्मै नमः। तस्यापि शक्तित्रयस्य कादाचित्कशङ्कां वारयति— दुरन्तशक्तय इति। दुरन्ता विनाशरहिताः शक्तयो यस्य तस्मै। अतः शुभाशुभान्तःकरणवृत्तयोऽपि तदधीना एव तस्यान्तर्यामित्वादित्याह—अखिलधीगुणायेति। अखिला धीगुणाः संशयविपर्ययादिवृत्तयो यस्मात्तस्मै नमः। अतस्तदेकशरणस्यैव तत्कृपया संसारदुःखनिवृत्तिर्नान्यथेत्याह— प्रपन्नपालायेति। प्रपन्नानां शरणागतानां पालाय रक्षित्रे नमः॥ २८॥ अतएव यस्य शक्त्या अविद्याख्यया या देहेन्द्रियादावहन्धीस्तया हतमावृतं स्वमात्मानं स्वरूपभूतं आत्मानं अयं जनो न वेद, तं दुरत्ययमाहात्म्यं अनतिक्रमणीयप्रभावं भगवन्तमचिन्त्यानन्तगुणपूर्णमहमितोऽस्मि शरणमागतोऽस्मीत्यन्वयः॥ २९॥ एवमुक्तप्रकारेण

नमोनमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय॥ प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने॥ २८॥
नायं वेद स्वमात्मानं यच्छक्त्याऽहन्धिया हतम्॥ तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम्॥ २९॥
श्रीशुक उवाच॥ एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः॥ नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत्॥ ३०॥

उपवर्णितनिर्विशेषं ब्रह्मादिषु विद्यमानासाधारणचिह्नविशेषरहितं भगवत्स्वरूपं येन तं गजेन्द्रं यदा ते ब्रह्मादयो नोपससृपुः नोपजग्मुस्तत्र तदा हरिसञ्ज्ञको भगवान् हरिमेधसः सकाशात् हरिण्या तद्भार्यायां यो जातः स आविरासीदिति शेषेणान्वयः। पूर्वं तथोक्तत्वात्। ब्रह्मादीनां तत्रानागमने हेतुमाह—विविधेति। विविधानि यानि लिङ्गानि चतुर्मुखत्वहंसवाहनत्वत्र्यक्षत्ववृषभवाहनत्वशूलपाणित्वादीनि तत्प्रयुक्ता भिदा मूर्तिभेदस्तस्याभिमानो येषां ते तथा, तथाच गजेन्द्रेण तथा वर्णितत्वात्। प्रत्युत 'यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः॥ नामरूपविभेदेन फल्ग्व्या च कलया कृताः' इति तुच्छत्वेन निरूपणात्। न वयमनेन स्तुता इत्यभिमानेन नोपजग्मुरिति भावः। भगवदाविर्भावे हेतुमाह— निखिलात्मकत्वादिति, 'यस्मिन्निदं यतश्चेद' इत्यादिवर्णितरूपत्वादित्यर्थः। तर्हि भगवति देवानां मत्सरो जातो भविष्यतीति शङ्कानिरासायाह— अखिलामरमय इति। 'इन्द्रादयो बहवो लोकपाला देवा नारायणाङ्गजाः' इत्यादिवाक्यात् सर्वदेवतामूर्तित्वेन तस्मिन्न तेषा मत्सर इत्यर्थः॥ ३०॥

अतएव देवैर्भगवतः स्तुतिः कृता तैः सह भगवान् गजेन्द्रसमीपे आगत इत्याह— तामिति । तद्वदार्तं तथा ग्राहेण पीडितं तं गजेन्द्रमुपलभ्य ज्ञात्वा तत्कृतं स्तोत्रं च निशम्य श्रुत्वा चक्रायुधः ग्राहमुखविदारणार्थं चक्रं गृहीत्वा छन्दोमयेन वेदरूपेणोपास्यमानेन गरुडेन समुह्यमानः सम्यक् शैघ्र्यातिशयेन प्राप्यमाणः सम्यक् नम्रीभावेन स्तुवद्भिः स्तुतिं कुर्वद्भिर्दिविजैः देवैः सह यतो यत्र गजेन्द्र आसीत्तत्राशु अभ्यगमत् आजगामेत्यन्वयः । कथं भगवतस्तदार्तिज्ञानमित्यपेक्षायामाह— जगन्निवास इति, यतोऽयं जगति कृत्स्नेऽन्तर्यामितया साक्षितया च वसतीति तथेत्यर्थ. ॥ ३१ ॥ स गजेन्द्रः अन्तस्सरसि सरोमध्ये उरुबलेन महाबलेन ग्राहेण गृहीतः अतएवार्तः पीडितः खे आकाशे गरुत्मति गरुडे स्थितमुपात्तचक्र गृहीतचक्र हरिं स्वक्लेशहारक भगवन्त दृष्ट्वा ' रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्' इतिवचनात् भगवच्चरणयोः समर्पयितु शुण्डाग्रेण अम्बुजानि गृहीत्वा साम्बुज करं शुण्डादण्डमुत्क्षिप्य उद्धृत्य हे नारायण सर्वकारणकारण हे अखिलगुरो सर्वपूज्य हे भगवन् ऐश्वर्यगुणगणार्णव ते तुभ्यं नम इति गिर कृच्छ्रात् ग्राहगृहीतत्वेनातिकष्टादाहे-

तं तद्वदार्तमुपलभ्य जगन्निवास· स्तोत्रं निशम्य दिविजैः सह सस्तुवद्भि· ॥ छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥ ३१ ॥ सोऽन्तस्सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ॥ उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते ॥ ३२ ॥ तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुचदुच्छ्रियाणाम्[1] ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे आपत्सु हरिसंस्मरणप्रकरणे गजेन्द्रस्य कर्मसिद्धिनिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥

त्यन्वयः ॥ ३२ ॥ अजः जन्मादिविकाररहितो भगवान् त गजेन्द्रं पीडित वीक्ष्य गरुडोऽपि मन्दगामीति सहसा झटिति ततोऽवतीर्य अवरुह्य आशु शीघ्रमेव सरसः सकाशात् सग्राह ग्राहेण सहितं त कृपयैवोज्जहार वामेन हस्तेन शुण्डा गृहीत्वा बहिर्निष्काशितवान् । ततो दक्षिणहस्तस्थेन अरिणा चक्रेण विपाटितं मुख यस्य तस्मात् ग्राहात् गजेन्द्र हरिरमूमुचत् मोचयामासेत्यन्वयः । स्वभक्तस्य गजेन्द्रस्य विमोक्षणे देवानामुपेक्षामालक्ष्य तेषामपि भगवाननादर कृतवानिति सूचयन्नाह—~~उच्छ्रियाणा देवाना सम्पश्यतामिति~~ ॥ ३३ ॥ इति श्रीवल्लभाचार्यवश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र हरिसंस्मृतिरूपणे ॥ तृतीयो विवृतोऽध्यायः कामसिद्धिनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

---

१ ' उस्रियाणाम् ' इति श्रीधरीयपाठ एव सर्वसम्मतो दृश्यते उच्छ्रियशब्दस्य देवपर्यायत्वे प्रमाणाभावात् ।

चतुर्थे स्तोत्रभक्तिभ्या तुष्टेन परमात्मना ॥ मोचितस्य गजेन्द्रस्य मोक्षसिद्धिर्निरूप्यते ॥ १ ॥ ॥ एवं स्वभक्ते भगवतः कृपातिरेकं दृष्ट्वा देवादिकृतो महानुत्सवो जातस्तं दर्शयति– तदेति। तदा गजेन्द्रमोचनदशायां ब्रह्मा चतुर्मुखः ईशानो रुद्रश्च पुरोगमः अग्रेसरो येषां ते देवादयस्तद्गजेन्द्रमोक्षण-रूपं हरेः अद्भुतकर्म प्रशंसन्तस्तस्मिन् कुसुमासारं कुसुमवृष्टिं मुमुचुरित्यन्वयः ॥ १ ॥ देवाना दुन्दुभयो नेदुर्गन्धर्वा ननृतुर्जगुश्च। ऋष्यादयः पुरुषोत्तम भगवन्तं तुष्टुवुरित्यन्वयः ॥ २ ॥ योऽसौ ग्राहः स वै पूर्वजन्मनि हूहूनामको गन्धर्वसत्तमः आसीत्। वैशब्द इतिहासोक्तकथाप्रसिद्धि-सूचनार्थः। तथाहि सरसि स्त्रीभिः सह क्रीडन्नसौ स्नातुं प्रविष्ट देवलं पादे प्रगृह्य विचकर्ष स च कुपितो ग्राहो भवेति शशाप, पुनश्च तेन प्रसादितः सन्नुवाच एवमेव गजेन्द्रं गृहीतवन्तं त्वा हरिर्मोचयिष्यतीति देवलशापेन ग्राहो जातः, स भगवत्स्पर्शेन शापान्मुक्तः सद्यः परमाश्चर्यरूपधृक् सन्

श्रीशुक उवाच ॥ तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ॥ मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥
नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ॥ ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥ योऽसौ ग्राहः स
वै सद्यः परमाश्चर्यरूपधृक् ॥ मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥ प्रणम्य शिरसाऽधीशमुत्तमश्लोक-
मव्ययम् ॥ अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥ सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ॥
लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥ गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात् ॥
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥

अधीश भगवन्तं शिरसा प्रणम्य तमगायतेति द्वयोरन्वयः ॥ ३ ॥ अधीशत्वे हेतुमाह–अव्ययमिति, स्वरूपतो गुणतश्चापक्षयशून्यम्। यशसो धाम आश्रयस्तम्। तद्यशोगाने हेतुमाह– कीर्तन्याः कीर्तनीयाः गुणाः सत्यः कथाश्च यस्य तम्। कीर्तनीयत्वे हेतुमाह– उत्तमश्लोकमिति, तमः अविद्या उद्गच्छति तमो यस्मात्स उत्तमः श्लोको यस्य तमविद्यानिवर्तकयशसमित्यर्थः ॥ ४ ॥ स हूहूनामको गन्धर्वो लोकस्य ब्रह्मादिजनस्य पश्यतः सतः ईशेन हरिणाऽनुकम्पितः कृपाविषयीकृतस्तं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्य च स्वं स्वकीयं गन्धर्वलोकमगादित्यन्वयः। तत्र हेतुमाह– मुक्त-किल्बिष इति, यतो देवलशापाद्विनिर्मुक्त इत्यर्थः ॥ ५ ॥ गजेन्द्रस्तु भगवतो हरेः स्पर्शाद्धेतोरज्ञानलक्षणबन्धनाद्विमुक्तः सन् भगवतो रूपं भगवत्सारूप्यं प्राप्तः। तदेव दर्शयति– पीतं पिशङ्गं वासो वस्त्रं यस्य सः, चत्वारो भुजा यस्य सः ॥ ६ ॥

गजेन्द्रस्य पूर्वजन्मनि किं साधनं येनेदृशं फलं जातमित्यपेक्षायामाह— स वा इति । स वै गजेन्द्रः पूर्वस्मिन् जन्मनि पाण्ड्यः पाण्ड्यदेशपतिः द्रविडदेशनिवासिषु श्रेष्ठः इन्द्रद्युम्नाख्यो राजाऽभूत् बभूव । स च विष्णुव्रतं श्रीविष्णुभजनात्मकमेव परमुत्कृष्टमयनमनुष्ठेयतया आश्रयो यस्य तादृश आसीत् ॥ ७ ॥ स इन्द्रद्युम्न एकदा भगवदाराधनकाले ईश्वरं सर्वनियन्तारं अच्युतं सर्वत्र सर्वदा स्वरूपतो गुणतश्च च्युतिरहितं हरिं सम्यगर्चयामास पूजितवानित्यन्वयः । पूजावस्थापन्नं तं विशिनष्टि—आत्मवानिति, वशीकृतचित्त इत्यर्थः । गृहीतं मौनात्मक व्रत येन सः । जटा बिभर्तीति जटाधरः । तापसस्तपोनिष्ठः । आप्लुतः कृतस्नानः । कुलाचले मलयाद्रावाश्रमो यस्य सः ॥ ८ ॥ तदा शिष्यगणैः परिश्रितः परिवृत्तः महायशा मुनिरगस्त्यस्तत्र इन्द्रद्युम्नाश्रमे यदृच्छया ईश्वरेच्छयैव समागमत । रहस्येकान्ते उपासीनमुपविष्टं तमिन्द्रद्युम्नं वीक्ष्य ऋषिरगस्त्यश्चुकोपेत्यन्वयः । कोपे

स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ॥ इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥ स एकदाऽऽराधन-
काल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् ॥ जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः ॥ ८ ॥
यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः ॥ तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्यु-
पासीनमृषिश्चुकोप ह ॥ ९ ॥ तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य ॥ विप्रावमन्ता विशतां तमोऽन्धं
यथा गजः स्तब्धमतिः स एव ॥ १० ॥ श्रीशुक उवाच ॥ एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः ॥
इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥

हेतुमाह— तूष्णीमिति, वाचाऽप्यकृतसत्कारमित्यर्थः । अकृतेति, अकृतं असमर्पित अर्हणादिकं अर्घ्यादिकं येन तमित्यर्थः । ईदृशस्य भागवतस्यापीदृङ्महाकोपादिविषयता जातेति स्वखेदं सूचयति— हेति ॥ ९ ॥ क्रुद्धश्च तस्मै इन्द्रद्युम्नाय इमं शापमदात् । शापमेव दर्शयति—विशता तमोऽन्धमिति, अज्ञानबहुला पशुयोनिं प्राप्नोत्वित्यर्थः । शापे हेतुमाह—अयमिति, दुरात्मा दुष्टचित्त इत्यर्थः । कथं दुरात्मत्व तत्राह—अकृतबुद्धिरिति, अकृता अशिक्षिता बुद्धिर्यस्य स तथेत्यर्थः । कथं तथात्वमित्यपेक्षायामाह— यतोऽय विप्रानवमन्यते परिभवतीति तथा । शापमेव स्पष्टयति— यतो यथा गजः स्तब्धमतिस्तथैवायमतः स एव गज एव, भवत्विति शेषः ॥ १० ॥ हे नृप भगवान् शापेन भ्रंशने समर्थः अगस्त्य एवं शप्त्वा सानुगः शिष्यैः सहितस्तत्स्थानात् गतः । राजर्षिः परमविवेकी इन्द्रद्युम्नोऽपि तत् शापात्मक दिष्टं स्वप्रारब्धफलमित्युपधारयन् निश्चिन्वन् ॥ ११ ॥

आत्मनः स्वस्वरूपस्य स्मृतिविनाशनीं कौञ्जरीं योनिमापन्नः प्राप्तः। ननु शापवशेन गजत्व प्राप्तस्य कथं पुनरात्मस्मृतिर्जाता तत्राह— हरीति। यद्गजत्वेऽप्यात्मपरमात्मनोरनुस्मृतिस्तद्धर्यर्चनानुभावेन पूर्वजन्मनि कृतभगवत्पूजाप्रभावेणैवान्यथा भगवतोऽगस्त्यस्य शापेनाभिभूतज्ञानत्वमेव स्यान्नैवमनुस्मृतिरित्यर्थः ॥ १२ ॥ अब्जनाभो ब्रह्मादिसर्वजनको भगवान् एवमुक्तप्रकारेण गजयूथपं गजेन्द्रं ग्राहात्ससाराच्च विमोक्ष्य पार्षदगतिं पार्षदसमानरूपं गमितेन प्रापितेन तेन-अपिशब्दात्स्वपार्षदैश्च युक्तः-गन्धर्वादिभिरुपगीयमान कर्म भक्तोद्धारपालनादिरूप यस्य स गरुडासनः गरुडस्योपरि विराजमानः अद्भुतमलौकिकं स्वभवनं वैकुण्ठमगात् ययावित्यन्वयः। तस्य सर्वमूलकारणभूतस्यैतदेव युक्तमित्यब्जनाभपदेन सूचितम् ॥ १३ ॥ यत्पृष्ट 'बादरायण एतत्ते'[1] इत्यादिना तस्योत्तरमुक्तमुपसंहरन् गजेन्द्रमोक्षकथाश्रवणकीर्तनफलमाह— एतदिति। भगवद्यशःश्रवणे त्वमुत्तमोऽधिकारीति सुगोप्यमपि तव कथितमिति सूचयन् सम्बोधयति— हे महाराजेति। एतद्गजेन्द्रमोक्षणरूपः कृष्णस्यानुभावस्तव तुभ्यं मयेरितः कथितः। हे कुरुवर्येति

**आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशनीम् ॥ हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः ॥ १२ ॥ एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन[2] युक्तः ॥ गन्धर्वसिद्धविबुधैरुपगीयमानकर्माऽद्भुतं स्वभवनं गरुडासनोऽगात् ॥ १३ ॥ एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् ॥ स्वर्ग्यं यशस्यं कलिकल्मषापहं दुस्स्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥ यथाऽनुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ॥ शुचयः प्रातरुत्थाय दुस्स्वप्नाद्युपशान्तये ॥ १५ ॥ इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ॥ शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥**

सम्बोधनेन भगवद्भक्तत्वेन स्वकुलश्रेष्ठेन त्वया भगवदनुग्रहेणैवैतच्छ्रुतमिति सूचयति। शृण्वता जनानामिदं गजराजमोक्षण भगवच्चरित स्वर्ग्यं स्वर्गप्राप्तिसाधनं यशस्यं यशस्करं कलिकल्मषापहं कलौ युगे यत्कल्मषं पाप तदपहन्तीति तथा। दुस्स्वप्ननाश दुष्टस्वप्नजनितफलप्रतिबन्धकमित्यर्थः ॥ १४ ॥ एतत्फलं न केवलं मयैवोच्यते किन्तु लोकेऽपि प्रामाणिकेषु प्रसिद्धमेवेत्याह— यथेति। अतएव श्रेयस्कामा धर्मादिपुरुषार्थार्थिनो द्विजातयस्त्रैवर्णिकाः प्रातरुत्थाय शुचयः स्नानादिना विशुद्धाः सन्तो दुस्स्वप्नाद्युपशान्तये-आदिपदेन धर्मादिश्रेयोलाभाय च-एतत् गजेन्द्रमोक्षणं भगवच्चरितं यथा यथावदनुकीर्तयन्तीत्यन्वयः ॥ १५ ॥ एतत्कीर्त्तनेन दुस्स्वप्नाद्युपशान्तिर्भवतीति तैः कुतो ज्ञातमित्यपेक्षाया परम्परया भगवद्वचनादेवेत्याह— इदमिति। हे कुरुसत्तम गजेन्द्रमोक्षानन्तरं तत्रत्यानां सर्वभूतानां शृण्वतां सतामेव सर्वभूतमयः सर्वात्मा विभुर्व्यापकः सर्वान्तर्यामी हरिः प्रीतः सन् गजेद्रं प्रति इदं वक्ष्यमाणमाहेत्यन्वयः ॥ १६ ॥

१ प्रथमाध्यायस्य एकत्रिंशच्छ्लोकेन। २ 'पारिषदता गमितेन' इति पाठान्तरम्।

भगवद्वाक्यान्येव दर्शयति— य इत्यादिना विमलां मतिमित्यन्तेन। ये जना मां त्वां चेदं सरश्च गिर्यादींश्चापररात्रान्ते प्रभाते उत्थाय स्मरन्ति ते ऽखिलादेनसः पापाद्विमुच्यन्ते इत्यष्टमेनान्वयः। गिर्यादीनां समाहारद्वन्द्वः। वेत्रादीनामितरेतरयोगद्वन्द्वः। तेषां गुल्मानि सन्दर्भविशेषात्मकानि। सुरपादपान् मन्दारादीन् ॥ १७ ॥ इमानि त्रिकूटस्य शृङ्गाणि। प्रसङ्गादन्येषामपि स्मर्तव्यतामाह । ब्रह्मणश्चतुर्मुखस्य मे मम हरेः शिवस्य च धिष्ण्यानि स्थानानि। स्वस्थानेषु विशेषं सूचयन् तानि निर्दिशति—क्षीरोदं क्षीरसागरं मम प्रियं स्थानं तथा भास्वरं श्वेतद्वीपं च मम प्रियं स्थानम् ॥ १८ ॥ ममेत्यस्य सर्वत्रान्वयः। श्रीवत्सं वक्षस्स्थले रोमरेखाविशेषात्मकं, कौस्तुभं मणिं, मालां वनमाला, कौमोदकीं गदा, सुदर्शनं चक्र, पाञ्चजन्यं शङ्खं, पतगेश्वरं पक्षिराजानं सुपर्णं गरुडम् ॥ १९ ॥ शेषं सङ्कर्षणम्। तत्स्मरणस्य पापनाशकत्वे हेतुमाह—मत्कला ममाशभूतां सूक्ष्मा दुष्प्रतर्क्यां

**श्रीभगवानुवाच ॥ ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ॥ वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥**
**शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ॥ क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥ श्रीवत्सं**
**कौस्तुभं मालां गदां कौमोदकीं मम ॥ सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥ शेषं च मत्कलां सूक्ष्मां**
**श्रियं देवीं मदाश्रयाम् ॥ ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥ मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ॥**
**कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम् ॥ २१ ॥ प्रणवं सत्यमव्यक्तं गोविप्रान् धर्ममव्ययम् ॥ दाक्षायणी-**
**र्धर्मपत्नीः सोमकश्यपयोरपि ॥ २२ ॥ गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् ॥ ध्रुवं ब्रह्मऋषीन् सप्त**
**पुण्यश्लोकांश्च मानवान् ॥ २३ ॥**

अहमेवाश्रयो यस्यास्ता देवीं देदीप्यमाना श्रियं महालक्ष्मीं, ब्रह्माणं चतुर्मुखं, नारदमृषिं, भवं श्रीमहादेवं, प्रह्लादं च ॥ २० ॥ श्रोतॄणामनन्तपुण्यानि सर्वपापनिवर्तकानि महापुण्यजनकानि च मे मया मत्स्याद्यवतारैः कृतानि कर्माणि। सूर्यं रविं, सोमं चन्द्रं, हुताशनमग्निम्॥ २१ ॥ प्रणवमोङ्कारं, सत्यं यथार्थवचनं, अव्यक्तं प्रधानं, गाः विप्रान् ब्राह्मणांश्च, अव्ययं धर्मं भगवद्भक्तिरूपं, दाक्षायणीर्दक्षदुहितॄर्धर्मस्य पत्नीस्तथा सोमकश्यपयोरपि पत्नीः ॥ २२ ॥ गङ्गां सरस्वतीं च प्रसिद्धां, नन्दामलकनन्दां, कालिंदीं यमुना, सितवारणमैरावतं, ध्रुवमुत्तानपादपुत्रं, सप्त ब्रह्मर्षीन्, पुण्यश्लोकान् पुण्येन श्लोक्यन्ते श्लाघ्यन्ते इति पुण्यश्लोकास्तान् धार्मिकान् मानवांश्च ॥ २३ ॥

प्रयताः प्रयत्नवन्तः सुसमाहिताः नियमितान्तर्बाह्येन्द्रियाश्च मम रूपाणि मम रूपतया सरआदीनि स्मरन्तीत्यर्थः । हिशब्दोऽवधारणे । मुच्यन्त एव नात्र सन्देहः ॥ २४ ॥ ये जनाः निशात्यये रात्र्यपगमे प्रभाते प्रतिबुद्ध्य अनेन त्वत्कृतेन स्तोत्रेण मां स्तुवन्ति तेषा प्राणात्यये प्राणप्रयाणकाले विमला मद्विषयां मतिमहं ददामि दास्यामीत्यन्वयः । चशब्देन यथा तव तथेति सूचयति । हे अङ्गेति सम्बोधनेन त्वं त्वस्मदीयोऽसीत्यत्र न सन्देह इति सूचयति ॥ २५ ॥ हृषीकेशः सर्वेन्द्रियनियन्ता भगवान् इत्येव गजेन्द्रं प्रति आदिश्य आज्ञाप्य जलजोत्तमं शङ्खश्रेष्ठं पाञ्चजन्यं प्रध्माय ध्वनयित्वा विबुधानीकं ब्रह्मादिदेवतावर्गं हर्षयन् खगाधिपं गरुडमारुरोह, आरुह्य स्वभवनमगादित्यर्थः ॥ २६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥

उत्थायापररात्रान्ते प्रयताः सुसमाहिताः ॥ स्मरन्ति मम रूपाणि मुच्यन्ते ह्येनसोऽखिलात् ॥ २४ ॥ ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुद्ध्य निशात्यये ॥ तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥ २५ ॥ श्रीशुक उवाच ॥ इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम् ॥ हर्षयन्विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे आपत्सु हरिसंस्मृतिप्रकरणे गजेन्द्रमोक्षनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ राजन्नुदितमेतत्ते हरेः कर्माघनाशनम् ॥ गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥ पञ्चमो रैवतो नाम मनुस्तामससोदरः ॥ बलिविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥

रचिता ह्यष्टमे तत्र हरिसंस्मृतिरूपणे ॥ चतुर्थो विवृतोऽध्यायो मोक्षसिद्धिनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ एवं चतुर्भिरापत्सु हरिसस्मृतिरीरिता ॥ अथो दशभिः सम्पत्सु सर्वदानं निरूप्यते ॥ १ ॥ दानस्य हेतुर्भगवानन्तर्यामितया मतः ॥ तेन देवैः कृतं स्तोत्रं पञ्चमे तन्निरूप्यते ॥ २ ॥ ॥ एवं निरूपितं गजेन्द्रमोक्षणं भगवच्चरितमुपसंहरन् मन्वन्तरान्तरनिरूपणं प्रतिजानीते– राजन्निति । हे राजन् एतत् गजेन्द्रमोक्षणं हरेः कर्म ते तुभ्यं मे मया उदितं वर्णितमित्यन्वयः । वर्णने हेतुमाह– श्रोतृवक्तॄणामघनाशनं पापनिवर्तकं पुण्यं पुण्यजनकं च । अथ पञ्चमं रैवतमन्तरं शृणु ॥ १ ॥ एवं प्रतिज्ञाय पञ्चमे मन्वादिष्टकं वर्णयति– पञ्चम इति । रैवतो नाम इति प्रसिद्धः पञ्चमो मनुः, स च तामसस्य प्रियव्रतस्यात्मजस्य सोदरो भ्राता, तस्य मनोरर्जुनः पूर्वो मुख्यो येषां तादृशाः बलिविन्ध्यादयः सुताः ॥ २ ॥

हिरण्यरोमादयो द्विजाः सप्तऋषयः ।आदिपदेन—' हिरण्यरोमा वेदशिरा ऊर्ध्व-
तत्र विभुनामा इन्द्र आसीत्। हे राजन् भूतरयादयो देवा आसन्। इति हरिवंशोक्ता अन्येऽपि ज्ञेयाः ॥ ३ ॥
बाहुस्तथाऽपरः ॥ देवबाहुः सुधामा च पर्जन्यश्च महामुनिः॥ एते सप्तर्षयो विप्र तत्रासन् रैवतेऽन्तरे ' इति हरिवंशोक्ता अन्येऽपि ज्ञेयाः ॥ ३ ॥
अवतारमाह—पत्नीति। शुभ्रस्य भर्तुर्विकुण्ठाख्या पत्न्यासीत्। तयोर्विकुण्ठाशुभ्रयोर्भगवान् कलया स्वांशेन वैकुण्ठ इति नाम्ना प्रसिद्धोऽन्यैश्च वैकुण्ठाख्यैः
सुरसत्तमैः सह स्वयं जज्ञे अवतीर्णः॥ ४॥ वैकुण्ठाख्यं भगवन्तं वर्णयति - वैकुण्ठ इति। देव्या स्वक्रीडासाधनभूतया रमया लक्ष्म्या प्रार्थ्यमानेन वैकुण्ठ-
सञ्ज्ञकेन भगवता तस्या लक्ष्म्याः प्रियकाम्यया प्रियं कर्तुमिच्छया सर्वलोकनमस्कृतः सर्वलोकस्थजनैः प्रार्थ्यो वैकुण्ठाख्यो लोकः कल्पितः रचित इत्य-
न्वयः ॥ ५ ॥ तस्य वैकुण्ठसञ्ज्ञस्य भगवतोऽनुभावः प्रभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां स्वपार्षदाभ्यां हिरण्यकशिपुहिरण्याक्षाभ्यां वराहादिरूपेण

विभुरिन्द्रः सुरगणा राजन् भूतरयादयः ॥ हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥ पत्नी विकुण्ठा शुभ्रस्य
वैकुण्ठैः सुरसत्तमैः ॥ तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम् ॥ ४ ॥ वैकुण्ठः कल्पितो येन लोको लोकनम-
स्कृतः ॥ रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥ तस्यानुभावः कथितो गुणाश्च परमोदयाः ॥ भौमान्
रेणून् स विममे यो विष्णोर्वर्णयेद्गुणान् ॥ ६ ॥ षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ॥ पूरुपूरुषसुद्युम्नप्रमुखाश्चाक्षुषा-
त्मजाः ॥ ७ ॥ इन्द्रो मन्त्रद्रुमस्तत्र देवा आप्यादयो गणाः ॥ मुनयस्तत्र वै राजन् हविष्मद्वीरकादयः[1] ॥ ८ ॥

युद्धादिलक्षणः, गुणाश्च ब्रह्मण्यतादयः परमोदया महर्धयश्च तृतीयस्कन्धादिषु कथिताः। सत्यं कथिताः, परन्तु सङ्ग्रहेण तथा च कार्त्स्न्येन कथये-
त्यत्राह— भौमानिति। यः पुमान् विष्णोर्गुणान् साकल्येन वर्णयेत् स भौमान् भूम्यंशभूतान् रेणूनपि विममे, गणयेदित्यर्थः। यथा भौमानां रेणूनां
गणनमशक्यं तथा विष्णोर्गुणानामपि साकल्येन वर्णनमशक्यमिति भावः ॥ ६ ॥ षष्ठे मन्वन्तरे मन्वादिषट्कमाह— षष्ठश्चेति। चक्षुषः पुत्रश्चाक्षुषश्च
षष्ठो मनुर्जातः। पूर्वादयश्चाक्षुषस्य मनोरात्मजाः पुत्राः॥ ७ ॥तत्र मन्त्रद्रुमनामक इन्द्रोऽभूत्। आप्यादयो देवगणा जाताः। हे राजन् तत्र मन्वन्तरे
हविष्मदादयः मुनयः सप्तर्षयो जाताः। आदिपदेन—'सुमेधा वीरकश्चैव हविष्मानुत्तमो मधुः ॥ अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः ' इति
हरिवंशोक्ता अन्येऽपि ज्ञेयाः ॥ ८ ॥

[1] 'हरिमद्वीरकादय' इत्यपि पाठान्तरम्।

एवं मन्वादयः पञ्चोक्ताः, भगवदवतारमाह— तत्रेति । तत्र षष्ठे मन्वन्तरेऽपि वैराजसञ्ज्ञस्य भर्तुः सम्भूत्याख्यायां भार्यायां देवः समुद्रमथनादिक्रीडापरः जगतीपतिः जगत्पालको भगवानंशेन अजितेति नाम्ना प्रसिद्धः सुतोऽभवदित्यन्वयः ॥ ९ ॥ प्रश्नावसरं प्रयच्छन्सङ्क्षेपेण तच्चरितमाह— पयोधिमिति । येनाजिताख्येन पयोधिं क्षीरसागरं निर्मथ्य सुराणां सुधा अमृतं साधिता । येन च कूर्मरूपेणाम्भसि भ्रममाणो मन्दरोऽद्रिः पृष्ठे धृतः ॥ १० ॥ लब्धप्रश्नावसरो राजा पृच्छति— यथेति त्रिभिः । हे ब्रह्मन् सर्वज्ञ भगवता यथा येन प्रकारेण क्षीरसागरो मथितः, यदर्थं वा येषां प्रयोजनाय च मथितः, यतश्च हेतोरम्बुचरात्मना कूर्मरूपेणाद्रिं मन्दरं दधार ॥ ११ ॥ यथा येन च प्रकारेण सुरैरमृतं प्राप्तं, ततो मथनादन्यत् अमृताद्व्यतिरिक्तं वस्तु किमभवत् ? एतत्पयोधिमन्थनाद्यात्मकं भगवतोऽद्भुत कर्म वदस्व ॥ १२ ॥ स्वस्य शुश्रूषा व्यनक्ति— त्वयेति । त्वया सम्यक् कीर्त्यमानेन

तत्रापि देवः सम्भूत्यां वैराजस्याभवत्सुतः ॥ अजितो नाम भगवानंशेन जगतःपतिः ॥ ९ ॥ पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ॥ भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥ राजोवाच ॥ यथा भगवता ब्रह्मन् मथितः क्षीरसागरः ॥ यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ॥ ११ ॥ यथाऽमृतं सुरैः प्राप्तं किं चान्यदभवत्ततः ॥ एतद्भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥ त्वया सङ्कथ्यमानेन महिम्ना सात्वताम्पतेः ॥ नोपि तृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥ सूत उवाच ॥ सम्पृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ॥ अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥ श्रीशुक उवाच ॥ यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः ॥ गतासवो निपतिता नोत्तिष्ठेरन् स्म भूयशः ॥ १५ ॥

सात्त्वताम्पतेर्भक्तपालकस्य भगवतो महिम्ना मे चित्त नैव तृप्यति । अतृप्तौ हेतुं वदश्चित्तं विशिनष्टि— सुचिरं बहुकालं येनाध्यात्मिकादितापत्रयेण तापितं दुःखितमिति ॥ १३ ॥ एवं सम्यक् सत्कारपूर्वकं पृष्टो भगवान् सर्वज्ञो द्वैपायनस्य व्यासस्य सुतः शुको राज्ञः प्रश्नमभिनन्द्य हरेर्वीर्यं माहात्म्यं अभ्याचष्टुं कथयितुं प्रचक्रमे प्रारेभे ॥ १४ ॥ तत्र समुद्रमथनात्मकं भगवतश्चरितमष्टभिरध्यायैर्निरूपयन्नादौ द्वाभ्यामध्यायाभ्यां तदुपोद्घात प्रपञ्चयति— यदेत्यादिना । यदा असुरैः कर्तृभिः शितैस्तीक्ष्णैरायुधैः साधनैश्च बाध्यमाना देवाः गतासवः प्राणरहिताः सन्तो युद्धे भूयशो बहुशो निपतिताः पुनर्नोत्तिष्ठेरन्, स्मेति प्रसिद्धिद्योतनार्थः ॥ १५ ॥



१ 'जगतीपति' इत्येतट्टीकाकारसम्मत पाठान्तर दृश्यते । तथैव व्याख्यानात् । २ 'नाति' इत्यपि श्रीधरस्वाम्यादिसम्मत पाठ ।

यदा च दुर्वाससो मुनेः शापेन इन्द्रेण सहितास्त्रयो लोकाः निश्श्रीकाः लक्ष्मीरहिताः निस्सम्पदोऽभवस्तत्र तदा इज्यादयो यागादयः नेशुः नष्टा बभूवुरिति द्वयोरन्वयः। दुर्वाससा हि कदाचिन्मार्गे गच्छन्तमिन्द्र विलोक्य स्वकण्ठस्था भगवत्प्रसादभूता माला तस्मै दत्ता, उक्त च—इय माला यस्य शिरसि धृता भविष्यति स सर्वदेवेभ्यः प्रथम पूज्यो भविष्यति इति, तेन चैश्वर्यमदमत्तेनेन्द्रेणानादृत्य सा माला ऐरावतस्य मस्तके निक्षिता, स च मत्तः पद्भ्या ता माला चूर्णीचकार, ततः कुपितो दुर्वासा इन्द्रं शशाप त्रिभिर्लोकैः सह त्वं निश्श्रीको भवेति, अतएव गणेशस्य शिरसि शनैश्चरदृष्ट्या अदर्शनं गते सति तत्स्थाने ऐरावतशिरस्सयोजनाद्गणेशः सर्वदेवेभ्य' प्रथमं पूज्यते इति ब्रह्मवैवर्ताज्ज्ञेयम् ॥ १६ ॥ महेन्द्रादयः सुरगणा एतत्त्रैलोक्यस्य निश्श्रीकत्वं पतिताना देवाना चानुत्थानं निशाम्य दृष्ट्वा स्वयं मन्त्रैर्मन्त्रयन्तोऽप्यालोचनानि कुर्वन्तोपि यदा निश्श्रीकत्वादिनिवृत्त्युपायनिश्चय नाध्यग-

यदा दुर्वाससः शापात्सेन्द्रा लोकास्त्रयो नृप ॥ निश्श्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः ॥ १६ ॥ निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः ॥ नाध्यगच्छन् स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ १७ ॥ ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वश· ॥ सर्वं विज्ञापयाञ्चक्रुः प्रणता· परमेष्ठिने ॥ १८ ॥ स विलोक्येन्द्रवाय्वादीन्निस्सत्त्वान् विगतप्रभान् ॥ लोकानमङ्गलप्रायानसुरानयथा विभु· ॥ १९ ॥ समाहितेन मनसा संस्मरन् पुरुषं परम् ॥ उवाचोत्फुल्लवदनो देवान् स भगवान् परः ॥ २० ॥ अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रुमघर्मजातय· ॥ यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥

च्छन्न प्रापु· ॥ १७ ॥ ततस्तदा मेरोर्मूर्धनि स्थिता ब्रह्मण· सभा सर्वे जग्मुः, तत्र च त प्रणता· सन्तस्तस्मै परमेष्ठिने निश्श्रीकत्वादिक सर्वं विज्ञापयाञ्चक्रुरित्यन्वयः ॥ १८ ॥ ततश्च स परमेष्ठी इन्द्रवाय्वादीन् देवान् निस्सत्त्वान् बलहीनान् अतएव विगतप्रभान् निस्तेजस्कान् तथा अमङ्गलप्रायान् लोकाश्च विलोक्य तथा असुरान् अयथा देववैलक्ष्येण तेजोबलादियुक्तान् विलोक्य विभुः सर्वदेवापेक्षया समर्थोऽपि ॥ १९ ॥ समाहितेनैकाग्रेण मनसा परं पुरुष पुरुषोत्तम संस्मरन् तत्स्मरणसुखेनोत्फुल्लं विकसित वदनं यस्य स देवान् प्रत्युवाचेत्यन्वयः। देवानामापत्सु ब्रह्माणं प्रति गमने ब्रह्मणश्च देवाश्वासने ब्रह्मणस्ततो महत्त्वे हेतुं सूचयंस्त विशिनष्टि— भगवानिति, स ब्रह्मा भगवान् ऐश्वर्यादिमान् अतएव परः सर्वदेवापेक्षयोत्कृष्ट इत्यर्थः ॥ २० ॥ तानेव देवान् प्रति ब्रह्मवाक्यानि दर्शयति—अहमिति त्रिभिः। अस्मदादय· सर्वे यस्य भगवत· अवतारः सृष्ट्यधिकृतोऽनिरुद्धस्तस्यांशकलया

१ 'तस्यावतार—' इति क्वचित्पाठ । २ ततो देवेभ्य ।

अंशांशेन ज्ञानशक्त्यादिगुणलेशेन विसर्जिता उत्पादितास्तमेव भगवन्तं शरणं व्रजामेत्यन्वयः। स एवास्मद्रक्षायां समर्थो नान्य इति सूचयन् विशिनष्टि—अव्ययमिति, स्वरूपतो धर्मतश्च क्षयरहितमित्यर्थः। घर्मजातयः स्वेदजाः ॥ २१ ॥ तर्हि वयमिवासुरा अपि तेनैवोत्पादिताश्चेत्तर्हि सर्वेष्वसौ समः स्यात् तर्हि कथमसुरान् निगृह्यास्मान् रक्षिष्यतीत्याशङ्क्य निरस्यति— नेति द्वयेन। यस्य परमानन्दविग्रहस्य भगवतो यद्यपि वध्यादिपक्षो नास्ति अथापि तथापि जगतः सृष्ट्याद्यर्थं काले सृष्ट्यादियोग्ये काले रजआदि धत्ते। सर्गार्थं रजो धत्ते, स्थित्यर्थं सत्त्व धत्ते, सयमः संहारस्तदर्थं तमो धत्ते ॥ २२ ॥ ननु रजआदीनि धत्ता तेन प्रकृते किमायातं तत्राह—अयं त्विति। देहिना प्राणिनां भवाय सत्तायै स्थितये सत्त्वं गुणं जुषाणस्य स्वीकृतवते भगवतोऽय स्थितिपालनक्षणः स्थितिर्मर्यादा तस्याः पालनस्य क्षणः कालः, यत एव तस्मात्सर्वे वयं तं जगद्गुरुं पालकत्वेन परमहि-

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ॥ अथापि[1] सर्गस्थितिसंयमार्थं धत्ते रजस्सत्त्वतमांसि काले ॥ २२ ॥ अयं तु तस्य स्थितिपालनक्षणः सत्वञ्जुषाणस्य भवाय देहिनाम् ॥ तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥ श्रीशुक उवाच ॥ इत्याभाष्य सुरान् वेधाः सह देवैररिन्दम ॥ अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥ तत्रादृष्टस्वरूपाय श्रुतपूर्वाय वै विभो ॥ स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥ २५ ॥ ब्रह्मोवाच ॥ अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ॥ मनोग्रयानं वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥

तत्वेन सर्वपूज्यं शरणं व्रजामः रक्षणोपायत्वेनाध्यवस्यामः। स सुराः प्रियाः यस्य तथाभूतः सन् स्वाना शरणव्रजनमात्रेण स्वीयत्वेन परिगृहीताना नोऽस्माकं शं सुख धास्यति करिष्यतीत्यर्थः ॥ २३ ॥ हे अरिन्दम निर्जितेन्द्रियशत्रुवर्ग वेधाः ब्रह्मा इत्येवं सुरान् आभाष्य आज्ञाप्य तै देवैः सह लोकात् परं यदलोकाख्यं तमस्तस्मात्परमजितस्य यत्साक्षात्पदं स्थानं तज्जगामेत्यन्वयः ॥ २४ ॥ तत्र स्थाने त्ववहितेन्द्रियो वशीकृतेन्द्रियः सन् ब्रह्मा वै निश्चयेन अदृष्टं स्वरूपं यस्य तस्मै तत्कृपां विना दुर्लभदर्शनाय- तादर्थ्ये चतुर्थी- साक्षात्कारेण तत्प्राप्तये दैवीभिर्वैदिकीभिर्गीर्भिः स्तुतिमब्रूत अकरोदित्यन्वयः। ननु यर्हि सोऽदृष्टस्वरूपस्तर्हि कथं ज्ञात इत्यपेक्षायामाह—श्रुतपूर्वायेति। श्रुतः पूर्वं श्रुतपूर्वस्तस्मै, सर्ववेदप्रतिपाद्यत्वाज्ज्ञात इत्यर्थः ॥ २५ ॥ ऽस्तुतिमेव दर्शयति— अविक्रियमिति यावदध्यायसमाप्ति। वरेण्यमापत्सु सर्वतो रक्षकत्वेन वरणयोग्यं त्वां वयं नमामहे इत्यन्वयः।

[1] 'अय च' इति पाठान्तर श्रीधरादीनाम्।

वरेण्यत्वे हेतुमाह— देववरमिति, देवेभ्योऽस्मदादिभ्यो वरं श्रेष्ठमित्यर्थः । वरत्वे हेतुत्वेनान्यानि विशेषणानि । गुहाशयमिति, अन्तर्यामितया सर्वसाक्षितया चास्मदादिहृदयगुहायां शयानं, वसन्तमित्यर्थः । तर्हि विकारित्वं स्यादित्याशङ्क्याह—अविक्रियमिति, वैषम्यादिविकाररहितमित्यर्थः । तत्रापि हेतुमाह—सत्यमिति, सर्वप्रपञ्चस्य परमार्थभूतमित्यर्थः । तत्रापि हेतुमाह—आद्यमिति, आदौ भवं सर्वोपादानकारणमित्यर्थः । तथापि कदाचित्तस्य विनाशः स्यादित्याशङ्क्याह—अनन्तमिति, विनाशरहितमित्यर्थः । तर्हि स कीदृग्वस्त्वित्यपेक्षायामाह— वचसा निरुक्तमिति, इदमित्थतया निरूपयितुमयोग्यमित्यर्थः । तत्र हेतुमाह— मनोग्रयानमिति, मनसोऽग्रे याति अविषयत्वेन वर्तते इति तथा तम् । मनसाकलितमेव वस्तु वचसा निरूपयितुं शक्यते इति भावः । तत्रापि हेतुमाह— अप्रतर्क्यमिति, प्रकृतिकार्यसाजात्याभावात्तत्तार्कितुमशक्यमित्यर्थः । यत्प्रतर्क्यं तदेव वाङ्मनसोर्विषयो भवतीति भावः । अप्रतर्क्ये हेतुमाह—निष्कलमिति, कला अवयवास्तद्रहितमप्राकृतत्वादित्यर्थः ॥ २६ ॥ अन्यैरप्यप्राकृतगुणैस्तं विशिंषन् शरणं व्रजति— विपश्चितमिति । प्राणादीनां विपश्चितं साक्षात्कर्तारम् । तत्रात्मा देहोऽहङ्कारो वा जीवो वा, अर्थाः शब्दादयो विषयाः, इन्द्रियाणि

**विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ॥ छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥ अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ॥ त्रिणाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥**

तद्ग्राहकाणि श्रोत्रादीनि, तेषामाभासं प्रकाशकम् । अनिद्र निद्राग्रहणं जागराद्यवस्थोपलक्षणं जागराद्यवस्थात्रयरहितमित्यर्थः । अव्रणं जीववन्न दुःखितमित्यर्थः । अक्षरं परिपूर्णम् । खमिति नित्यसुखस्वरूपमित्यर्थः । ‘ खमिन्द्रिये सुखे स्वर्गे ’ इति कोशात् । यत्र यस्मिन् गृध्रपक्षौ रागादिमज्जीवपक्षपातिनौ छायातपौ अविद्याविद्ये न स्तः स्त त्रियुग त्रीणि युगलानि यत्र तं षडैश्वर्यवन्तं वयं शरणं व्रजामहे ॥ २७ ॥ पुनरप्यसाधारणेन धर्मान्तरेण विशिंषन् शरणं व्रजति—अजस्येति । मनोमयं मनःप्रधानं, पञ्चदशारं दशेन्द्रियाणि पञ्च प्राणाश्चेत्येवं पञ्चदश आरा यस्य तत्, आशु शीघ्रगं, त्रयः सत्त्वादयो गुणा नाभिर्यस्य तत्, विद्युद्वच्चलं, ‘भूमिरापोऽनलो वायुः ख मनो बुद्धिरेव च ॥ हङ्कारः—’इत्यष्टप्रकृतयो नेमिर्यस्य तत् चक्र यदक्ष यः भगवान् अक्षो यस्य तत्तथाभूतमाहुर्वेदास्तमृत सत्यमहं प्रपद्ये शरणं व्रजामि । तच्छरणं विनाऽस्मद्देहादिलक्षणाच्चक्रान्न विनिर्मुक्तिरिति सूचयन्नाह—अजस्येति । अजस्य भगवतः अजया मायया ईर्यमाणं प्रवर्त्यमानमित्यर्थः ॥ २८ ॥

आपत्सु स एक एव रक्षको नान्य इति सूचयन् प्रणमति— य इति द्वयेन । य उपसुपर्णं स्वभक्तरक्षार्थं गरुडस्योपरि आसाञ्चकार, विराजते इत्यर्थः । अतएव धीरा विवेकिनो योगरथेन तत्प्राप्तिसाधनेन योगेन धारणाध्यानसमाध्यादिना यद्वा भक्तियोगेन श्रवणादिना एनमेवोपासते भजन्ते त नमामे-त्युत्तरेणान्वयः । ननु स एव कथं सर्वरक्षाया समर्थ इत्यपेक्षायां परं ब्रह्मत्वं दर्शयति— एकवर्णमिति । एकवर्णमानन्दैकस्वरूपं तमसः प्रकृतेः परं अलोकं लोकातीत अव्यक्तमदृश्य अनन्तपार कालतो देशतो वस्तुतश्च परिच्छेदरहित यत्परं ब्रह्म तदेव य इत्यन्वयः ॥ २९ ॥ 'दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यन्ते मायामेता तरन्ति ते ' इति भगवदुक्तेः शरणागतिमन्तरेणास्मदादिजनो यस्य माया कश्चिदपि नाति-

**य एकवर्णं तमसः परं तदलोकमव्यक्तमनन्तपारम् ॥ आसाञ्चकारोपसुपर्णमेनमुपासते योगरथेन धीराः ॥ २९ ॥ न यस्य कश्चातितितर्ति मायां यया जनो मुह्यति वेद नार्थम् ॥ तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं चरन्तम् ॥ ३० ॥ इमे वयं यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरन्तराविः ॥ गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसु-राद्या इतरप्रधानाः ॥ ३१ ॥**

तितर्ति नातिक्रामति, यया मायया देहादावात्मबुद्ध्या जनो मुह्यत्येव । अर्थभूतात्मान परमात्मान वा न वेद न जानाति । तस्य तु मायया मोहो नास्ति तन्नियन्तृत्वादित्याह— निर्जितेति । निर्जित आत्मा आत्मभूता मायाशक्तिस्तद्गुणाः सत्त्वादयश्च येन तमतएव सर्वभूतेषु सम चरन्तं विषम-प्रवृत्तेस्तत्तत्कर्मानुसारित्वात, अतएव परेषामस्मदादीनामपीशम् ॥ ३० ॥ अर्थं न वेदेत्युक्तमेव स्पष्टयति— इमे वयमिति । इमे वय देवा ऋषयश्च यस्य प्रियया तन्वा शरीरभूतेन सत्त्वेन गुणेन सृष्टा अपि अन्तरन्तर्यामिरूपेण बहिश्च कालरूपेण स्थितस्यापि यदि यस्य सूक्ष्मा दुर्ज्ञेया गतिं तत्त्व न विद्महे तर्हि इतरप्रधानाः रजस्तमःप्रधानाः असुराद्याः कुतो विदुस्तं नमामेति पूर्वेणान्वयः ॥ ३१ ॥

---

१ सर्वजीवनियन्तृत्वादिना च वरिष्ठत्वमाह— य इति । य उपसुपर्णं जीवसमीपे तन्नियन्तृत्वेनाऽऽसाञ्चकारास्नेस्म " द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजाते " इति श्रुते । यद्वा भक्तरक्षार्थं गरुडस्योपरि य उपविष्ट इत्यर्थ । तर्हि देहस्थत्वाद्दृक्कर्क्षणादिक्रियावेशाज्जीवसाम्य स्यात्तत्राह—एकवर्णं ज्ञानैकस्वरूप तमस प्रकृते परमलोकमदृश्यमव्यक्त निर्विकल्पमनतपार कालतो देशतश्चापरिच्छिन्न तद्ब्रह्मैव य अप्रच्युतस्वरूपत्वान्न जीवसाम्यम् " तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति " इति विशेषश्रवणादित्यर्थ । अतएव यमेन धीरा योगेन रथेन प्राप्तिसाधनेनोपासते भजन्ते त नमामेत्युत्तरेणान्वय । इति श्रीधरस्वामिना व्याचचक्षे । २ अर्थं आत्मस्वरूपामिति श्रीधरस्वामिन ।

एवं वरेण्यत्वादिरूपेण स्तुत्वाऽथ वैराजरूपेण स्तुवन् भगवत्प्रसादं प्रार्थयते— पादौ महीति द्वादशभिः। यत्र यस्या जरायुजाण्डजस्वेदजोद्भिज्जभेदेन चतुर्विधः भूतसर्गः प्राणिदेहसमूहः तिष्ठति सेयं मही यस्य पादौ स नोऽस्माकं प्रसीदतां प्रसीदत्वित्यन्वयः। ननु पादादिमत्त्वे तस्यास्मदादिवत् पारतन्त्र्यं स्यादित्याशङ्क्याह— आत्मतन्त्र इति। पादादिकल्पनाया उपासनार्थत्वात्स्वतन्त्र एवेति भावः। मह्यादिकर्तृत्वेनापि भावादित्यर्थः। तदा जडत्वप्रसक्तिमाशङ्क्याह— ब्रह्मेति, साक्षात्पर ब्रह्मैव स इत्यर्थः। ननु कथमेवमेकस्यैव पादादिमत्त्वं परब्रह्मत्वं च तत्राह— महाविभूतिरिति, महती विभूतिरैश्वर्यं यस्य सः। यद्वा तत्प्रसादेन किं स्यादित्यपेक्षायामाह— महाविभूतिरिति, महती विभूतिर्महालक्ष्मीः सर्वसम्पदधिष्ठात्री यस्य वशवर्तिनी स तथा। तथा च तत्प्रसादेन वयं सर्वे सर्वसम्पत्समृद्धा भविष्याम इति भावः ॥ ३२ ॥ उदारं वीर्यं शक्तिर्यस्य तदम्भो जलं तु यत् यस्य रेतः स ब्रह्मपदवाच्यो महाविभूतिरस्माकं प्रसीदतामित्यन्वयः। उदारवीर्यत्वमेव स्पष्टयति— यतोऽम्भसस्त्रयो लोकास्तथा अखिललोकपालाश्च सिद्ध्यन्ति

पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ॥ स वै महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥ अम्भस्तु यद्रेत उदारवीर्यं सिद्ध्यन्ति जीवन्त्युत वर्धमानाः ॥ लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥ सोमं मनो यस्य समामनन्ति दिवौकसा वै बलमन्ध आयुः ॥ ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥ अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा ॥ अन्तस्समुद्रेऽनुपचन् स्वधातून् प्रसीदतां नः स महाविभूतिः ॥ ३५ ॥

जायन्ते, रेतसो जलप्रचुरत्वात्। यतश्च जीवन्ति वर्धमानाश्च भवन्ति, जलाप्यायनस्य प्रसिद्धत्वात् ॥ ३३ ॥ सोमं चन्द्रमस यस्य मनः समामनन्ति वदन्ति वेदाः, स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः। भगवतो मनस्त्वाच्चन्द्रस्योत्कर्षमाह—। य दिवौकसा देवानामन्धः अन्नमतएव बलमायुश्च समामनन्ति, अमृतस्रावित्वात्। अमृतरश्मिभिः पोषकत्वान्नगाना वृक्षाणामीशो राजा अन्नाद्युत्पादकत्वेनान्नसाररेतोहेतुत्वात्। प्रजानामपि प्रजनः उत्पादक इत्यर्थः ॥ ३४ ॥ यस्य त्वग्निर्मुखं जातः स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः। भगवन्मुखत्वादग्नेः श्रैष्ठ्यं दर्शयति— जातवेदा इत्यादिना। जातं स्वस्मिन्निहितं चरुपुरोडाशादिकमिन्द्रादिभ्यो वेदयति प्रापयतीति तथेत्यर्थः। क्रियाकाण्डनिमित्तजन्मेति क्रियाकाण्डनिमित्तं यज्ञादिक्रियाकलापात्मकवेदपूर्वभागार्थानुष्ठाननिमित्तं जन्म यस्य स.। यश्चान्तस्समुद्रे उदरमध्ये स्वधातून् स्वपाकार्हानन्नादीन् अनुपचन् यथोचितं परिणामयंश्चास्ति। अनेन जाठररूपेण सर्वप्राणिजीवनहेतुत्वं दर्शितम्। यथा प्रसिद्धसमुद्रे वाडवरूपेणोदकान्येव अनुपचन्नग्निस्तिष्ठतीति दृष्टान्तो ज्ञेयः ॥ ३५ ॥

एष प्रसिद्धस्तरणिः सूर्यो यस्य चक्षुरासीत् स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः । भगवच्चक्षुष्ट्वात्तरणेरुत्कर्षमाह— । देवयानं देवलोकप्राप्तिमार्गाधिष्ठात्री देवता। त्रयीमय इति ऋग्यजुस्सामवेदत्रयप्रचुरः "सैषा त्रय्येव विद्या तपति" इति श्रुतेः । ब्रह्मणो धिष्ण्यमिति परब्रह्मण उपासनास्थानमित्यर्थः । "य एषोन्तरादित्ये पुरुषो दृश्यते" इति श्रुतेः । मुक्तेर्द्वारं ब्रह्मलोकतः प्रायेण मुक्तिप्राप्तेरस्य ब्रह्मलोकप्रापकत्वात् । अमृतं च अमृतसाधनं अमृतप्राप्तिसाधनपुण्यानुष्ठानकालज्ञापकत्वात् । मृत्युश्च उदयास्तमयाभ्यामायुर्व्ययकरत्वात् ॥ ३६ ॥ चराचराणां सहआदिरूपः प्राणरूपो वायुर्यस्य प्राणात् अभूत् स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः । तत्र सहो मनसः शक्तिः, बलं शरीरस्य शक्तिः, ओज इन्द्रियाणा शक्तिः, तासां प्राणाधीनत्वात् । भगवत्प्राणप्रभवत्वेन तत्प्रभावमाह । यं पञ्चवृत्तिं प्राणं वयं बुद्ध्याद्यधिष्ठातारो ब्रह्मादयो देवताः सम्राजं सार्वभौमं तद्भृत्या इव अन्वास्म, अनुसृत्य स्थिता इत्यर्थः । प्राणनिस्सरणप्रवेशयोरन्येषामपि तद्दर्शनात् ॥ ३७ ॥ यस्य पुरुषस्य श्रोत्रेन्द्रियाद्दिशः प्रजज्ञिरे हृदश्च खानि

**यच्चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ॥ द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥ प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः ॥ अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥ श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः ॥ प्राणेन्द्रियात्मासुशरीरकेतं प्रसीदतां नः स महाविभूतिः ॥ ३८ ॥ बलान्महेन्द्रस्त्रिदशाः प्रसादान्मन्योर्गिरीशो धिषणाद्विरिञ्च्यः ॥ खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥ श्रीर्वक्षसः पितरश्छाययाऽऽसन् धर्मः स्तनादितरः पृष्ठतोऽभूत् ॥ द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात् प्रसीदतां नः स महाविभूतिः ॥ ४० ॥**

देहगतानि छिद्राणि प्रजज्ञिरे, नाभ्याश्च खमाकाशः प्रजज्ञे, स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यत्वयः । खं विशिनष्टि— प्राणेति । प्राणः पञ्चवृत्तिकः इन्द्रियाणि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि वागादीनि पञ्च कर्मेन्द्रियाणि च आत्माऽन्तःकरणमसवो नागकूर्मादयः शरीरं च तेषा केतं अवकाशदातृत्वेनाश्रयभूतम् ॥ ३८ ॥ यस्य बलान्महेन्द्रो जज्ञे, प्रसादात् त्रिदशा देवा जज्ञिरे, मन्योः क्रोधात् गिरिशो रुद्रो जज्ञे, धिषणात् बुद्धेः सकाशात् विरिञ्च्यः ब्रह्मा जज्ञे, खेभ्यो देहच्छिद्रेभ्यः छन्दांसि गायत्र्यादीनि ऋषयश्च जज्ञिरे, मेढ्रात् कः प्रजापतिः प्रजज्ञे, स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः ॥ ३९ ॥ यस्य वक्षसः सकाशात् श्रीः सकलसम्पदधिष्ठात्री महालक्ष्मीः आसीत्, छायया पितर आसन्, स्तनात् धर्मोऽभूत्, पृष्ठतः इतरः अधर्मोऽभूत्, शीर्ष्णः शिरसः द्यौः स्वर्गोऽभूत्, विहारात् अप्सरस आसन्, स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः ॥ ४० ॥

१ धिषणाशब्दस्यात्र पुस्त्वमार्षम् । धिषणाया सकाशादित्यर्थ । 'विरिञ्च' इति सुबोधिनी–भावार्थदीपिकाकार–( श्रीधर– ) सम्मत पाठ । 'धिषणाविरिञ्च्य' इत्यन्यत्र पाठान्तर, तत्र धिषणाया विरिञ्च्यो जज्ञे, धिषणारूपो विरिञ्च्यो वेत्यवसेयम् ।

यस्य मुखात् विप्रो ब्राह्मणकुलं गुह्यमतीन्द्रियार्थावबोधकं ब्रह्म वेदश्चासीत्, भुजयोर्बाहुभ्यां राजन्यः क्षत्रियः बलं प्रजापालनसामर्थ्यं चासीत्, ऊर्वोः ऊरुभ्यां विट् वैश्यः ओजः नैपुण्यं तस्य वृत्तिश्चासीत्, अङ्घ्रिः अङ्घ्रेः सकाशात् अवेदः वेदव्यतिरिक्ता शुश्रूषावृत्तिस्तद्वृत्तिमान् शूद्रश्चासाती, स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः ॥ ४१ ॥ यस्य अधरात् अधरोष्ठात् लोभोऽभूत्, उपरि उत्तरोष्ठात् प्रीतिरभूत्, नस्तः नासिकातो द्युतिः कान्तिरभूत्, स्पर्शेन पशव्यः पशूनां तत्तुल्यानामज्ञानां हितः कामोऽभूत्, भ्रुवोः सकाशात् यमोऽभूत्, कालस्तु पक्ष्मभवः पक्ष्मणोर्जातः, स महाविभूतिर्नोऽस्माकं प्रसीदतामित्यन्वयः ॥ ४२ ॥ किं बहुना? द्रव्यं भूतपञ्चकं वयः कालं कर्म जीवादृष्टं गुणान् सत्त्वादीन् विशेष ब्रह्माण्डे तदुपलक्षितं कार्यवर्गं च एवं कार्यकारणात्मकं सकलं जगत् यत् यस्य योगमायया ईक्षणपूर्वकसङ्कल्पात्मिकया विहितान् वदन्ति स महाविभूतिर्नोऽस्माकं

विप्रो मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ॥ ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ[2] प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥ लोभोऽधरात् प्रीतिरुपर्यभूद्द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ॥ भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥ द्रव्यं वयः कर्म गुणान्विशेषं यद्योगमायाविहितान् वदन्ति ॥ यैर्दुर्विभाव्यं[3] प्रबुधापबाधं[4] प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥ नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभप्रतिपूरितात्मने ॥ गुणेषु मायारचितेषु वृत्तिभिर्नसज्जमानाय नभस्वदूतये ॥ ४४ ॥

प्रसीदतामित्यन्वयः । भगवत्कर्तृकस्य जगतः सामान्यतो दुर्वितर्क्यत्वमाह— यद्दुर्विभाव्यमिति, प्राकृतत्वेन संसारहेतुत्वेन च हेयतया ज्ञातुमशक्यमित्यर्थः । ननु तर्हि हेयतया ज्ञानं विना त्यागासम्भवात्कथं संसाराद्विमुक्तिरित्याशङ्क्य साधारणाना तथा ज्ञानाभावेऽपि विदुषा तु तथा ज्ञान भवतीति तैस्त्यज्यते इत्याह— प्रबुधापबाधमिति, विद्वद्भिस्त्याज्यमित्यर्थः । प्रबुधावबोधमिति पाठे प्रबुधानामेव हेयतयाऽवबोधो यस्मिन्नित्यर्थः ॥ ४३ ॥ एवं कार्यावस्थापन्नवैराजरूपं भगवन्तं सम्प्रार्थ्य स्वरूपावस्थं भगवन्तं प्रणमति— नम इति । उपशान्ताः असंश्लिष्टाः शक्तयः सत्त्वादयो गुणा यस्मिन् तस्मै । तत्र हेतुमाह—स्वाराज्येति । स्वेनैव परमानन्दस्वरूपेण राजते इति स्वराट् तस्य भावः स्वाराज्यं तल्लाभेनैव प्रतिपूरित आत्मा मनो यस्य तस्मै । अतएव मायारचितेषु प्रकृतिगुणेषु तत्कार्येषु दर्शनादिवृत्तिभिर्नसज्जमानाय आसक्तिरहिताय । ननु सर्वत्र विद्यमानस्य सर्वमनुभवतः

१ ‘ विप्रो मुखाद्ब्रह्म च ’ इति क्वचित्पाठः । २ ‘ ऊर्वोर्विशोऽङ्घ्रेरभवन्स्म शूद्रा ’ इति क्वचित् पाठ । ३ यदित्यव्ययं, यस्मादित्यर्थ । ४ ‘ प्रबुधावबोधम् ’ इति पाठान्तरम् ।

कथमेवमनासक्तिः सम्भवतीत्याशङ्क्य दृष्टान्तेन साधयति– नभस्वदूतय इति । नभस्वान् वायुस्तद्वदूतिर्लीला यस्य तस्मै । यथा वायुः सर्वत्र सञ्चार्यपि कुत्रापि न सज्जते तथेति भावः ॥ ४४ ॥ एवं भगवत्प्रसादं सम्प्रार्थ्य तद्दर्शनं प्रार्थयते– स इति । सोऽचिन्त्यानन्तशक्तिर्भक्तवत्सलस्त्व ते तव सस्मितं प्रसन्नं मुखाम्बुजं दिदृक्षूणां प्रपन्नानां शरणागतानां नोऽस्माकमस्मच्चक्षुरादिकरणगोचरं यथा भवत्येवमात्मान स्वरूपं दर्शयेत्यन्वयः ॥ ४५ ॥ ननु "न चक्षुषा पश्यति कश्चनैनं" इति श्रुत्युक्तरीत्या चक्षुराद्यविषयस्य कथं चक्षुरादिविषयता स्यादित्याशङ्क्य तथापि भक्तेच्छानुवर्तित्व तव बहुशो दृष्टमेव तत्र हेतुमाह– तैस्तैरिति । हे विभो सर्वथा सर्वं कर्तुं समर्थ हि यस्मात् कालेकाले तत्तदवसरे स्वस्येच्छया तेषामिच्छया वा भृतैः धृतैः रूपैः यन्नोऽस्माकं दुर्विषहमशक्यं तत् कर्म भगवान् स्वयमेव करोतीत्यन्वयः ॥ ४६ ॥ ननूक्तस्तुतिमात्रेण कथमतिदुर्लभस्य मम दर्शन स्यादित्याशङ्क्याह– क्लेशेति । विषयार्तानां विषयासक्त्या दुःखितानाम् । विषयासक्तौ हेतुमाह– देहिनां देहाद्यात्माध्यासवतां कर्माणि यथा क्लेशो भूरियेषु अल्प

**स त्वं नो दर्शयात्मानमस्मत्करणगोचरम् ॥ प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥ ४५ ॥ तैस्तैः स्वेच्छाभृते[1] रूपैः कालेकाले स्वयं विभो ॥ कर्म दुर्विषहं यन्नो भगवांस्तत्करोति हि ॥ ४६ ॥ क्लेशभूर्यल्पसाराणि कर्माणि विफलानि वा ॥ देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥ ४७ ॥ नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ॥ कल्पते पुरुषस्यैष स ह्यात्मा दयितो हितः ॥ ४८ ॥ यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ॥ एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥**

सारं फलं येषु तथाभूतानि भवन्ति । वस्तुतस्तु स्वर्गादेः फलस्यापि विनाशित्वात्तान्यपि विफलान्येव, त्वय्यर्पितं तु कर्म तथा नैव भवति, किन्तु सफलमेवेति ॥ ४७ ॥ अवैफल्यमेवोपपादयति– नेति । अवमः लौकिको व्यापारः तथा कर्मकल्पः वैदिकोऽपि कर्माभासः ईश्वरे त्वयि अर्पितश्चेद्विफलाय न कल्पते विफलो न भवति । हि यस्मात् स एष ईश्वरः पुरुषस्य सर्वजीवस्यात्मा स्वरूपं तदंशत्वात् अतएव दयितः प्रियः हितश्च । प्रत्युतानन्तफलश्च भवतीति सदृष्टान्तमाह– यथेति । हीति प्रसिद्धमेव ॥ ४८ ॥ यथा तरोर्मूलस्यावसेचनं जलेन सेकः स्कन्धानां शाखानां चावसेचनं भवति एवमेव विष्णोराराधनं सर्वेषा स्थावरजङ्गमात्मकाना प्राणिना तथाऽऽत्मनः स्वस्याराधकस्य चाराधनं भवति । तत्र हेतुं सूचयति–हीति, सर्वमूलत्वादित्यर्थः । अन्यथा शाखापत्रादिसेकवत्तत्तत्कर्मणा तत्तद्देवताराधनेपि न सर्वाराधनं सिद्ध्यतीत्यपि सूचितम् ॥ ४९ ॥ 

[1] 'स्वेच्छाधृतै' इति श्रीधरस्वाम्यादिसम्मत पाठ ।

एवं यावद्बुद्धिबलं स्तुत्वा त्वं सर्वथा सर्वं कर्तुं समर्थोऽसि, तत्रेदानीं जगत्पालनाय सत्त्वगुणाङ्गीकृतवतस्तव सात्त्विकानामस्माकं पालनमेवोचितमिति सूचयन्नहं तु नमस्कारादधिकं किञ्चिदपि कर्तुं न शक्नोमीत्यभिप्रेत्य नमस्करोति— नम इति । तुभ्यं भगवते नमः । नमस्कारव्यतिरिक्तप्रत्युपकारे साकल्येन स्तुतौ चासामर्थ्ये हेतुमाह— दुर्वितर्क्यात्मकर्मण इति । दुर्वितर्क्याणि विभावयितुमशक्यानि आत्मनः स्वस्य कर्माणि लीला यस्य तस्मै । दुर्वितर्क्यकर्मत्वे हेतुमाह— अनन्तायेति, देशकालवस्तुत्रिविधपरिच्छेदरहितायेत्यर्थः । तत्रापि हेतुमाह— निर्गुणायेति, प्राकृतगुणैर्विनिर्मुक्तायेत्यर्थः । ननु तर्हि तस्य जगज्जन्मादिहेतुत्वं कथमित्यपेक्षायामाह— गुणेशायेति, जगज्जन्मादिहेतुरजआदिगुणनियन्त्रे इत्यर्थः । अतएव साम्प्रतमिदानीं पालनकालत्वात्तदर्थं सत्वस्थाय सत्त्वगुणमङ्गीकृतवते ॥ ५० ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र

नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ॥ निर्गुणाय गुणेशाय सत्त्वस्थाय च साम्प्रतम् ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे सम्पत्सु सर्वदानप्रकरणे तद्धेतुत्वेन साधकभगवत्स्तोत्रनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एवं स्तुतः सुरगणैर्भगवान् हरिरीश्वरः ॥ तेषामाविरभूद्राजन् सहस्रार्कोदयद्युतिः

॥ १ ॥ तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ॥ नापश्यन् खं दिशः क्षोणीमात्मानं च, कुतो विभुम् ॥ २ ॥

विरिञ्च्यो भगवान् दृष्ट्वा सह शर्वेण तां तनुम् ॥ स्वच्छां मरकतश्यामां कञ्जगर्भारुणेक्षणाम् ॥ ३ ॥

सर्वदाननिरूपणे ॥ पञ्चमो विवृतोऽध्यायो हरिस्तोत्रनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ षष्ठे देवगणाः सर्वे हरिणा परिशिक्षिताः ॥ असुरैरुद्यमं चक्रुरित्येतद्विनिरूप्यते ॥ १ ॥ ॥ एवं स्तुतो भगवानाविर्बभूवेत्याह— एवमिति । हे राजन् सुरगणैरेवं स्तुतो भगवान् तेषा पुरत आविरभूदित्यन्वयः । एवं स्तुतोऽपि दुर्लभो भगवान् कथमाविरासीत्तत्राह— हरिरिति, भक्तदुःखहरणस्वभावत्वात्तदर्थमित्यर्थः । दुःखहरणमपि सामर्थ्याभावे कथं सम्भवति तत्राह— ईश्वर इति, सर्वथा सर्वं कर्तुं समर्थ इत्यर्थः । प्रादुर्भूतं भगवन्तं वर्णयति— सहस्रेति । सहस्राणामर्काणां सूर्याणामुदये द्युतिरिव द्युतिर्यस्य स तथा । अभूतोपमेयम् ॥ १ ॥ तेनैव महसा तेजसा प्रतिहतानीक्षणानि नेत्राणि येषां ते सर्वे देवाः खादीनेव नापश्यन्, विभुं भगवन्तं तु कुतः पश्येयुरित्यन्वयः ॥ २ ॥ शर्वेण रुद्रेण सह विरिञ्च्यस्ता भगवतस्तनुं दृष्ट्वा तुष्टावेति पञ्चमेनान्वयः । तयोर्दर्शने हेतुमाह— भगवानिति, ऐश्वर्यादिमानित्यर्थः । एतद्रुद्रस्याप्युपलक्षणम् । प्रादुर्भूतां तनुं विशिनष्टि— स्वच्छामिति चतुर्भिः । स्वच्छां निर्मलाम् । मरकतमणिवत्

श्यामाम् । कञ्जगर्भवदरुणे ईक्षणे यस्यास्ताम् ॥ ३ ॥ तप्तहेमवदवदातेन पीतेन लसता शोभमानेन कौशेयवाससा पट्टवस्त्रेण युक्तामिति शेष. । प्रसन्नानि चारूणि सुन्दराणि च सर्वाण्यङ्गानि यस्यास्ताम् । शोभनं मुखं यस्यास्ताम् । सुन्दरे भ्रुवौ यस्यास्ताम् ॥ ४ ॥ महान्तो मणयो यस्मिन् तेन किरीटेन केयूराभ्या च भूषिताम् । कर्णाभरणे कुण्डले ताभ्या नितरा भातौ कपोलौ ताभ्या श्रीः शोभा मुखाम्बुजे यस्यास्ताम् ॥ ५ ॥ काञ्चीकलापादिभिः शोभिताम् । कौस्तुभ आभरण कण्ठे यस्यास्ताम् । वक्षसि लक्ष्मीं बिभ्रतीम् । वनमाला अस्यामस्तीति तथा ताम् । मूर्तिमद्भिः पुरुषाकृतिभिः स्वकीयैः सुदर्शनादिभिः सर्वैरस्त्रैरुपासिताम् ॥ ६ ॥ ब्रह्मरुद्रयोरुभयोरेव देवप्रवर इति विशेषणम् । तेन देवपक्षपातेन हठेनोभयोः स्तुत्यादौ प्रवृत्तौ हेतुरुक्तः । सर्वाङ्गैरवनिङ्गतैः साष्टाङ्गप्रणतैः सर्वामरगणैः साक तथा सशर्वः शर्वेण च सहितो देवप्रवरो ब्रह्मा पुरुष परं पुरुषोत्तमं तुष्टावेत्यन्वयः ॥ ७ ॥ एवं पुनः स्तोतुं प्रवृत्तो ब्रह्मा

तप्तहेमावदातेन लसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वाङ्गीं सुमुखीं सुन्दरभ्रुवम् ॥ ४ ॥ महामणिकिरीटेन केयूराभ्यां च भूषिताम् ॥ कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजाम् ॥ ५ ॥ काञ्चीकलापवलयहारनूपुरशोभिताम् ॥ कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम् ॥ सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ॥ ६ ॥ तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ॥ सर्वामरगणैः साकं सर्वाङ्गैरवनिङ्गतैः ॥ ७ ॥ ब्रह्मोवाच ॥ अजातजन्मस्थितिसंयमायागुणाय निर्वाणसुखार्णवाय ॥ अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ॥ ८ ॥ रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोऽर्थिभिर्वैदिकतान्त्रिकेण ॥ योगेन धातः सह नस्त्रिलोकान् पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ ॥ ९ ॥

वय. .ायि नमस्कारव्यतिरेकेण कमप्युपकारं कर्तुं न समर्थाः अचिन्त्यानन्तशक्तित्वेन महाप्रभावत्वादिति सूचयन् प्रभाव च वर्णयन् नमस्करोति— अजातेति । न जाताः कर्माधीना जन्मादयो यस्य तस्मै ते तुभ्यं नमोनमः, एवं चतुर्थ्यन्तेन सर्वत्र सम्बन्धः । नमस्कारद्विरुक्तिर्दुर्लभभगवद्दर्शनलाभेनादरसूचिका । रामकृष्णवामनादीनां तु न कर्माधीनजन्मादयः, किन्तु स्वेच्छया भक्तरक्षाद्यर्थं प्रादुर्भावादिमात्रमतो न कोऽपि विरोधः । तथा जन्माद्यभावे हेतुमाह— अगुणायेति, प्राकृतसत्त्वादिगुणावश्यायेत्यर्थः । तत्रापि हेतुमाह— निर्वाणसुखार्णवायेति, निर्दुःखपरमानन्दमहोदधये । किञ्च—अणोरणिम्ने इति, अणोर्जीवादप्यणिम्ने अन्तर्यामितया तदन्तःप्रविष्टत्वादतिसूक्ष्मायेत्यर्थः । किञ्च अपरिगण्यधाम्ने इति । अपरिगण्यं देशकालवस्तुपरिच्छेदरहितं धाम मूर्तिर्यस्य तस्मै एवम्महाप्रभावाय ॥ ८ ॥ भगवन्मूर्तेः शिष्टोपास्यत्वमपरिच्छिन्नत्व चोपपादयति— रूपमिति । हे पुरुषर्षभ पुरुषोत्तम

हे धातः हे सर्वस्रष्टः तवैतद्रूपं वैदिकतान्त्रिकेण वेदतन्त्राभ्यामवबोधितेन योगेन साधनेन श्रेयोर्थिभिः धर्मार्थकाममोक्षपुरुषार्थचतुष्टयार्थिभिरिज्यं पूज्यम् । तत्र हेतुः पुरुषर्षभेति सम्बोधनेन सूचितोऽपि हेत्वन्तरमाह– सहेति । उ एवकारार्थे । ह हर्षे । नोऽस्माभिर्देवैः सह त्रिलोकान् अमुष्मिन् अस्मिन्नेव विश्वमूर्तौ तव रूपे पश्यामीत्यन्वयः । धातरिति सम्बोधनेन विश्वमूर्तित्वे हेतुः सूचितः ॥ ९ ॥ विश्वमूर्तित्वे तदुपादानत्वं हेतुमाह– त्वयीति । इदं विश्वमग्रे मध्येऽन्ते च त्वय्येवाश्रयभूते आसीत् । तत्र हेतुमाह–आत्मतन्त्र इति, कालादिपरतन्त्रताभावेनाविनाशित्वात् । एवं जगदुपादानत्वमुक्त्वमिदानीमुपादानोपादेययोरभेदमाह– त्वमिति, आद्यवस्थं मध्यावस्थं अन्तावस्थं च विश्वं त्वमेवेत्यर्थः । तत्र दृष्टान्तमाह– घटस्य मृत्स्नेवेति । तथापि भगवतः कारणान्तरं स्यादिति शङ्कानिरासायाह– परः परस्मादिति । परस्मात्सर्वकारणात् प्रधानादपि परः तस्यापि कारणम्, अतो न तस्य कारणान्तरशङ्कावकाशः ॥ १० ॥ एवं भगवतो जगदुपादानकारणत्वमुक्त्वा तस्य निमित्तकारणत्वमन्तर्यामित्वं चाह– त्वमिति ।

त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे ॥ त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात् ॥ १० ॥ त्वं माययाऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनु प्रविष्टः ॥ पश्यन्ति युक्ता मनसा मनीषिणो गुणव्यवायेऽप्यगुणं विपश्चितः ॥ ११ ॥ यथाऽग्निमेधस्यमृतं च गोषु भुव्यन्नमम्बूद्यमने च वृत्तिम् ॥ योगैर्मनुष्या अधियन्ति हि त्वां गुणेषु बुद्ध्या कवयो वदन्ति ॥ १२ ॥

आत्माश्रयया स्वापृथक्सिद्धया । तर्ह्यात्मन्यपि कश्चिद्दोषं कुर्यादिति शङ्कानिरासाय विशेषणान्तरमाह– स्वयेति । स्वाधीनया मायया प्रकृत्येदं विश्वं निर्माय रचयित्वा तदनु पश्चात् अन्तर्यामितया स्वयं प्रविष्ट इत्यन्वयः । ननु किमत्र प्रमाणमित्यपेक्षायां "तत्सृष्ट्वा तदनु प्राविशत्" इति श्रुतिप्रमाणसत्वेऽपि महतामनुभवोऽप्यत्र प्रमाणमित्याह– पश्यन्तीति । मनीषिणो[1] विवेकिनः । तत्र हेतुः–विपश्चितः शास्त्ररहस्यज्ञाः अतएव युक्ताः[2] सावधानचित्ताः मनसैव करणेन गुणानां व्यवाये परिणामेऽप्यगुणं गुणवश्यताविरहितमेव त्वा पश्यन्तीत्यन्वयः॥ ११ ॥ उक्तमेव दृष्टान्तैः स्पष्टयति– यथेति । यथा अग्निमेधसि काष्ठे मन्थनेन, अमृतं क्षीरं गोषु दोहनादिना, भुवि अन्नं व्रीह्यादि कर्षणादिना, भुवि अम्बु च जलं खनने उद्यमने पुरुषकारे, वाणिज्यादिना वृत्तिं जीविका, एवं योगैस्तत्तदुपायैर्मनुष्या अधियन्ति प्राप्नुवन्ति । हीति प्रसिद्धमेवैतत् । तथैव गुणेषु कार्यकारणसङ्घातेष्वेव कवयो विवेकिन एव त्वां योगविशुद्धया बुद्ध्यैव अधियन्ति त्वया साक वाच स्पृहणीया वदन्ति च, कपिलेन तथोक्तत्वात् ॥ १२ ॥

---

१ मनीषिणः सूक्ष्मबुद्धिमन्त इति सुबोधिनीकारा । २ मनसा युक्ता. समनस्काः, युक्ता योगनिष्ठा योगिनो वेति योजना. ।

भगवद्दर्शनेन जातं स्वानन्दं प्रकटयन्ति । हे सरोजनाभ ब्रह्माण्डात्मक कमलं नाभौ यस्य हे अस्मदादिसर्वकारण, अतएव हे नाथ अस्मदादिसर्वपालक ! इति सम्बोधनाभ्यां चिराभीष्टत्वे तद्दर्शनेन निर्वृतौ च हेतुः सूचितः । तं सर्वकारणभूतमतएव चिरादीप्सितार्थं परमपुरुषार्थरूप समुज्जिहानं आविर्भवन्त त्वां प्रत्यक्षतो दृष्ट्वा अद्य वयं सर्वे निर्वृतिं परमानन्द गताः प्राप्ता इत्यन्वयः । तत्र दृष्टान्तमाह— गजा इति । दवार्ताः दावाग्निपीडिता गजा गङ्गाजलं प्राप्य यथा सुखिनो भवन्ति तथेत्यर्थः ॥ १३ ॥ एवं भगवद्दर्शनेन जातं स्वानन्दमुक्त्वा स्वप्रयोजन प्रार्थयते—सत्त्वमिति । स उक्तविधोऽस्मदादीना स्वामी सर्वेश्वरः सर्वथा सर्वं कर्तुं समर्थस्त्व वयमखिललोकपाला यदर्था यत्प्रयोजनाः सन्तः तव पादमूलं शरण समागतास्तद्विधत्स्व सम्पादयेत्यन्वयः । यद्विधेयं तत्कथयेत्यपेक्षायामाह— हे बहिरन्तरात्मन् बहिरन्तश्च व्यापिन् अशेषसाक्षिणः सर्व युगपत् साक्षात्कुर्वतस्ते तव सर्वज्ञस्य अन्येन विज्ञाप्यं किमस्ति ? न किमपीत्यर्थः ॥ १४ ॥ यूयमेव कश्चिदुपायं कुरुतेत्याशङ्क्याह—अहमिति । अहं ब्रह्मा गिरित्रो रुद्रः ये चान्ये सुरादयः

तं त्वां वयं नाथ समुज्जिहानं सरोजनाभातिचिरेप्सितार्थम् ॥ दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भः ॥ १३ ॥ स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलम् ॥ समागतास्ते बहिरन्तरात्मन् किं वाऽन्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥ अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते ॥ किं वा विदामेश पृथग्विभाता विधत्स्व शं नो द्विजदेवमन्त्रम् ॥ १५ ॥ श्रीशुक उवाच ॥ एवं विरिञ्च्यादिभिरीडितस्तद्विज्ञाय तेषां हृदयं यथैव ॥ जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन् संवृतसर्वकारकान् ॥ १६ ॥ एक एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वरः ॥ विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥

—आदिपदेन मनुष्यगन्धर्वादिप्राणिमात्रस्य ग्रहणं- दक्षादयः प्रजापतयश्च एते सर्वेऽपि वयमग्नेः सकाशात् केतवः विस्फुलिङ्गा इव ते त्वत्तः पृथग्विभाताः सन्त आत्मनः शं सुखं सुखसाधनं किं विदाम ? न विद्म एवेत्यर्थः । अतो हे ईश द्विजाना देवाना च मन्त्रं सुखोपायं नोऽस्माकं विधत्स्व इदं कुरुतेत्युपदिशेत्यर्थः ॥ १५ ॥ एवं विरिञ्च्यादिभिरीडितस्ततो भगवान् तेषां तत् हृदयमभिप्रायं यथावदेव विज्ञाय जीमूतवत् मेघवत् गम्भीरया गिरा बद्धा अञ्जलयो यैस्तान् तथा संवृतानि नियमितानि कारकाणीन्द्रियाणि यैस्तान् विरिञ्च्यादीन् जगाद उवाचेत्यन्वयः ॥ १६ ॥ यद्यपि सुरेश्वरो भगवान् स्वयमेक एव तस्मिन् सुराणां कार्ये ईश्वरः कर्तु समर्थस्तथापि तान् देवान् उपायमेवाहेत्यन्वयः । तत्र हेतुमाह— स्वयमपि समुद्रोन्मथनादिभिर्विहर्तुकाम इति ॥ १७ ॥

भगवद्वचनमव दशयात— हन्तत्यष्टाभः। हन्तत्यह प्रसन्नोऽस्मीति द्योतयति। अतएव सर्वान् पृथक् सम्बोधयति—हे ब्रह्मन् हे शम्भो हे देवाः हे सुराः। अवान्तरभेदाभिप्रायेण देवाः सुराश्चेति सम्बोधनद्वयम्, हे गन्धर्वादय इत्यर्थः। वो युष्माकं यथा श्रेयः स्यात्तथा मम भाषितं यूयं सर्वे अवहिताः सावधानचित्ताः सन्तः शृणुतेत्यन्वयः ॥ १८ ॥ यावद्वो युष्माकमात्मनः स्वस्य भवो वृद्धिः स्यात्तावत् तान् प्रति यात तैः स्वशत्रुभिर्दानवैः दैतेयैश्च सन्धिर्विधीयतां सख्यं क्रियतामित्यन्वयः। तत्र हेतुमाह— कालेनानुगृहीतैरिति, कालानुग्रहवशात् सर्वतोऽनुकूलता प्राप्तैरित्यर्थः ॥ १९ ॥ ननु कालानुगृहीत्वेऽपि शत्रवः कथमनुसन्धेया इत्याशङ्क्याह— अरयोऽपीति। कार्यार्थस्य कर्तव्यप्रयोजनस्य गौरवे भूयस्त्वे सति तत्सिद्ध्यर्थमरयः शत्रवोऽपि सन्धेयाः मित्रतां नेया एव। हीत्यवधारणे। अतो हे देवाः अर्थस्य प्रयोजनस्य पदवीं सिद्धिं गतैः प्राप्तैर्युष्माभिः। पश्चाद्वध्यघातकभावेन वर्तितव्यमिति शेषः। तत्र दृष्टान्तमाह—अहिमूषकवदिति। यथा पेटिकायां सन्निरुद्धोऽहिस्ततो निर्गमद्वारविधानार्थं प्रथमं मूषकेण सन्धिं विधत्ते, यदा मूषकः

**श्रीभगवानुवाच ॥ हन्त ब्रह्मन्नहो शम्भो हे देवा मम भाषितम् ॥ शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः ॥ १८ ॥**
**यात दानवदैतेयैस्तावत्सन्धिर्विधीयताम् ॥ कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः ॥ १९ ॥ अरयोऽपि हि सन्धेया**
**सति कार्यार्थगौरवे ॥ अहिमूषकवद्देवा ह्यर्थस्य पदवीङ्गतैः ॥ २० ॥ अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ॥**
**यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥ क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ॥ मन्थानं मन्दरं कृत्वा**
**नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥ सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः ॥ क्लेशभाजो भविष्यन्ति दैत्या यूयं**
**फलग्रहाः ॥ २३ ॥**

पेटिकादशनं कृत्वा द्वारं विधत्ते तदा ततो निर्गत्य तमेव भक्षयति तथेत्यर्थः ॥ २० ॥ ततस्तैरसुरैः सह सन्धिं विधाय यत्कार्यं तदाह— अमृतोत्पादने इति, स्पष्टोऽर्थः। अमृतं विशिनष्टि— यस्येति। षष्ठ्यौ सम्बन्धमात्रे तृतीयार्थे। येन पीतेनामृतेन मृत्युग्रस्तोऽपि जन्तुः प्राणी अमरो भवेदित्यन्वयः ॥ २१ ॥ कथममृतोत्पादनं कर्तव्यमित्यपेक्षायामाह— क्षिप्त्वेति। वीरुधः गुल्मानि तृणानि लताश्च ओषधयश्च इमाः सर्वाः क्षीरोदधौ क्षिप्त्वा मन्दरनामकं कनकपर्वतं मन्थानं कृत्वा वासुकिनामानं सर्पराजं नेत्रं रज्जुं कृत्वा, सिन्धुं मन्थध्वमित्युत्तरेणान्वयः ॥ २२ ॥ एवं समुद्रमथनेऽस्माकं सामर्थ्यं नास्तीति चेत्तत्राह— सहायेनेति। हे देवाः मया सहायेन अतन्द्रिताः निरालस्याः सन्तो निर्मन्थध्वमित्यन्वयः। मत्सहायेन मथनं सुकरमिति भावः। ननु तर्हि दैत्या अप्यमृतभाजो भविष्यन्ति सन्धानस्य कृतत्वात्स्वयमेव बलिष्ठत्वाच्च तत्पानेन च तेऽप्यमृताः स्युस्तत्राह— क्लेशभाज इति। मत्साहाय्येन दैत्यास्तु केवलं क्लेशभाजो भविष्यन्ति, यूयं च फलग्रहाः अमृतपायिनो भविष्यथेत्यर्थः ॥ २३ ॥

तर्ह्यस्माभिः किं कर्तव्यमित्यपेक्षायां बलिभिः साध्यार्थास्तदनुसरणं विना न सिद्ध्यन्तीति कृत्वा युष्माभिर्दैत्यानुसरणमेव कर्तव्यमित्याशयेनाह— यूयमिति द्वयेन । हे सुराः असुरा यद्यदिच्छन्ति तत्तदेव यूयमनुमोदध्वम् । तत्र हेतुमाह— नेति । सान्त्वया साममार्गेण यथा सर्वे पदार्थाः सिद्ध्यन्ति तथा संरम्भेण न ते सिद्ध्यन्तीत्यन्वयः ॥ २४ ॥ जलधिसम्भवात् कालकूटसञ्ज्ञकात् विषान्न भेतव्यं नोद्वेजितव्यम्, तत्तु रुद्रो ग्रसिष्यतीति भावः । वस्तुषु मथनादुत्पन्नेषु वो युष्माभिः जातु कदाचिदपि कामो लोभश्च न कार्यः । तथा वस्तुग्रहणकर्तृषु रोषश्च न कार्यः ॥ २५ ॥ इत्येवं भगवान् पुरुषोत्तमो देवान् समादिश्य उपायोपदेशं कृत्वा तेषां ब्रह्मादीना पश्यता सतामेवान्तर्दधे इत्यन्वयः । तत्र हेतुमाह— स्वच्छन्दगतिरिति, स्वेच्छानुसारिणी गतिर्यस्य सः । तत्र हेतुमाह— ईश्वर इति । ईश्वरस्य स्वेष्टव्यापारत्वं त्वया ज्ञायत एवेति सूचयन् सम्बोधयति—हे राजन्निति ॥ २६ ॥ अथ भगवतो

यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ॥ न संरम्भेण सिद्ध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥ न भेतव्य कालकूटाद्विषाज्जलधिसम्भवात् ॥ लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥ श्रीशुक उवाच ॥ इति देवान् समादिश्य भगवान् पुरुषोत्तमः ॥ तेषामन्तर्दधे राजन् स्वच्छन्दगतिरीश्वरः ॥ २६ ॥ अथ तस्मै भगवते नमस्कृत्य पितामहः ॥ भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः ॥ २७ ॥ दृष्ट्वाऽरीनप्यसंयत्तान् जातक्षोभान् स्वनायकान् ॥ न्यषेधद्दैत्यराट् श्लोक्यः सन्धिविग्रहकालवित् ॥ २८ ॥ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ॥ श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥ महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ॥ अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥

ऽन्तर्धानानन्तरं तस्मै तिरोहिताय भगवते नमस्कृत्य पितामहो ब्रह्मा भवो रुद्रश्च स्वं स्वं स्थानं जग्मतुः । सुरा इन्द्रादयस्तु बलिमुपेयुः उपजग्मुः ॥ २७ ॥ असंयत्तान् युद्धार्थमनुद्यतानपि अरीन् शत्रून् देवान् दृष्ट्वा जातः क्षोभो युद्धोत्साहो येषां तथाभूतान् स्वनायकान् स्वसेनापतीन् दैत्यराट् बलिर्न्यषेधत् न्यवारयत् । तत्र हेतुमाह— श्लोक्य इति, स्तुत्यः । तत्र हेतुमाह— सन्धिविग्रहयोरुचितं काल वेत्तीति तथा ॥ २८ ॥ ते देवा वैरोचनिं बलिमासीनमुपागमन्नित्यन्वयः । त वर्णयति— असुराणां ये यूथपास्तैर्गुप्तं सुरक्षितम्, परमया श्रिया सम्पदा जुष्टं युक्तम् । तत्र हेतुं सूचयति— जितेति । जिता अशेषा देवादयो येन तम् ॥ २९ ॥ ततश्च महामतिर्महेन्द्रः श्लक्ष्णया माध्व्या वाचा सान्त्वयित्वा सामोपायेन तं प्रसन्नं कृत्वा यत्पुरुषोत्तमाद्भगवतः शिक्षितं तत्सर्वममृतोत्पादनप्रयत्नरूपं अभ्यभाषत अकथयत् ॥ ३० ॥

१ तेषा देवानामीश्वर इति वाऽर्थोऽवसेय । २ सान्धिकरणे कुशल. ।

तत इन्द्रोक्तं दैत्यस्य बलेर्ये त्वत्रान्ये शम्बरादयः असुराधिपाः ये च त्रिपुरवासिनस्तेषां चारोचतेत्यन्वयः ॥ ३१ ॥ ततो देवा असुराश्च सर्वे संविदं भागसमयं कृत्वा कृतं परस्परं सौहृदं मैत्रं यैस्ते हे परन्तप निर्जितकामक्रोधादिशत्रो राजन् अमृतार्थे परममुद्यमं चक्रुरित्यन्वयः ॥ ३२ ॥ उद्यममेवाह— तत इति । ते देवा सुरा ओजसा बलेन मन्दरगिरिमुत्पाट्य नदन्त उदधिं निन्युर्नेतुं प्रवृत्ता इत्यर्थः । नादे हेतुमाह— दुर्मदा इति । तत्र हेतुमाह—शक्ताः समर्थाः परिघा इव बाहवो येषां तथाभूताश्चेति ॥ ३३ ॥ शक्रादयः सर्वे दूरं भारोद्वहनेन श्रान्ता अतएव मन्दर वोढुमपारयन्तोऽशक्नुवन्तः अतएव विवशाः सन्तो गिरिं पथि मार्गे एव विजहुः तत्यजुः ॥ ३४ ॥ स च गिरिस्तत्र निपतन् बहून् अमरान् दानवांश्च स्वमहता भारेण चूर्णयामासेत्यन्वयः । तद्भारस्य महत्त्वे हेतुमाह— कनकेति, यतः कनकमय अचल इत्यर्थः ॥ ३५ ॥ भग्नं मनो गिरेर्मार्गमध्ये एव पतितत्वात् तेन समुद्रमन्थनविषय उत्साहो येषा तान् तथा भग्नाः बाहवः उरवः कन्धराश्च येषां तथाभूतांस्तान् अमरदानवान् विज्ञाय गरुडध्वजः गरुडारूढः सन्भगवान् तत्र बभूव आविर्बभूवेत्यर्थः ॥ ३६ ॥

तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ॥ शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥ ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ॥ उद्यमं परमं चक्रुरमृतार्थे परन्तप ॥ ३२ ॥ ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः । नदन्त उदधिं निन्युः शक्ताः परिघबाहवः ॥ ३३ ॥ दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ॥ अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥ निपतन् स गिरिस्तत्र बहूनमरदानवान् ॥ चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥ तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ॥ विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥ गिरिपातविनिष्पिष्टान् विलोक्यामरदानवान् ॥ ईक्षया जीवयामास निर्जरान्निर्व्रणान् यथा ॥ ३७ ॥ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ॥ आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥ अवरोप्य गिरिं स्कन्धात् सुपर्णः पततांवरः ॥ ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ॥ ३९ ॥ इति श्रीमद्भा० म० अष्ट० सम्पत्सु सर्वदानप्र० हेतुत्वेन साधनवर्गेदेवासुरोद्यमनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥

गिरिपातेन निष्पिष्टान् चूर्णीकृतान् अमरान् दानवांश्च विलोक्य ईक्षया अमृतदृष्ट्या निर्जरान् देवान् निर्व्रणान् यथा भवति तथा जीवयामास । असुरांस्तु नाजीवयदित्यर्थोऽज्ञेयम् ॥ ३७ ॥ तत एकेनैव हस्तेन लीलयैव गिरिमुद्धृत्य गरुडे आरोप्य स्वयमप्यारुह्य सुरासुरगणैर्वृतः अब्धिं प्रययावित्यन्वयः ॥ ३८ ॥ ततः स पततां पाक्षिणा वरः श्रेष्ठः सुपर्णो गरुडः स्वस्कन्धाद्गिरिमवरोप्य अवतार्य जलान्ते जलसमीपे उत्सृज्य निधाय हरिणा विसर्जितः प्रस्थापितः सन् प्रययावित्यन्वयः । गरुडे च तत्र स्थिते वासुकेरागमनासम्भवात् । इति कृत्वा विसर्जित इति बोध्यम् ॥ ३९ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र सर्वदाननिरूपणे ॥ षष्ठोऽध्यायो गतो वृत्तिं देवादियत्नरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

सप्तमे तु प्रजेशाद्यैः स्तुतः प्रीतः सदाशिवः ॥ भवान्या सह सम्मन्त्र्य विषं पपावितीर्यते ॥ १ ॥ ॥ ततः किं जातमित्यपेक्षायामाह— त इति । ते देवा असुराश्च फलभागेन अमृतरूपे फले तवापि भागो भविष्यतीत्येवं नागराजं वासुकिमामन्त्र्य सम्प्रार्थ्य तं नेत्रीभूतं तस्मिन् मन्दरगिरौ परिवीय संवेष्ट्य मुदा हर्षेण अन्विताः युक्ताः यत्ताः प्रयत्नवन्तश्च सन्तोऽमृतार्थमब्धिं मथितुमारेभिरे इति सार्धस्यान्वयः । हे कुरूद्वहेति राजानं सम्बोधयन् कुलपालकस्य यदा स्वापेक्षितसाधनसम्पत्तिर्भवति तदा हर्षो भवति तत्तु भवतो विदितमेवेति सूचयति ॥ १ ॥ वासुकेर्विषोद्गारित्वादतितीव्रं मुखं दैत्यान् ग्राहयितुमेव पूर्वं हरिस्तस्य पुरस्तान्मुखं जगृहे । देवा अपि ततोऽभवन् मुखं जगृहुरित्यर्थः । तन्मुखग्रहणरूपं महापुरुषस्य भगवतश्चेष्टितं दैत्यपतयो नैच्छन् साधु न मेनिरे ॥ २ ॥ अहेरमङ्गलमशुद्धमङ्गं पुच्छं न वय गृह्णीमः । तत्र हेतुमाहुः— स्वाध्यायश्रुतसम्पन्ना इति, वेदशास्त्राध्ययन-

**श्रीशुक उवाच ॥ ते नागराजमामन्त्र्य फलभागेन वासुकिम् ॥ परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदाऽन्विताः ॥ आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह ॥ १ ॥ हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ तन्नैच्छन् दैत्यपतयो महापुरुषचेष्टितम् ॥ २ ॥ न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः ॥ ३ ॥ इति तूष्णीं स्थितान् दैत्यान् विलोक्य पुरुषोत्तमः ॥ स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ॥ ४ ॥ कृतस्थानविभागास्त एवं कश्यपनन्दनाः ॥ ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ॥ ५ ॥ मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन ॥ ६ ॥**

सम्पन्ना इत्यर्थः । जन्मभिः कर्मभिश्च प्रख्याताः प्रसिद्धा इति ॥ ३ ॥ इत्यभिप्रायेण तूष्णीं स्थितान् दैत्यान् विलोक्य भगवान् पुरुषोत्तमः स्मयमानो ऽहिमुखज्वालया एत एव तापमनुभविष्यन्तीत्यभिप्रायेण प्रहसन् मुखं विसृज्य अमरैः सहितः पुच्छं जग्राह ॥ ४ ॥ एवं कृतो ग्रहणस्थानविभागो यैस्ते कश्यपनन्दना देवासुराः परमायत्ताः परमयत्नवन्तः सन्तः अमृतार्थं पयोधिं ममन्थुरित्यन्वयः ॥ ५ ॥ हे पाण्डुनन्दन परीक्षित् अर्णवे पयोधौ मथ्यमाने सति स मन्दराख्यः अद्रिः हि यतोऽनाधारोऽतो बलिभिर्देवादिभिश्च ध्रियमाणोऽपि गौरवात् अपोऽविशत् अपामधोभागे प्रविष्टोऽभूदित्यन्वयः ॥ ६ ॥

१ मथितुमित्येतत्पदमन्त्राध्याहारेण स्वीकृतम् । २ दैत्यदानवानामभिप्रायोक्तिरियम् ।

एवमतिबलीयसा दैवेन विघ्नराजेन हेतुना स्वपौरुषे पयोनिधिनिर्मन्थनप्रयत्ने नष्टे सति ते देवादयः सुनिर्विण्णमतिखिन्नं मनो येषां ते तथा, अतएव परिम्लाना मुखश्रीर्येषां ते तथाभूताश्च आसन् बभूवुरित्यन्वयः ॥ ७ ॥ विघ्नेशस्य गणेशादेर्विधिं तद्रचितविघ्नप्रकारं तदा विलोक्य ईश्वरः सदा सर्वत्र सर्वथा सर्वं कर्तुं समर्थः अतएव दुरन्तवीर्यः अपारबलः अतएवावितथः सत्योऽभिसन्धिः सङ्कल्पो यस्य सः महत् अद्भुतं च काच्छपं वपुः कृत्वा तोयं जलं प्रविश्य तदधोभागे गतं मन्दरगिरिमुज्जहार उद्धृतवान् ॥ ८ ॥ त तेनोद्धृतं कुलाचलं वीक्ष्य सुरासुराः पुनर्मथितुमुत्थिता बभूवुरिति शेषेणान्वयः । कथं महान्तं पर्वतं कूर्मरूपेण पृष्ठेन दधारेत्यपेक्षाया कूर्मस्य पर्वतादपि महत्त्वं दर्शयति— दधारेति । स कूर्मो[1] लक्षयोजनं प्रस्तारो विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन गिरिं दधारेत्यन्वयः । तत्र दृष्टान्तमाह— द्वीप इति । अपरो जम्बुद्वीप इव महान्

ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ॥ आसन् स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥ विलोक्य विघ्नेशविधिं
तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः ॥ कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥ तमुत्थितं
वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः ॥ दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥
सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ॥ बिभ्रत्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥
तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ॥ उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः ॥ ११ ॥
उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ॥ तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोभिवृष्टः ॥ १२ ॥

विपुलदेहः ॥ ९ ॥ न च गिरिधारणे भगवतः कष्टमभूत् किन्तु सुखमेवेत्याह— सुरेति। सुरासुरश्रेष्ठैः कर्तृभिर्भुजानां वीर्येण बलेन वेपितं कम्पितं परितो भ्रमन्तं गिरिं पृष्ठे बिभ्रत् तस्य आवर्तनं परिभ्रमणमादिकच्छपोऽङ्गकण्डूयनं मेने इत्यन्वयः । तत्र हेतुमाह— अप्रमेय इति, अपरिच्छिन्नबलशक्त्यादियुक्त इत्यर्थः । अस्मदादिवत्त्वमपि भगवदासक्तोऽस्यहो ते भाग्यमिति सूचयन् सम्बोधयति— हे अङ्गेति ॥ १० ॥ एवं कच्छपरूपेण स्थितोऽपि यदा असुरादीनामपि श्रमबाहुल्येन पतनावस्था दृष्टवांस्तदा तेष्वपि प्रविष्ट इत्याह— तथेति । विष्णुस्तेषामसुराणा बलं वीर्यं प्रभावं च ईरयन् प्रवर्तयन् आसुरेण राजसेन रूपेण असुरानाविशदित्यन्वयः । तथा देवाना बलवीर्यादिकं प्रवर्तयन् दैवेन सात्त्विकेन रूपेण देवगणानाविशदित्यन्वयः । तथा अबोधरूपः निद्रारूपः सन् नागेन्द्रं वासुकिं प्राविशत् । येन तस्य कर्षणजन्यपीडानुभवो न स्यात् ॥ ११ ॥ ततश्च मेरुमस्तकस्य चञ्चलता वीक्ष्य तदपि रूपान्तरेण धृतवानित्याह—उपरीति । सहस्रं बाहवो यस्य स तथाऽन्यो गिरिराडिव महाकायः सन्नेकेन हस्तेन

---

१ कूर्मावताररूपी श्रीविष्णुरित्यर्थः ।

अगेन्द्रं पर्वतेन्द्रं मन्दरमाक्रम्य धृत्वा तस्योपरि तस्थावित्यन्वयः । तदा च तद्भगवच्चरितविदा सर्वज्ञाना भगवत्कृपाविषयाणां ब्रह्मादीनां महानुत्सवो जातस्तद्दर्शयति—दिवीति । दिवि स्थितैर्ब्रह्मादयो मुख्या येषां तैः स्तुवद्भिर्भगवान् सुमनोभिः पुष्पैरभितो वृष्टः आच्छादितो बभूव । ब्रह्मादयो मुख्या देवाः समुद्रमन्थने नागताः पूर्वं तेषां स्वस्वस्थानगमनस्योक्तत्वात्, स्वस्थाने गत्वा प्रजापतिस्तुतेर्वक्ष्यमाणत्वाच्च । यद्वा कायव्यूहं कृत्वा ते उभयत्रापि सन्ति तदपि सम्भवतीत्येवेति ज्ञेयम् ॥ १२ ॥ उक्तमेव स्पष्टयति— तदेवमुपरि सहस्रबाहुरूपेण, अधश्च कच्छपरूपेण, आत्मनि दैत्यदेवशरीरे आसुरदेवरूपेण, नेत्रे सर्पे अबोधरूपेण, गोत्रे पर्वते दार्ढ्यरूपेण, प्राविशता परेण परमात्मना समेधिताः समुपोद्दलिताः अतएव मदोत्कटा देवा सुरास्तरसा बलेन महाद्रिणा मन्दरेण क्षोभितं नक्राणां चक्रं समूहो यस्मिंस्तमब्धिं ममन्थुरित्यन्वयः ॥ १३ ॥ तत्र भगवद्विमुखाना साधन-

उपर्यधश्चाऽऽत्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ॥ ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥ अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ॥ पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् ॥ १४ ॥ देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननान् ॥ समभ्यवर्षन् भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥ १५ ॥ मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः ॥ यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ॥ १६ ॥ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन् मथ्ना प्रतिगिरिरिवाशोभताथोद्धृताद्रिः ॥ १७ ॥

दशायामप्यतिकष्टमेवाभून्न तन्निवृत्तिरित्याह—अहीन्द्रेति । दृशश्च मुखानि च श्वासाश्च, अहीन्द्रस्य वासुकेः साहस्रमपरिमिताः कठोरा दृगादयस्तेभ्यो निर्गताभ्यामग्निधूमाभ्या आहतं वर्चो येषा ते असुरादयो दावाग्निना दग्धाः सरला [1]द्रुमविशेषास्त इवाभवन् ॥ १४ ॥ तस्य वासुकेर्यः श्वासस्तस्य शिखया हता प्रभा येषा तान् धूम्राणि निश्वासधूमाक्तानि अम्बराणि वस्त्राणि स्रग्वराणि कञ्चुकान्याननानि च येषां तान् भगवद्भक्तान् देवांस्तु भगवद्वशा घना मेघाः समभ्यवर्षन् । तथा तद्वशाः समुद्रस्योर्मिभिस्तरङ्गैरुपगूढाः संवृता वायवः पवनाश्च ववुः प्रससुरित्यन्वयः ॥ १५ ॥ यदा देवासुरवरूथपैर्मथ्यमानादपि सिन्धोः सकाशात् सुधा न जायेत तदा अजितो भगवान् स्वयमेव निर्ममन्थ ॥ १६ ॥ मथ्नन्तं भगवन्तं वर्णयति— मेघश्यामः मेघ इव श्यामवर्णः, कनकवत् स्वच्छः पीतश्च परिधिः परिधानं वस्त्रं यस्य सः कनकपरिधिः, कर्णयोर्विद्योतमाना विद्युत् विद्युद्वन्मकराकारकुण्डले

१ कैलासपर्वते । २ अग्रे विंशे श्लोके । ३ देवदारुवृक्षा इत्यर्थ । ४ भगवद्वशा तत्प्रहिता इत्यर्थ ।

यस्य स कर्णविद्योतविद्युत्, मूर्ध्नि भ्राजन्तो विलुलिताः कचा यस्य स भ्राजद्विलुलितकचः, स्रजं वनमाला धारयतीति स्रग्धरः, रक्ते नेत्रे यस्य सः, धृतः अद्रिर्येन सः धृताद्रिः एवम्भूतो भगवान् जैत्रैः सर्वतो जयावहैः अतएव जगता शरणागतप्राणिना अभयदैर्दोर्भिः भुजैश्चतुर्भिर्दन्दशूकं सर्पं गृहीत्वा मथ्ना मन्थनसाधनेन पर्वतेन सिन्धुं मथ्नन् प्रतिगिरिरिव पर्वतान्तरवत् अशोभतेत्यन्वयः ॥ १७ ॥ एवं निर्मथ्यमानात् अतएव सम्भ्रान्ता मीना उत् उद्गता मकरादयश्च यस्मिन् तस्मात् तिम्यादयो मत्स्यविशेषास्तैराकुलाच्चोदधेः सकाशात् अग्रतः प्रथमतो हालहलाह्वं-ह्रस्वं छन्दोनुरोधेन-हालाहलाख्यमुल्बणं दुस्सहं विषमभूदित्यन्वयः । ' हालाहलं हालहलं तथैव च हलाहलम् ' इति कोशात् ॥ १८ ॥ विषं विशिंषन् ततो भीताना प्रजानां सदाशिवप्रतिपत्तिमाह— तदिति । तद्विषमप्रति अप्रातिमं प्रतिक्रियाशून्यं वा। तत्र हेतुमाह— उग्रः वेगो यस्य तत् । तदेवाह— दिशि दिशि उपरि अधश्च विसर्पत् गच्छत् उत्सर्पत् ऊर्ध्वं गच्छच्च, दृष्ट्वेति शेषः । अङ्ग हे राजन् भीताः सेश्वराः सपालाः प्रजाः त्रिलोकस्था जनाः अन्यत्रारक्ष्यमाणाः

**निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः ॥ सम्भ्रान्तमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ १८ ॥ तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति ॥ भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभिमतं मुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपोजुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥ प्रजापतय ऊचुः ॥ देवदेव महादेव भूतात्मन् भूतभावन ॥ त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २१ ॥**

सदाशिवं शरणं दुद्रुवुः जग्मुः ॥ १९ ॥ त्रिलोक्या भवाय समृद्ध्यै भवान्या सहाद्रौ कैलासे आसीन मुनीनामपवर्गस्य मोक्षस्य हेतोरतएव तेषामभिमत तपो जुषाण स्वाचारेण शिक्षयन्तं देववरममरोत्तमं तं सदाशिवं विलोक्य स्तुतिभिस्तुष्टुवुः प्रणेमुश्चेत्यन्वयः ॥ २० ॥ स्तुतिमेव दर्शयति— देवदेवेति पञ्चदशभिः । तत्र परमकारणब्रह्मरूपेण स्तुवन्ति—। हे देवदेव नोऽस्मान् शरणापन्नान् त्रैलोक्यदहनात् विषात् त्राहि पालयेत्यन्वयः । कथं मम देवदेवत्वं तत्राहुः— हे महादेवेति । महत्त्वात् सर्वदेवश्रेष्ठत्वमिति भावः । महत्त्वमपि कुत इत्यपेक्षायां सर्वपालकत्वादित्याशयेन सम्बोधनान्तरमाहुः— हे भूतभावनेति । न केवलं पालकत्वेनैव महत्त्वं किन्तु सर्वान्तर्यामितया सर्वस्य त्वद्वशवर्तित्वेनापि त्वन्महत्त्वमित्याशयेन सम्बोधनान्तरमाहुः— हे भूतात्मन्निति । भूतानामात्मा अन्तर्यामी तत्सम्बोधनम् ॥ २१ ॥

१ ' उद्धृताद्रि ' इति तु मूलगत पद चिन्त्यम् । तत उत् उर्ध्वं धृत. अद्रिर्येनेति ज्ञेयम् ।

ननु बन्धमोक्षकर्ता भगवान् विष्णुरेव सर्वपालक इति प्रसिद्धं तत्कथं मम पालकत्वमुच्यते वस्तुतस्तेन तव भेदाभावादित्याशयेनाहुः— त्वमेक इति। त्वमेक एव सर्वजगतो बन्धमोक्षयोरीश्वरः समर्थः अतएव कुशलाः विवेकिनस्त्वं बन्धमोक्षप्रदम्। तत्र बन्धः स्वविमुखाना मोक्षस्तु स्वभक्तानामिति व्यवस्थामङ्गीकृत्याहुः—प्रपन्नेति । प्रपन्नानां स्वशरणागतानामार्तिं संसारदुःखं हरतीति तथा तम्। तदप्युपायोपदेशद्वारेत्यभिप्रेत्याहुः— गुरुमिति। एवम्भूतं त्वामेवार्चन्तीत्यन्वयः ॥ २२ ॥ ननु यद्यहमेक एवेश्वरस्तदा कथं ब्रह्मविष्णुरुद्रेतिभेदप्रसिद्धिरित्याशङ्क्याहुः— गुणेति। हे विभो सर्वं कर्तुं समर्थ हे भूमन् सर्वदेशसर्वकालसर्ववस्तुव्यापक त्वं यदा अस्य विश्वस्य सर्गः सृष्टिः स्थितिः पालनं अप्यय उपसंहारस्तान् विधत्से कर्तुमिच्छसि तदा गुणमय्या रजस्सत्त्वतमआत्मिकया स्वशक्तिरूपया यथाक्रमं ब्रह्मविष्णुशिवेति अभिधां धत्से, जगत्सृष्ट्यादितत्तद्भिन्नकार्यार्थंनाममूर्तिभेदेपि न वस्तुतो भेदः गुणवशवर्तित्वाभावात्। अतो वस्तुतः स्वदृक् स्वप्रकाशचिद्रूपब्रह्मैव त्वमित्यन्वयः ॥ २३ ॥ उक्तमेव स्पष्टयन्ति— त्वमिति। गुह्यं वेदे गोप्यं

**त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ॥ तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥ गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो ॥ धत्से यदा स्वदृग्भूमन् ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः ॥ नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥ २४ ॥ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणः[1], स्वभावः ॥ कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनन्ति ॥ २५ ॥ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ॥ कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम् ॥ २६ ॥**

सर्ववेदतात्पर्यविषयं यत्परं ब्रह्म स त्वमेव, अतो नानाशक्तिभिः सत्त्वादिगुणैस्त्वमेव नानारूपेणाभातः । अतो जगत आत्मा उपादानं त्वं निमित्तत्वमप्याहुः—। सदसतोर्भावान् देवतिर्यङ्मनुष्यादीन् भावयत्युत्पादयतीति तथा स त्वं, तथा जगदीश्वरः जगत्पालकश्च त्वमेव ॥ २४ ॥ वेदप्रकाशकत्वेन स्वतस्सिद्धज्ञानत्वं वदन्तो जगदात्मना भावप्रकारमाहुः— त्वमिति। शब्दस्य वेदस्य योनिः कारणं त्व, जगदादिर्महत्तत्त्वं त्व, प्राणेन्द्रियद्रव्याणां कारणभूता गुणा यस्य स राजसादित्रिविधः आत्मा अहङ्कारस्त्वमित्यन्वयः। तथा स्वभावादयस्त्वम्, स्वभावः परिणामहेतुः, कालः क्षोभकः, क्रतुः सङ्कल्पः, सत्यं यथार्थभाषणम्, ऋतं मधुरभाषणं च, धर्मो यज्ञादिरूपः। एवम्भूते त्वयि त्रिवृदक्षरमकारोकारमकारात्मकं प्रणवं प्रकाशकं वदन्ति ॥ २५ ॥ वैराजरूपेण स्तुवन्ति— अखिलदेवतात्माऽग्निस्ते मुख विदुः। लोका भवन्ति उद्भवन्ति यस्मात् स लोकभवः तत्सम्बुद्धौ। क्षितिं तेऽङ्घ्रिपङ्कजं विदुः।

१ सुबोधिन्या श्रीधरीयटीकाया अन्यत्र च 'प्राणेन्द्रियद्रव्यगुणस्वभाव' इति मूलगतमेकमेव पद दृश्यते तत्प्रमादविलसितामिति भाति, यतस्तत्तत्कृत व्याख्यान पृथक्कृतयो पदयोरेवास्ति।

अखिलदेवतात्मनस्ते कालं गतिं विदुः । दिशश्च कर्णौ विदुः । जलेशं वरुणं रसनेन्द्रियं विदुरित्यन्वयः ॥ २६ ॥ नभस्तव नाभिः, नभस्वान् वायुस्तव श्वसन श्वासः, सूर्यस्तव चक्षूंषि, जलं च तव रेतः, परे ब्रह्मादयः अपरे तिर्यगादयो ये आत्मानो जीवास्तेषामाश्रयणमाश्रयस्तवात्मा अहङ्कारः, सोमश्चन्द्रस्तव मनः, द्यौः स्वर्गस्तव शिरः । सर्वत्र हेतुत्वेन सम्बोधयन्ति— हे भगवन्निति । अचिन्त्यानन्तगुणपूर्णत्वादिति भावः ॥ २७ ॥ समुद्रास्तव कुक्षिः, गिरयः पर्वतास्तवास्थिसमुदायाः, सर्वा ओषधयो यवादयो वीरुधो लताश्च तव रोमाणि, च्छन्दांसि गायत्र्यादीनि सप्त तव साक्षाद्धातवः, हे त्रयीमयात्मन् वेदप्रचुरमूर्ते स प्रसिद्धो वेदोक्तो धर्मस्तव हृदयम् ॥ २८ ॥ हे ईश पञ्चोपनिषदः तत्पुरुषाघोरसद्योजातवामदेवेशानात्मकाः पञ्चानुवाकाः तव मुखानि, मुखव्यापारात्मका इत्यर्थः । मुखानि विशिंषन्ति— यैरिति । यैर्मुखैस्त्रिंशदष्टोत्तरमन्त्रवर्गः अष्टोत्तरत्रिंशन्मन्त्राणा वर्गः, तेषामेव मन्त्राणा

नाभिर्नभस्ते श्वसनं नभस्वान् सूर्यश्च चक्षूंषि जलं स्म रेतः ॥ परावरात्माश्रयणं तवाऽऽत्मा सोमो मनो द्यौर्भगवञ्छिरस्ते ॥ २७ ॥ कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते ॥ छन्दांसि साक्षात्तव सप्तधातवस्त्रयीमयात्मन् हृदयं स धर्मः[1] ॥ २८ ॥ मुखानि पञ्चोपनिषदस्तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ॥ यत्तच्छिवाख्यं परमार्थ[2]तत्त्वं देव स्वयञ्ज्योतिरवस्थितिस्ते ॥ २९ ॥ छाया त्वधर्मोर्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ॥ साङ्ख्यात्मनः[3] शास्त्रकृतस्तवेक्षा छन्दोमयो देव ऋषिः पुराणः ॥ ३० ॥ न ते गिरित्राखिललोकपालविरिञ्च्यवैकुण्ठसुरेन्द्रगम्यम् ॥ ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥

पदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मका मन्त्रा जाता इत्यर्थः । हे देव यत्तच्छास्त्रप्रसिद्धं शिवाख्यं परमार्थतत्त्वं स्वयञ्ज्योतिः स्वयम्प्रकाशं तत्ते तवावस्थितिरवस्थानमुपरतावस्था ॥ २९ ॥ अधर्मस्योर्मिषु दम्भलोभादिषु तु तव च्छाया अप्रकाशः, अधर्मोर्मयस्तव च्छायाभूता इत्यर्थः । यैः सत्त्वादिभिर्गुणैः विसर्गः प्रपञ्चसृष्टिस्तानि सत्त्वरजस्तमासि तव नेत्रत्रयम् । हे देव बहुधाद्योतमान च्छन्दोमयः गायत्र्यादिच्छन्दः प्रचुरपुराणः पुरातन ऋषिर्वेदः साङ्ख्यात्मनः सर्वज्ञस्य शास्त्रप्रणेतुस्तव ईक्षा ईक्षणम् । साङ्ख्यात्मन इत्यत्र साक्षान्मनुरिति पाठे मनुर्वेदः । तमेवाहुः— छन्दोमय इति ॥ ३० ॥ हे गिरित्र हर यत्ते ब्रह्म स्वरूपं तदखिललोकपालादिभिर्गम्यं न भवतीत्यन्वयः । तत्र हेतुमाहुः— निरस्तभेदमिति, निरस्तदेवमनुष्यादिभेदमित्यर्थः । तत्रापि हेतुमाहुः— यत्रेति, यत्र रजआदयो गुणा न सन्तीत्यर्थः । यदा केनापि गम्यं न भवति तदा तत्र किं प्रमाणमित्यपेक्षायामाहुः—

१ ‘ सर्वधर्म. ’ इति क्वचित्पाठ । २ ‘ परमात्मतत्त्व ’ इति पाठोऽन्यत्र । ३ ‘ साक्षान्मनु ’ इति पाठान्तरम् ।

परञ्ज्योतिरिति। स्वयम्प्रकाशे वस्तुनि नातीव प्रमाणापेक्षेति भावः। न च वैकुण्ठस्यापि हरः कथमगम्यत्वं गत इति शङ्कनीयं "द्युपतय एव न ययुरन्तमनन्ततया त्वमपि" इति वेदस्तुतावपि तथोक्तेः ॥ ३१ ॥ कामश्च अध्वरश्च दक्षयज्ञः त्रिपुरादयश्च ये अनेकभूतद्रुहस्तान् क्षपयतः संहरतस्ते तव तत् कामादिक्षपणात्मकं कर्म स्तुतये न भवति। अत्यल्पमेतादिति भावः। तत्र हेतुं सूचयन्तः शिवं विशिंषन्ति— य इति। यस्तु भवान् आत्मना स्वेनैव कृत सृष्टमिदं जगदन्तकाले स्वनेत्रवह्निस्फुलिङ्गस्य शिखया भसित भस्मसाज्जातं न वेद न जानाति, तस्य ते कामादिक्षपणं कर्म स्तुतये न भवतीत्यन्वयः। गरभक्षणस्येदानीमकृतत्वेपि तस्याप्यवश्यम्भावित्वेन सिद्धवन्निर्देशः॥ ३२ ॥ तदेवं नित्यं परानुग्रहे व्यग्रं त्वां ये निन्दन्ति तेऽतिमूर्खा एवेत्याहुः— ये त्विति। ये तु उमया भवान्या सह चरन्तं तस्यां नितरा रतं कामिनं कत्थन्ते प्रलपन्ति तथा श्मशाने चरन्तमुग्रं क्रूरं परुषं हिंस्रं च कत्थन्ते ते नूनं तवोर्तिं लीलामविदन्निति काकुः। त्वल्लीला नैव विदुरित्यर्थः। तत्र हेतुं सूचयन्तो विशिंषन्ति— आत्मरामेति। आत्मरामाश्च ते गुरवो विश्वहितोपदेष्टारश्च तैरपि

**कामाध्वरीत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते ॥ यस्त्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं न वेद ॥ ३२ ॥ ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्तमुमया तपसाऽभितप्तम् ॥ कत्थन्त उग्रपरुषं निरतं श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः ॥ ३३ ॥ तत्तस्य ते सदसतोः परतः परस्य नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ॥ ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि शक्तिमात्रम् ॥ ३४ ॥**

हृदि चिन्तितं अङ्घ्रिद्वन्द्वं यस्य तम्, तथापि मुनीना सम्प्रदायप्रवृत्त्यर्थ तपसाऽभितप्तं तपः कुर्वन्तामित्यर्थः। कथमात्मारामैः सेवितचरणयुगलस्य कामित्वसम्भवः? कथं वा तपसाऽभितप्तस्य शान्तस्योग्रत्वं परुषत्वं च सम्भवति? श्मशानरतत्वस्य समत्ववैराग्यादिशिक्षणार्थत्वेन लीलामात्रत्वात्। अतो विचारं विना शिवनिन्दका हातलज्जा गतत्रपा एव ॥ ३३ ॥ एवम्भूतस्य तव यथार्थं ज्ञानं स्तुतिश्च ब्रह्मादीनामपि दुर्घटा तत्रास्माकं का वार्तेत्याहुः— तदिति। तत्तस्मात् उक्तविधपरमेश्वरत्वात् तस्य अनन्ताचिन्त्यगुणार्णवस्य सदसतोः कार्यकारणयोः परतः प्रधानात् परस्य सर्वकारणकारणस्य भूम्नः व्यापकस्य ते तव स्वरूपगमने यथावत्स्वरूपज्ञाने संस्तवने च प्राचीनाः ब्रह्मादयोऽप्यञ्जसा न प्रभवन्ति समर्था न भवन्ति । यद्येवं तदा वयं तु तत्सर्गसर्गविषयाः तेषां सर्गे अत्यर्वाचीनाः किमुतेति। तज्ज्ञानेन तत्स्तुतौ च कथं प्रभवेम इत्यर्थः। तर्हि कथमेतत्स्तोत्रं कृतमित्यपेक्षायामाहुः—अपीति। एतत्स्तोत्रमपि स्वशक्त्यनुसारेण, न साकल्येनेत्यर्थः ॥ ३४ ॥

शक्तिमात्रस्तुतौ साकल्येन तज्ज्ञानाभावं हेतुमाहुः— एतदिति। हे महेश्वर परं केवलं ते तवैतत् दृश्यमानरूपमेव प्रपश्यामोऽतः परमन्यत् यत्सर्वकारणभूतमतिसूक्ष्मं तन्न पश्याम इत्यन्वयः। हीति प्रसिद्धौ। प्रसिद्धिबलादेतज्जानीमः। अव्यक्तं कर्म यस्य तस्य ते व्यक्तिः प्राकट्यं लोकस्य जनस्य मृडनाय सुखसम्पादनायेति। अनेन विषपानेनास्मानपि सुखिनः कुर्विति सूचयन्ति॥ ३५॥ तासां प्रजानां तत् विषोत्पत्तिजन्यं व्यसनं दुःखं वीक्ष्य कृपया भृशमत्यन्तं पीडितः। कृपायां हेतुमाह— सर्वभूतानां सुहृत् हितचिन्तकः। चिन्तामात्रे किं स्यादित्याशङ्क्याह— देव इति, सर्वसम्पादने समर्थोऽपीत्यर्थः। अतएव स्वप्रियां सतीमिदमाह॥ ३६॥ मत्प्रभावं विस्मृत्य विषपाने प्रवृत्तं मामियं स्नेहवशाद्वारयेदिति शङ्कया तामनुज्ञापयन्नाह— अहो बतेति सार्द्धैश्चतुर्भिः। अहो बत महत्कष्टं प्राप्तम्। किमेतदित्यपेक्षायामाह— क्षीरोदमथनात् यदुद्भूतं कालकूटाख्यं विषं तस्मात् उपस्थितं सम्प्राप्तं प्रजानामेतद्वैशसं दुःखं पश्येत्यन्वयः। हे भवानीत्यनेन सम्बोधनेन मम पत्नीत्वेन मत्प्रभावज्ञत्वाद्विषपाने मयि प्रवृत्ते त्वया त्रासो न कार्य इति सूचि-

**एतत्परं प्रपश्यामो न परं ते महेश्वर॥ मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः॥ ३५॥ श्रीशुक उवाच॥ तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः॥ सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम्॥ ३६॥ शिव उवाच॥ अहो बत भवान्येतत् प्रजानां पश्य वैशसम्॥ क्षीरोदमथनोद्भूतात् कालकूटादुपस्थितम्॥ ३७॥ आसां प्राणपरीप्सूनां विधेयमभयं हि मे॥ एतावान् हि प्रभोरर्थो यद्दीनपरिपालनम्॥ ३८॥ प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः॥ बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया॥ ३९॥ पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः॥ प्रीते हरौ भगवति प्रीयेऽहं सचराचरः॥ तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे॥ ४०॥**

तम्॥ ३७॥ प्राणपरीप्सूनां जिजीविषूणामासां प्रजानां मे मया अभयं विधेयमेव। हीत्यवधारणे। हि यस्मात् यद्दीनाना दुःखिना परिपालनमित्येतावानेव प्रभोः समर्थस्यार्थः कर्तव्यप्रयोजनमित्यन्वयः॥ ३८॥ आत्मनः परमात्मनो भगवतो मायया मोहितेषु अतएव परस्परं बद्धवैरेषु सत्सु साधवः कृपालवः परोपकारकाः दुःखितान् प्राणिनः स्वैः स्वकीयैः प्राणैरपि पान्ति। तत्र हेतुमाह— क्षणभङ्गुरैरिति। स्वप्राणाना क्षणान्तरे स्थितेर्दुर्लभत्वं विचार्य जीवनाशा त्यक्त्वाऽपि परोपकारेण धर्मं यशश्च चिन्वन्तीत्यर्थः॥ ३९॥ हे भद्रे इति सम्बोधनेन तस्याः सारग्राहित्वं सूचयति। कृपयतः कृपा कुर्वतः पुंसः हरिः प्रीयते। तत्प्रीत्या च किं भवेदित्याकाङ्क्षायामाह— प्रीते इति। हरौ प्रीते स च एव सर्वप्राणिवर्गः प्रीयेत अहं च प्रीये। एवं हरिप्रीत्या सर्वप्रीतौ हेतुमाह— सर्वात्मेति। तथात्वे विकारित्वं स्यादित्याशङ्क्याह—भगवतीति, अचिन्त्यैश्वर्यादिगुणपूर्ण इत्यर्थः। यस्मादेवं तस्मादिदं गरं विषमहं भुञ्जे भक्षयिष्यामि। मे मत्तः प्रजानां स्वस्तिरस्तु। अयमनव्ययः स्वस्तिशब्दः सुखार्थकः॥ ४०॥

---

१ न व्येति विकारं न प्राप्नोतीत्यव्ययम्। तद्रहित सालिङ्ग इत्यर्थ।

विश्वभावनः विश्वसुखकरो भगवान् रुद्रः एवं भवानीमामन्त्र्यानुज्ञाप्य तद्विषं जग्धुमत्तुमारेभे प्रवृत्तः। साऽपि तत्प्रभावज्ञा अनुमोदितवती ॥ ४१ ॥ ततस्तदनुमोदनान्तरं सर्वतो व्यापि प्रसर्पि हालाहलाख्यं विषं करतलीकृत्य करतलपरिमितं कृत्वा भूतभावनः प्राण्यभयकरो महादेवोऽभक्षयदित्यन्वयः ॥ ४२ ॥ जलकल्मषः जलदोषो विषं स्ववीर्यं स्वबलं तस्य महादेवस्यापि दर्शयामास। यतस्तं गले नीलं चकार। तच्च नैल्यं साधोः कृपालोः परोपकारिणो रुद्रस्य विशेषेण भूषणमेवाभूत् ॥ ४३ ॥ एवं प्रजादुःखनिवृत्त्यर्थं शिवेन कृतं विषपान निरूप्य अन्यैरपि परदुःखनिवारणे यत्नो विधेय इत्यभिप्रेत्य तत्र सदाचारप्रमाणं सहेतुकमाह— तप्यन्त इति। साधवो जनाः प्रायशो लोकतापेन तप्यन्ते तत्तान् दुःखितान् जनान् वीक्ष्य स्वयमपि ताप कुर्वन्ति दुःखिता भवन्तीत्यर्थः। यद्वा तत्तान् वीक्ष्य तत्तापनिवृत्त्युपाये प्रवृत्तास्तदनुष्ठानजन्यक्लेशमनुभवन्तीत्यर्थः। हि यस्मात् तत्परार्थदुःखसहनं पुरुषस्य पुरुषोत्तमस्य परमुत्कृष्टमाराधनम्। कथमेवं जीवस्योपकारो भगवत आराधनं भवेत् परस्परभिन्नत्वादित्याशङ्क्याह—

एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ॥ तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥ ततः करतलीकृत्य व्यापि हालाहलं विषम् ॥ अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥ तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ॥ यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥ तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ॥ परमाराधनं तद्धि[1] पुरुषस्याखिलात्मनः ॥ ४४ ॥ निशम्य[2] कर्म तच्छम्भोर्देवदेवस्य मीढुषः ॥ प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४५ ॥ प्रस्कन्नं पिबतः पाणेर्यत्किञ्चिज्जगृहुः स्म तत् ॥ वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे सम्पत्सु सर्वदानप्रकरणे हेतुत्वेन प्रतिबन्धनिवर्तकशिवकृतगरपानानिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥

अखिलात्मन इति। सर्वात्मकत्वात् यस्य कस्याप्युपकारस्तदाराधनतयैव प्रतिफलतीति भावः ॥ ४४ ॥ देवानामपि देवस्य मीढुषः भक्तकामपूरकस्य शम्भोस्तद्विषपानरूपं कर्म निशम्य दृष्ट्वा प्रजाः दाक्षायणी दक्षकन्या सती ब्रह्मा चतुर्मुखः वैकुण्ठो भगवान् विष्णुश्च शशंसिरे ॥ ४५ ॥ तस्य पिबतः पाणेः सकाशात् यत्किञ्चिद्विषं प्रस्कन्नं तद्वृश्चिकादयो जगृहुरित्यन्वयः। दन्दशूका अपि सर्पजातिविशेषाः। अपरे च ये सविषाः श्वसृगालादयस्ते। अनेन विषस्य तीव्रतोक्ता ॥ ४६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता त्वष्टमे तत्र सर्वदाननिरूपणे ॥ सप्तमो विवृतः शम्भुविषपाननिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

१ 'विद्धि' इति कुत्रचित् पाठान्तरम्। २ निशम्येति ह्रस्वत्वमार्षं, निशाम्येत्यर्थः।

अष्टमे पुनरायत्तैर्देवदैत्यैर्महोद्यमैः ॥ मथ्यमानात् समुद्रात्तु देयोत्पत्तिर्निरूप्यते ॥ १ ॥ ॥ ततः किं जातमित्यपेक्षायामाह— पीते इति। वृषाङ्केण शिवेन गरे विषे पीते सति तेऽमरदानवाः प्रीताः सन्तस्तरसा वेगेन सिन्धुं ममन्थुरित्यन्वयः । ततो मन्थनात् हविर्धानी कामधेनुरभवत् प्रादुर्भूता, निस्सृतेत्यर्थः ॥ १ ॥ हे नृप ता कामधेनुमग्निहोत्रीं अग्निहोत्रसाधनभूतघृताद्युत्पादिका देवयानस्य ब्रह्मलोकादिप्रापकस्य यज्ञस्य सम्बन्धिने मेध्याय पवित्राय हविषे हविस्सिद्ध्यर्थं ब्रह्मवादिनो वेदज्ञा यज्ञाद्यनुष्ठानपरा ऋषयो जगृहुरित्यन्वयः ॥ २ ॥ ततस्तदनन्तरं चन्द्रपाण्डुरः चन्द्रवच्छुक्लवर्णः उच्चैःश्रवा नाम हयः अश्वः प्रादुरभूत् । तस्मिन्नश्वे दैत्यराजो बलिः स्पृहां चक्रे तद्ग्रहीतुमिच्छां चक्रे गृहीतवान् । इन्द्रस्तु नैच्छत् किन्तु तूष्णीमास । तत्र

श्रीशुक उवाच ॥ पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ॥ ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ १ ॥
तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ॥ यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥ २ ॥ तत उच्चैःश्रवा नाम हयो-
ऽभूच्चन्द्रपाण्डुरः ॥ तस्मिन् बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३ ॥ तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ॥
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन् भगवतो महिम् ॥ ४ ॥ कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ॥ तस्मिन् हरिः स्पृहां
चक्रे वक्षोलङ्करणे मणौ ॥ ५ ॥ ततोऽभवत् पारिजातः सुरलोकविभूषणम् ॥ पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि
यथा भवान् ॥ ६ ॥

हेतुमाह— ईश्वरेति । असुराणां चित्तोत्साहार्थं प्रथममेवेश्वरेण कृतया ' यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ' इति शिक्षयेत्यर्थः ॥ ३ ॥ ततस्तदनन्तरं मथ्यमानात् समुद्रात् भगवतो रुद्रस्य यः श्वेताद्रिः कैलासस्तस्य महिं महिमानं शोभां शिखरतुल्यैश्चतुर्भिर्दन्तैर्हरन् ऐरावतो नाम वारणेन्द्रो हस्तिश्रेष्ठो विनिर्गत इत्यन्वयः । तमिन्द्रो गृहीतवानिति प्रसिद्धेः । सोऽपि चन्द्रवत् पाण्डुर इत्यनुषङ्गः ॥ ४ ॥ ततश्च महोदधेः सकाशात् पद्मरागमण्यात्मकं कौस्तुभाख्यं रत्नमभूदित्यन्वयः । वक्षोलङ्करणार्थं तस्मिन्मणौ हरिर्भगवान् विष्णुः स्पृहा चक्रे इत्यन्वयः ॥ ५ ॥ ततस्तदनन्तरं सुरलोकस्य विभूषणं शोभाकरः पारिजाताख्यो-वृक्षोऽभवत्, यः शश्वत्सर्वदाऽर्थिनोऽर्थैः पूरयतीत्यन्वयः । तत्र दृष्टान्तमाह— भुवीति, यथा भवान् प्रार्थितो भुवि जनानां कामान् पूरयति तथेत्यर्थः ॥ ६ ॥

ततश्च तदनन्तरं च वल्गुभिर्गत्यादिभिः स्वर्गिणा स्वर्गवासिना रमण्यः रमयित्र्यः निष्ककण्ठ्यः-उपलक्षणमन्यभूषणाना-सर्वभूषणभूषिताः सुवाससः अप्सरसो जाता इत्यन्वयः ॥ ७ ॥ सुदामा पर्वतस्तत्रैकस्यां दिशि जाता सौदामनी, स्फटिकादिमयगिरिशृङ्गेष्वधिकं विस्फुरन्ती विद्युदिव कान्त्या दिशो रञ्जयन्ती श्रीः सम्पद्रूपा साक्षान्मूर्तिमती सती आविरभूदित्यन्वयः । एवं दिशः प्रकाशनसामर्थ्ये हेतुं सूचयस्ता विशिनष्टि— भगवत्परेति । तत्र हेतुमाह— रमेति, भगवन्तं रमयतीत्यर्थः ॥ ८ ॥ तस्या रूपादिमहिम्ना आक्षिप्तं चेतो येषा ते सुरादयः सर्वे तस्या स्पृहां चक्रुरित्यन्वयः ॥ ९ ॥ एवं लक्ष्म्याः प्रादुर्भावप्रकारमुक्त्वा भगवद्वक्षसि स्थितया तया विलोकिताना देवानां यथापूर्वं सर्वसम्पत्प्राप्तिं असुराणा च तदवलोकरहितानां ततो विपर्ययं वक्तुं तदभिषेकादिमहोत्सवपूर्वक ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह— तस्या इत्यादिना 'अथासीद्वारुणी'इत्यतः[1] प्राक्तनेन ग्रन्थेन । तस्या मूर्तिमत्याः

ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ॥ रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ७ ॥ ततश्चाविरभूत् साक्षाच्छ्री रमा भगवत्परा ॥ रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा ॥ ८ ॥ तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ॥ रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९ ॥ तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम् ॥ मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ १० ॥ आभिषेचनिका भूमिराहरत् सकलौषधीः ॥ गावः पञ्च पवित्राणि वसन्तो मधुमाधवौ[2] ॥ ११ ॥ ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि ॥ जगुर्भद्राणि गन्धर्वा नट्यश्च ननृतुर्जगुः ॥ १२ ॥

श्रियश्च महदद्भुतमासन महेन्द्रः आनिन्ये समर्पितवानित्यन्वयः । तथा मूर्तिमत्यः सत्यः सरिच्छ्रेष्ठाः हेमकुम्भैः शुचि पवित्रमभिषेकयोग्य जलं आनिन्युरित्यनुषङ्गः ॥ १० ॥ आभिषेचनिका अभिषेकेऽपेक्षिताः सकलाः औषधीर्भूमिराहरत् समर्पितवती । गावः पञ्च पवित्राणि दुग्धादिपञ्चगव्यानि आजह्रुः । वसन्ताख्यः ऋतुः मधुमाधवौ चैत्रवैशाखभवं फलपुष्पादिकम् । मधुमाधवमिति पाठान्तरेपि द्वन्द्वैक्येऽयमेवार्थः । यद्वा मधुमासोद्भवं माधवं मधु ॥ ११ ॥ यथाविधि शास्त्रोक्तप्रकारेण तस्या अभिषेक अभिषेकोचितविधिं ऋषयः कल्पयाञ्चक्रुरित्यन्वयः । तथा गन्धर्वा भद्राणि अशुभहराणि मङ्गलरूपाणि गीतानि जगुः । तथा नट्यः नटानां स्त्रियश्च ननृतुर्जगुश्च ॥ १२ ॥

१ अष्टाविंशतिश्लोकपर्यन्तेन । २ 'मधुमाधवम्' इति पाठान्तरम् ।

मेघा मन्दं मन्दं गर्जितवन्तः, तुमुलो महान् निस्स्वनः शब्दो येषां तान् मृदङ्गादीन् शङ्खादींश्च तदधिकारिणो व्यनादयन् वादितवन्त इत्यन्वयः ॥ १३ ॥ तत एवमभिषेकसाधनसम्पत्त्यनन्तरं द्विजेरितैर्ब्राह्मणपठितैः सूक्तवाक्यैः सह पूर्णकलशैः जलपूर्णघटैर्देवीं द्योतमाना पद्मकरा कमलहस्ता सतीं भगवदेकपरायणां श्रियं लक्ष्मीं दिगिभाः अभिषिषिचुरित्यन्वयः ॥ १४ ॥ अभिषेकानन्तरं च पीते कौशेये कीटोत्पादितकोशसूत्रोत्पन्ने द्वे वाससी वस्त्रे परिधानीयोत्तरीये समुद्रः सम्यक् श्रद्धाभक्तिपूर्वकं उपाहरत् समर्पितवान्, मधुना हेतुना मत्ताः प्रसक्ताः षट्पदा भ्रमरा यस्यां तां वैजयन्तीनाम्नीं स्रजं वरुणः समुपाहरदित्यन्वयः ॥ १५ ॥ भूषणानि विश्वकर्मा समुपाहरदित्यनुषङ्गः । सरस्वती हारं समुपाहरत् । अजो ब्रह्मा पद्मं समुपाहरत् । नागाश्च कुण्डले द्वे समुपाहरन् ॥ १६ ॥ ततस्तदनन्तरं कृतस्वस्त्ययना भूषणकुङ्कुमादिना कृतालङ्कारा नदन्तो द्विरेफा भ्रमरा यस्यां तामुत्पलस्रजं

**मेघा मृदङ्गपणवमुरजानकगोमुखान् ॥ व्यनादयन् शङ्खवेणुवीणास्तुमुलनिस्स्वनान् ॥ १३ ॥ ततोऽभिषिषिचुर्देवीं श्रियं**
**पद्मकरां सतीम् ॥ दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥ १४ ॥ समुद्रः पीतकौशेयवाससी समुपाहरत् ॥ वरुणः**
**स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १५ ॥ भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ॥ हारं सरस्वती पद्ममजो नागाश्च**
**कुण्डले ॥ १६ ॥ ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ॥ चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं**
**दधती सुशोभनम् ॥ १७ ॥ स्तनद्वयं चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम् ॥ ततस्ततो नूपुरवल्गुसिञ्जि-**
**तैर्विसर्पती हेमलतेव सा बभौ ॥ १८ ॥ विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ॥ गन्धर्वयक्षासुर-**
**सिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत ॥ १९ ॥**

कमलमालां पाणिना प्रगृह्य गृहीत्वा तथा सुष्ठु कपोलयोः कुण्डले यस्मिन् तत् तथा सव्रीडहासो यस्मिंस्तत् सुशोभनं वक्त्रं दधती सती स्वमनोज्ञवरविलोकनार्थं आसनाच्चचालेत्यन्वयः ॥ १७ ॥ तथाऽतिकृशमुदरं यस्याः सा समं तुल्यं निरन्तरं मध्येऽन्तरालरहितं चन्दनकुङ्कुमाभ्यामुक्षितं लिप्तं स्तनद्वयं च दधती नूपुराणां वल्गुशिञ्जितैर्मनोहरशब्दैरुपलक्षिता ततस्ततः विसर्पती गच्छती हेमलतेव बभावित्यन्वयः ॥ १८ ॥ निरवद्यं सर्वदोषरहित ध्रुव विनाशरहित अव्यभिचारिणो नित्याः सन्तो गुणा यस्मिंस्तत् आत्मनः स्वस्य पदमाश्रयं पतिं गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु विलोकयन्ती विचिन्वन्त्यपि नान्वविन्दत, क्वचित्कस्यचिद्दोषस्य सद्भावात् ॥ १९ ॥

एतदेव प्रपञ्चयति— नूनमिति त्रिभिः। यस्य कस्यचिन्नूनं निश्चितं तपोऽस्ति परन्तु तस्य दुर्वासःप्रभृतिवन्मन्युनिर्जयो नास्ति, तथाच मन्युनैव तपसो विनाशस्यापि निश्चयाद्विफलत्वमेवेति भावः । कचिच्च बृहस्पतिशुक्रादिवत् ज्ञानमस्ति परन्तु तत् सङ्गवर्जितं वैराग्यविशिष्टं नास्ति, तथाच वैराग्याभावेनेन्द्रियविजयाभावात् विषयासक्त्या ससारस्यावश्यम्भावात् ज्ञानस्य वैय्यर्थ्यमिति भावः। कश्चिन्महान् महत्त्वमप्यस्ति परन्तु तस्य ब्रह्मसोम-बृहस्पत्यादिवत् कामनिर्जयो नास्ति, तथाच कामवशादुत्पथवृत्त्यैव दुर्यशसा महत्त्वहेतोः सुयशसो विनाशान्महत्त्वस्यापि वैय्यर्थ्यमेवेति भावः। यः परतोव्यपाश्रयः पराश्रित इन्द्रादिवत्स किमीश्वरः? पराधीनत्त्वात् ॥ २० ॥ कचित् शुक्रादौ धर्मोऽस्ति परन्तु तत्र भूतसौहृदं प्राणिमैत्रं नास्ति दैत्यपुरोहितत्वादिना परपीडाया प्रवृत्तिदर्शनात् तद्दोषेण धर्मस्योपक्षीणत्वेन वैय्यर्थ्यात्। कचित्सकामेषु पुरुषेषु त्यागो दानमस्ति तत्तु न मुक्तिकारणम्, कामप्राप्त्या दानस्योपक्षीणत्वेन वैय्यर्थ्यात् । पुंसः कार्तवीर्यादेरिव वीर्यं बलमस्ति परन्तु तत् अजस्य कालस्य वेगेन निष्कृतं परिहृतं न भवति,

नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं कचित्तच्च न सङ्गवर्जितम् ॥ कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतोव्यपाश्रयः ॥२०॥ धर्मः कचित्तत्र न भूतसौहृदं त्यागः कचित्तत्र न मुक्तिकारणम् ॥ वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गधर्जितः ॥ २१ ॥ कचिच्चिरायुर्नहि शीलमङ्गलं कचित्तदप्यस्ति न वेद्यमायुषः ॥ यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्च न काङ्क्षते हि माम् ॥ २२ ॥ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयतयाऽगुणाश्रयम् ॥ वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २३ ॥[1]

तथाच कालग्रस्तत्वाद्बलस्यापि वैय्यर्थ्यम्। गुणसङ्गवर्जितः सनकादिवत् विषयभोगासक्तिरहितः द्वितीयो मम वरयोग्यो न भवति। हिशब्दो हेतौ। सर्वदा समाधिनिष्ठत्वात् तद्वरणे वैय्यर्थ्यम् ॥ २१ ॥ कचिन्मार्कण्डेयादिवच्चिरायुरप्यस्ति परन्तु तस्य शीलं स्वभावो मङ्गलं स्त्रीणा सुखप्रदं न भवति, सदा तद्विरोधीन्द्रियदमनशीलत्वात्। कचिद्दैत्यादौ हिरण्यकशिप्वादिवत्तदपि शीलमङ्गलमस्ति परन्तु तस्य आयुषः स्थैर्यं वेद्यं ज्ञातुं निश्चेतुं योग्यं न भवति, भगवद्विद्वेषेणाकस्मादपि मृत्युसम्भवात्, तथाच तथाविधशीलस्यापि वैय्यर्थ्यम्। यत्र कुत्र च श्रीमहादेवे मार्कण्डेयादिवत्सदेन्द्रियदमनाद्यभावात् शीलमङ्गलमायुर्निश्चयश्चेत्युभयमप्यस्ति, न चान्यः पूर्वोक्तः कश्चिद्दोषः परन्तु सोऽप्यमङ्गलः श्मशानवासाद्यमङ्गलचेष्टितः । भगवन्तं लक्षीकृत्याह— कश्चेति। कश्चित्सुमङ्गलः सर्वदोषराहितत्वे सति सर्वशुभगुणपरिपूर्णोऽस्ति परन्तु स मा न हि काङ्क्षते, पूर्णानन्दत्वेनात्मारामत्वात् ॥ २२ ॥ एवं लक्ष्म्या विमर्शमुक्त्वा ततः किं कृतवतीत्यपेक्षायामाह— एवमिति। एवं विमृश्य सर्वत्र गुणदोषान्विचार्य रमा लक्ष्मीर्निरपेक्षं स्वापेक्षाराहितमपि

[1] ' वर निजैकाश्रयतागुणाश्रयम् ' इति पाठान्तर कचिदस्ति ।

मुकुन्दं मुक्तिदातारं श्रीविष्णुमेव वरं वव्रे इत्यन्वयः । सापेक्षानन्यान् विहाय किमिति निरपेक्षं तं वव्रे इत्यपेक्षया तन्माहात्म्यं विचार्येत्यभिप्रेत्य तं वर्णयति— अव्यभिचारिभिर्नित्यैः सद्भिरप्राकृतत्वेन दिव्यैः " परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानक्रिया बलं च " इति श्रुतेः धर्मज्ञानादिभिर्गुणैः निजैकाश्रयतया स्वरूपभूतपरमानन्दानुभवेन अन्यनैरपेक्ष्येण च वरं सर्वोत्तमम् । तत्र हेतुमाह—अगुणाश्रयमिति, प्रकृतिगुणवश्यत्वातीतमित्यर्थः । सर्वैर्गुणैरणिमादिभिरपि निजाश्रयार्थमपेक्षितं अणिमादिसिद्ध्यधिष्ठातारमित्यर्थः । अतएव स्वस्यापि ईप्सितमिष्टं निजैकाश्रयतयेत्यस्यान्यथाऽप्यन्वयः सम्भवति । तथाहि न लौकिकवरमिव वव्रे किन्तु निजैकाश्रयतयेति । यद्वा निजैकाश्रयतया गुणैरपेक्षितमिति । यद्वा निजैकाश्रयतयेप्सितमिति । अयं भावः— यद्यपि स्वयमात्मारामत्वेन अन्यनिरपेक्षस्तथापि आश्रिता अणिमादिसिद्धिर्यथा नोपेक्षते किन्तु अङ्गीकरोति तथा मामप्यङ्गीकरिष्यति तावतैव तत्सेवयाऽहं कृतार्था स्यां, किमन्यैः प्राकृतैर्नैरैरिति निश्चित्य तमेव वृतवतीति ॥ २३ ॥ तया तद्वरणप्रकारमाह— तस्येति । तस्य भगवतो विष्णोरंसदेशे स्कन्धे उशतीं कमनीयां नवकञ्जमालां निधाय सव्रीडहासेन विकसन्नयनं तेन तस्य उरः वक्षः स्वधाम याता

**तस्यांसदेश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ॥ तस्थौ निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन याता ॥ २४ ॥ तस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षो निवासमकरोत् परमं विभूतेः ॥ श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५ ॥**

इदं मम स्थानं भवत्विति प्रतीक्षमाणा सती तस्य निकटे तस्थावित्यन्वयः । मालायाः कमनीयत्वं दर्शयति— । माद्यन्तो ये मधुव्रता भ्रमरास्तेषा वरूथस्य समूहस्य गिरा शब्देन उपघुष्टा नादितामिति ॥ २४ ॥ तस्याः श्रियः लक्ष्म्याः जगतो जनन्याः त्रिजगतो जनको भगवान् विष्णुः परमं सुस्थिरत्वात्परमानन्दव्यञ्जकत्वाच्च सर्वस्थानापेक्षया उत्कृष्टं सुवक्षो निवासमकरोदित्यन्वयः । ननु सर्वतः परिपूर्णानन्दत्वेन सर्वतो विरक्तत्वात् किमर्थं वक्षस्तत्स्थानमकरोदित्याशङ्क्य तस्याः सर्वसम्पद्धेतुत्वात् स्वशरणागतानां स्वभक्तानां त्रिलोकाधिपतीनां समृद्ध्यर्थमेव, न स्वसुखार्थमित्यभिप्रेत्य श्रियं विशिनष्टि— विभूतेरिति । विविधा भूतयो विभवा यस्यास्तस्याः । यदर्थं वक्षस्तन्निवासमकरोत्तत्तथैव जातं कथमीश्वरसङ्कल्पोऽन्यथा स्यादिति दर्शयति— श्रीरिति । यत्र भगवद्वक्षसि स्थिता श्रीः सकरुणेन निरीक्षणेनैव स्वाः स्वकीयाः प्रजाः ऐधयत समवर्धयदित्यन्वयः । ताः प्रजाः का इत्यपेक्षायां ता दर्शयति— साधिपतींस्त्रिलोकानिति ॥ २५ ॥

तदा च ब्रह्मादिदेवानां महानुत्सवो जात इत्याह—शङ्खेति द्वयेन । सस्त्रीणा देवानुगानां गन्धर्वादीना नृत्यता गायता च सता वादित्राणां शङ्खादीना पृथक् पृथक् स्वनः शब्दोऽभूदित्यन्वयः ॥ २६ ॥ पुष्पवर्षिणः पुष्पाणि वर्षन्तः सन्तो ब्रह्मादयो मुख्या येषु ते सर्वे विश्वसृजः प्रजापतयस्तल्लिङ्गैः विष्णुप्रतिपादकैः अवितथैः यथार्थमन्त्रैः विभु स्वरक्षासमर्थं भगवन्तमीडिरे तुष्टुवुरित्यन्वयः । स्तुतिश्च ग्रन्थाद्बहिर्ज्ञेया ॥ २७ ॥ श्रिया विलोकितानां भगवदनुगृहीतानां देवादीनां सुखसम्पत्तिमाह— श्रियेति । श्रिया विलोकिता देवादयः शीलादिगुणसम्पन्नाः सन्तः परां निर्वृतिं परमानन्द लेभिरे इत्यन्वयः ॥ २८ ॥ भगवदनुग्रहविरहिताना दैत्यादीनामवस्थामाह—निस्सत्त्वा इति । यदा च लक्ष्म्या उपेक्षिताः नावलोकितास्तदा दैत्यदानवाः निस्सत्त्वा धैर्यरहिताः लोलुपाः स्त्र्यादिविषयासक्ताः निरुद्योगाः व्यापारसामर्थ्यरहिताः गतत्रपाः लज्जारहिताश्च बभूवुरित्यन्वयः । हे राजन्निति

शङ्खतूर्यमृदङ्गानां वादित्राणां पृथुः स्वनः ॥ देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २६ ॥ ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ॥ ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २७ ॥ श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ॥ शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम् ॥ २८ ॥ निस्सत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः ॥ यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २९ ॥ अथासीद्वारुणी देवी कन्या कमललोचना ॥ असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ ३० ॥ अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः ॥ उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥ ३१ ॥ दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ॥ श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३२ ॥

सम्बोधनेन तव तु भगवदनुग्रहोऽस्त्येति सूचयति ॥ २९ ॥ अथ लक्ष्मीनिस्सरणानन्तरं वारुणी वरुणदैवत्यं यदन्नं तन्मयी या सुरा तदभिमानिनी देवी देवता कन्यावस्थापन्ना कमलवल्लोचने यस्याः सा आसीत् समुद्रादिनिस्सृता । तां तु हरेः विष्णोरनुमतेन ते पूर्वोक्तावस्थापन्ना असुराः जगृहुरित्यन्वयः ॥ ३० ॥ हे महाराज अथोऽनन्तरममृतार्थिभिः काश्यपैः देवासुरैर्मथ्यमानादुदधेः सकाशात् परमाद्भुतः अत्यलौकिकस्वरूपः पुरुषः उदतिष्ठत् विनिर्गत इत्यन्वयः । हे महाराजेति सम्बोधनं सावधानतार्थम् ॥ ३१ ॥ तदद्भुतस्वरूपमेव दर्शयति— सार्द्धद्वयेन । दीर्घौ पीवरौ च दोर्दण्डौ भुजौ यस्य सः । कम्बुग्रीवः कम्बुः शङ्खस्तद्वाभिवत्त्रिरेखापन्ना ग्रीवा यस्य सः । अरुणे ईक्षणे नेत्रे यस्य सः । श्यामलः मेघवर्णः । तरुणावस्थापन्नः । स्रग्वी पुष्पमालाधरः । अन्यैश्च सर्वाभरणैः भूषितः ॥ ३२ ॥

पीतं वासो वस्त्रं यस्य सः । महोरस्कः दीर्घवक्षाः । सुमृष्टे मणिमये कुण्डले यस्य सः । स्निग्धः कुञ्चितश्च केशानामन्तोऽपि यस्य सः । सुभगः सुन्दरः सिंहवत् विक्रमो गतिर्यस्य सः ॥ ३३ ॥ अमृतेन आपूर्णं कलशं बिभ्रत् । तथा वलयाभ्यां भूषितः । एवमद्भुतरूपः स क इत्यपेक्षायामाह— स इति । स पुरुषो वै शास्त्रप्रसिद्धः साक्षाद्भगवतो विष्णोरंशांशेन सम्भवः प्रादुर्भावो यस्य सः । धन्वन्तरिरिति ख्यातः प्रसिद्धः । आयुर्वेददृक् वैद्यशास्त्रप्रवर्तकः । इज्यभाक् यज्ञभागभोक्ता ॥ ३४ ॥ तं पुरुषं तथा अमृतेन आभृतं परिपूर्णं कलशं च आलोक्य सर्वे असुराः सर्वाणि वस्तूनि धेन्वादीन्यपि लिप्सन्तो लब्धुमिच्छन्तस्तरसा वेगेन कलशमहरन्नित्यन्वयः ॥ ३५ ॥ तस्मिन्नमृतभाजने कलशे असुरैर्नीयमाने सति विषण्णं विषादं प्राप्तं मनो येषा ते तथाभूताः सन्तो देवा हरिं भगवन्तमेव शरणमाययुरित्यन्वयः ॥ ३६ ॥ इत्येवं तेषां देवानां स्वभक्ताना दैन्यमालोक्य भगवान् मा खिद्यत खेदं मा कुरुतेत्याहेति शेषेणान्वयः । अत्यायासेनोत्पादितस्य अमृतस्य शत्रुभिर्हृतत्वात्कथं विषादो न कार्य इत्यपेक्षायामाह— व इति । वो युष्माकमर्थे कार्यं

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ॥ स्निग्धकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥ ३३ ॥ अमृतापूर्णकलशं बिभ्रद्वलयभूषितः ॥ स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः ॥ धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् ॥ ३४ ॥ तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥ लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ॥ ३५ ॥ नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ॥ विषण्णमनसो देवा हरिं शरणमाययुः ॥ ३६ ॥ इति तद्दैन्यमालोक्य भगवान् भृत्यकामकृत् ॥ मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३७ ॥ मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम् ॥ अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ३८ ॥ देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः ॥ सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३९ ॥

अहं साधयिष्यामि । कथमित्यपेक्षायामाह— मिथ इति । मिथः परस्परं तेषां दैत्याना कलहोत्पादनेनेति शेषः । यद्वा मिथो रहः अन्यालक्षितं यथा स्यात्तथेत्यर्थः । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरकोशात् । किञ्च स्वमायया मोहिनीरूपधारणेन चेति शेषः ॥ ३७ ॥ एवं भगवता यत्प्रतिज्ञातं तदेव जातमित्याह— मिथ इति । तदर्थे अमृतार्थे तर्षचेतसां तृष्णाव्याकुलचित्तानां तेषां दैत्याना मिथः कलिरभूदित्यन्वयः । कलहमेव दर्शयति— अहमिति । अहं पूर्वं पास्यामीति शेषः । इति वदतां समबलानामिति शेषः । हे प्रभो निर्जितकामादिदोष ॥ ३८ ॥ दुर्बलाना प्रबलान् प्रति आक्रोशं दर्शयति— देवा अप्येतस्मिन्नमृते स्वभागमर्हन्तीति । तत्र हेतुमाह— ये इति । ये देवाः तुल्येनायासेन हेतव अमृतसाधका इत्यर्थः । एषः तुल्यायासवतां भागदानलक्षणो धर्मः सनातनो नत्विदानीमस्माभिः कल्प्यते । तत्र दृष्टान्तमाह— सत्रेति । सत्रयागे यथा सर्वेषा समं फलं भवति तद्वदित्यर्थः ॥ ३९ ॥

१ एतदग्रे 'इत्युक्त्वा सान्त्वयन् देवास्तत्रैवान्तर्दधे हरिः' इत्यधिकमर्धं एकस्मिन् पुस्तके ।

हे राजन् अमृतालाभेन जातो मत्सरः उत्कर्षासहनस्वरूपो येषां ते दुर्बला दैतेया गृहीतकलशान् प्रबलान् स्वान् दैत्यान् वै निश्चयेन इत्येवं मुहुः प्रत्यषेधन्नित्यन्वयः ॥ ४० ॥ एवं कलहमुत्पाद्य भगवता यत्कृतं तदाह— एतस्मिन्निति । तेषां परस्परं कलहमध्ये एव विष्णुरनिर्देश्यं वर्णयितुमशक्यं यतः परमाद्भुतमत्यलौकिकं परमसुन्दरं योषिद्रूपं दधारेत्यन्वयः । किमर्थं तथा रूपं दधारेत्यपेक्षायां देवकार्यसिद्ध्यर्थमिति सूचयंस्तं विशिनष्टि—सर्वोपायविदिति । दैत्यमोहनं विना देवकार्यं न सेत्स्यति तन्मोहनं च स्त्रीरूपेणैव सम्भवति नान्यथेति तथा रूपं दधारेति भावः । तद्धारणे मोहने च सामर्थ्यं सूचयन् विशिनष्टि— ईश्वर इति ॥ ४१ ॥ तद्रूपं वर्णयति— प्रेक्षणीयेति पञ्चभिः । प्रेक्षणीयमुत्पलमिव श्यामम् । सर्वेष्ववयवेषु सुन्दरम् । समानयोः कर्णयोराभरणे यस्मिंस्तत् । सुकपोलं च तदुत्कृष्टं नासिकं चाननं यस्मिंस्तत् ॥ ४२ ॥ नवयौवनेन हेतुना निरशेषेण वृत्तौ वर्तुलौ यौ स्तनौ

इति स्वान् प्रत्यषेधन् वै दैतेया जातमत्सराः ॥ दुर्बलाः प्रबलान् राजन् गृहीतकलशान् मुहुः ॥ ४० ॥ एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४१ ॥ प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ॥ समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४२ ॥ नवयौवननिर्वृत्तस्तनभारकृशोदरम् ॥ मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥ ४३ ॥ बिभ्रत् स्वकेशभारेण मालामुत्फुल्लमल्लिकाम् ॥ सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥ ४४ ॥ विरजाम्बरसंवीतनितम्बद्वीपशोभया[1] ॥ काञ्च्या प्रविलसद्वल्गु चलच्चरणनूपुरम् ॥ ४५ ॥ सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ॥ दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे सर्वदानप्रकरणे देयोत्पत्तिनिरूपणं नामाऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥

तयोर्भारेणैव कृशमुदरं यस्मिंस्तत् । मुखस्य आमोदे सुगन्धे अनुरक्ता ये अलयो भ्रमरास्तेषां झङ्कारशब्देन उद्विग्ने भीते लोचने यस्य तत् ॥ ४३ ॥ उत्फुल्ला मल्लिका यस्यां तां मालां स्वकेशभारेण बिभ्रत् । शोभना ग्रीवा येन तत्कण्ठाभरणं यस्मिंस्तत् । सुभुजयोरङ्गदाभ्यां भूषितम् ॥ ४४ ॥ विरजाम्बरेण संवीतो नितम्ब एव द्वीपः - विशालत्वात् - तत्र शोभा यस्यास्तया काञ्च्या प्रकर्षेण विलसद्वल्गु यथा भवत्येव चलतोश्चरणयोर्नूपुरे यस्मिंस्तत् ॥ ४५ ॥ सव्रीडेन स्मितेन सह विक्षिप्ता कम्पिता या भ्रूस्तस्य विलासेन सह यान्यवलोकनानि तैर्दैत्ययूथपानां चेतस्सु मुहुर्मुहुः काममुद्दीपयादित्यन्वयः ॥ ४६ ॥ इति श्रीवल्लभाचार्यवश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र सर्वदाननिरूपणे ॥ अष्टमो विवृतोऽध्यायो देयोत्पत्तिनिरूपकः ॥ ३ ॥ ॥ छ ॥

[1] 'विरजोम्बरसवीत—'इति पाठान्तरम् ।

नवमे तु स्वभक्तेभ्यः सुधादानं कृतं महत् ॥ बिभ्रता मोहिनीरूपं हरिणेति निरूप्यते ॥ १ ॥ ॥ ततश्च ते असुराः अमृतार्थं त्यक्तसौहृदाः त्यक्तस्नेहाः अतएव अन्योन्यतः क्षिपन्तो दुर्वचनैस्तिरस्कुर्वन्तो दस्युधर्माणः अन्यायेनाप्यमृतग्रहणे कृतनिश्चयाः अतोऽन्योन्यतः सुधापात्रं हरन्तः सन्तः स्त्रियं मोहिनीरूप भगवन्तं ददृशुरित्यन्वयः ॥ १ ॥ तद्दर्शनाच्च जातो हृच्छयः कामो येषा ते असुराः अहो अस्या रूपं सौन्दर्य अहो अस्या धाम द्युतिः अहो अस्या नवं वयः इति वदन्तस्तामभिद्रुत्य प्राप्य पप्रच्छुरित्यन्वयः ॥ २ ॥ तेषा प्रश्नमेव दर्शयति— का त्वमिति त्रिभिः । कञ्जपलाशवत् कमलपत्रवदक्षिणी यस्यास्तत्सम्बोधनं हे कञ्जपलाशाक्षीति । वामौ मनोहरौ ऊरू यस्यास्तत्सम्बोधनं हे वामोरु इति सम्बोधनेन तद्विषयकं जातं मनसिजं सूचयन्ति— नोऽस्माकं मनांसि मथ्नन्तीव क्षोभयन्तीव त्वं काऽसि, कुतो वा स्थानादागताऽसि, अत्रागमनेन किं चिकीर्षसि कर्तुमिच्छसि, कस्य कन्याऽसि ? एतत्सर्वं नो वद कथय । वस्तुतस्तु मनसः क्षोभो मनसिजो नैव इतीवशब्दप्रयोग इति ज्ञेयम् ॥ ३ ॥ ननु परस्त्रियां

श्रीशुक उवाच ॥ तेऽन्योन्यंतोऽसुराः[1] पात्रं हरन्तस्त्यक्तसौहृदाः ॥ क्षिपन्तो दस्युधर्माण आयान्तीं ददृशुः स्त्रियम् ॥ १ ॥ अहो रूपमहो धाम अहो अस्या नवं वयः ॥ इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ २ ॥ का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि ॥ कस्यासि वद वामोरु मथ्नन्तीव मनांसि नः ॥ ३ ॥ न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ॥ नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः ॥ ४ ॥ नूनं त्वं विधिना सुभ्रूः प्रेषिताऽसि शरीरिणाम् ॥ सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥ ५ ॥ सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि ॥ ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥ ६ ॥

कथमेवं कामदृष्टिं कुरुतेत्याशङ्क्याहुः— नेति । त्वा त्वाममरादिभिरस्पृष्टपूर्वां वयं न जानीम इति न, अपितु जानीम एव। अतस्त्वयि कामदृष्टिर्नायुक्तेति भावः ॥ ४ ॥ अतस्त्वद्दर्शनं अस्माकमीश्वरेणैव सम्पादितमित्याहुः— नूनमिति । सुशोभने भ्रुवौ यस्यास्तत्सम्बोधनं हे सुभ्रु । शरीरिणां सर्वेन्द्रियाणां मनसश्च प्रीतिं विधातुं सघृणेन परमदयालुना परमेश्वरेण किं प्रेषिताऽसि ? नूनमेवमेव, अन्यथाऽस्माकं तव दर्शनमतिदुर्लभमित्यर्थः ॥ ५ ॥ तस्या अनुनयार्थं तस्यां स्वविश्वासं सूचयन्तः स्वाभिप्रेतं त्वया पश्चाद्विधेयं सम्प्रत्यस्मत्कलहं त्वं निवारयेत्याहुः— सेति द्वयेन । हे मानिनि हे सुमध्यमे इति सम्बोधनद्वयमात्मनस्तद्वशवर्तित्वे हेतुसूचनार्थम् । नोऽस्माकमेकवस्तुनि अमृतार्थे स्पर्धमानानां विवदमानाना अतएव बद्धवैराणा ज्ञातीना सा ईश्वरप्रेषिता त्वं श सुखं विधत्स्वेत्यन्वयः ॥ ६ ॥

---

[1] 'तेऽन्योन्यमसुरा' इति कुत्रचित् पाठान्तरम् ।

कथं युष्माकं ज्ञातित्वं कथं वा सुखं विधेयं तत्राहुः— वयमिति । वयं कश्यपस्य दायादाः अपत्यानि अतः परस्परं भ्रातरः कृतपौरुषाः अमृतार्थं कृततुल्यप्रयत्नाः अतोऽस्माकं भेदो विग्रहो यथा न भवेत्तथा यथान्यायं यथायोग्यं अमृत त्वं विभजस्व विभागेन देहीत्यन्वयः ॥ ७ ॥ मायया स्वेच्छया योषिद्वपुर्हरिः दैत्यैरित्येवमुपामन्त्रितः सम्प्रार्थितः सन् स्वाभिलषितसिद्ध्यर्थं तेषां मोहनार्थं प्रहस्य रुचिरापाङ्गैस्तान्निरीक्षन्निदं वक्ष्यमाणं अब्रवीदित्यन्वयः ॥ ८ ॥ भगवद्वाक्यमेव दर्शयति— कथमिति द्वयेन । हे कश्यपदायादाः मयि पुंश्चल्या यूयं कथ सङ्गताः विश्वासं गताः ?[1] । हि यस्मात् पण्डितः कामिनीषु विश्वासं जातु कदाचिदपि न याति । अनेन पितृनामग्रहणपूर्वकसम्बोधनेनाश्चर्यं एतद्यन्महाकुलोत्पन्ना अपि यूयं मूर्खा इति सूचितम् ॥ ९ ॥ कुतो विश्वासं न यातीत्यपेक्षायामाह— शालेति । शालावृका वानराः श्वानो वा तेषा स्वैरिणीना स्वेच्छाचारिणीनां स्त्रीणा च

वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ॥ विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ७ ॥ इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ॥ प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ८ ॥ श्रीभगवानुवाच ॥ कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः ॥ विश्वासं पण्डितो जातु कामिनीषु न याति हि ॥ ९ ॥ शालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ॥ सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ॥ १० ॥ श्रीशुक उवाच ॥ इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ॥ जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ११ ॥ ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ॥ यद्यभ्युपेत क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥ १२ ॥

सख्यान्यनित्यान्याहुः, पण्डिता इति शेषेणान्वयः । तत्र हेतुमाह— नूत्नं नूत्नं नूतनं नूतनं पुरुषं सुखं च विचिन्वतामन्वेषमाणानाम् । हे सुरद्विष इति सम्बोधनेन मम भक्तसुरद्वेषेण युष्माकमेवं मोहो जातो येन मयि विश्वासं गच्छतेति सूचयति ॥ १० ॥ इत्येवं तस्या मोहिन्याः क्ष्वेलितैः छलवचनैः आश्वस्तं विश्वासं गतं मनो येषां ते असुराः भावेन अभिप्रायेण गम्भीरमन्यैर्दुष्प्रवेश यथा भवत्येवं जहसुः अमृतभाजनं ददुश्चेत्यन्वयः ॥ ११ ॥ ततश्चामृतभाजनं गृहीत्वा ईषत् स्मितेन शोभा यस्यास्तया गिरा हरिर्बभाषे इत्यन्वयः । तद्भाषणं दर्शयति— क्व च कस्मिन्नप्यंशे मया कृतं साधु वा असाधु वा यदि अभ्युपेत अङ्गीकुरुत तर्हि वो युष्माकमिमां सुधां विभजे यथोचितं विभागं कृत्वा ददामि । नो चेत्तर्हि किमस्माकं प्रयोजनमिति ॥ १२ ॥

[1] 'इत्युपामन्त्रित' इतीय शकोक्ति ।

तस्या मोहिन्या इत्येवमभिव्याहृतं वचनमाकर्ण्य श्रुत्वा ते असुरपुङ्गवाः बुद्धिमत्त्वेनासुरेषु श्रेष्ठा अपि तस्यास्तद्वचनं तथा अस्मभ्यं विभज्य देहि वा स्वयं पिब वा अन्येभ्यो वा देहि क्वचिदन्यत्र वा प्रक्षिप यथेच्छसि तथा कुर्वित्येवं अन्वमंसत अङ्गीकृतवन्तः। कथं तेषामतिनिपुणानां शत्रुभूते तस्मिन् विश्वासस्तत्राह— अप्रमाणविदस्तस्या इति। प्रमाणमियत्ता। अन्यत्र नैपुण्यं चलति, न तु भगवति महामायाविनीति भावः॥ १३॥ अमृतलाभस्य मोहिन्यधीनत्वेन स्वस्थमनसोऽमृतपानस्य मङ्गलरूपत्वान्नियमपूर्वकमेव तदुचितमिति मत्वा अथ मोहिनीकृतसमयानन्तर उपवासादिकं कृत्वा द्विजैः कृतस्वस्त्ययनाः अभिभूषिताश्च सन्तोऽमृतपानार्थं कुशेषु प्राविशन् विविशुरिति द्वयोरन्वयः॥ १४॥ यथोपजोषं यथाप्रीति अहतानि नवीनानि वासांसि परिधाय भूषणैश्चाभिभूषितास्ते सर्वे प्राक् पूर्वमग्रं येषा तेषु कुशेषु प्राविशन्नित्यन्वयः। अहतस्य लक्षणम्— 'अहतं यन्त्र-

**इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ॥ १३ ॥ अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम्॥ दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः॥ १४॥ यथोपजोषं वासांसि परिधायाहतानि ते॥ कुशेषु प्राविशन् सर्वे प्रागग्रेष्वभिभूषिताः॥ १५॥ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ॥ धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥ १६ ॥ तस्यां नरेन्द्र करभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी॥ सा कूजती कनकनूपुरसिञ्जितेन कुम्भस्तनी कलशपाणिरथाविवेश॥ १७॥**

निर्मुक्तमुक्तं वासः स्वयम्भुवा॥ शस्तं तन्माङ्गलिकेषु तावन्मात्रेण सर्वदा' इति॥ १५॥ धूपैरामोदिताया सुरभीकृताया तथा माल्यैर्दीपकैश्च जुष्टाया शालाया सुरेषु दितिजेषु दैत्येषु च प्राङ्मुखेषूपविष्टेषु सत्सु अथानन्तरं तस्यां साऽऽविवेशेत्युत्तरेणान्वयः॥ १६॥ हे नरेन्द्रेति सम्बोधनमियमपि भगवल्लीलाऽत्याश्चर्यजनिका सावधानतया श्रोतव्येति सूचनार्थम्। ता शालाप्रविष्टा वर्णयति— 'मणिबन्धादाकनिष्ठं करस्य करभोः बहिः' इत्यमरः। करभसदृशौ सुवृत्तावूरू यस्याः सा। उशत्कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन विशालया श्रोण्या अलसा मन्दा गतिर्यस्याः सा। करभोरुलसद्दुकूलेति पाठान्तरे करभसदृशयोरूर्वोर्लसत् शोभायमानं दुकूलं यस्याः सा चासौ श्रोणी तस्यास्तटस्तेन अलसगतिश्च सा। तथा मदेन विह्वले अक्षिणी यस्याः सा। कनकमयनूपुरयोः सिञ्जितेन शब्देन कूजती कुम्भवत्स्तनौ यस्याः सा। अमृतकलशः पाणौ यस्याः सा ॥ १७ ॥

---

१ 'करभोरुलसद्दुकूल—' इति पाठान्तरम्। २ 'तावत्काल न सर्वदा' इति पाठान्तरम्।

तां संवीक्ष्य तस्याः उत्स्मितपूर्वकवीक्षणेन देवासुराः सम्मुमुहुरित्यन्वयः। मोहहेतुत्वेन तां वर्णयति— श्रीसखीं सौन्दर्येण लक्ष्मीतुल्याम् । वस्तुतस्तु लक्ष्म्याः सखाऽपि स्वभक्तकार्यार्थं तत्सखीमिव जातत्वादिति श्रीसखीमित्युक्तम्। अतएवाह— परदेवताख्यामिति। कनकमये कुण्डले यस्याः सा चासौ चारवः कर्णादयो यस्यास्तां च ताम्। विगलितो विस्रस्तः स्तनपट्टिकाया अन्तो यस्यास्ताम् ॥ १८ ॥ एवं तावन्मोहयित्वा यत्कृतवास्तदाह— असुराणामिति त्रिभिः। जातिनृशंसानां स्वभावतः क्रूराणामसुराणां सुधादानं दुर्नयमन्याय्यं मत्वा अच्युतो मोहिनीरूपः तां सुधां तेभ्यो न व्यभजदित्यन्वयः। असुरेभ्यः कथं न व्यभजदिति शङ्काऽच्युतपदेन निरस्ता, स्वरूपतो गुणतश्च च्युत्यभावात्। भगवतोऽयमभिप्रायः— दैत्यैर्मदीयं साधु असाधु वा सर्वमनुमतमेव अतो मद्भक्तान् देवानेव सुधां पाययिष्यामि, न चैवमपि वैषम्यं तैरेव यथान्यायं विभजस्वेत्युक्तत्वात्, न चैतेभ्यो जात्यैव क्रूरेभ्योऽमृतदानं न्याय्य अतस्तेभ्योऽमृतं न देयमिति। अन्याय्ये दृष्टान्तमाह— सर्पाणामिति । सर्पाणा क्षीरदानं यथाऽन्याय्यं दातुरप्यनर्थहेतुत्वात्

**तां श्रीसखीं कनककुण्डलचारुकर्णनासाकपोलवदनां परदेवताख्याम् ॥ संवीक्ष्य सम्मुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकान्ताम् ॥ १८ ॥ असुराणां सुधादानं सर्पाणामिव दुर्नयम् ॥ मत्वा जातिनृशंसानां न तां व्यभजदच्युतः ॥ १९ ॥ कल्पयित्वा पृथक्पङ्क्तीरुभयेषां जगत्पतिः ॥ तांश्चोपवेशयामास स्वेषु स्वेषु च पङ्क्तिषु ॥ २० ॥ दैत्यान् गृहीतकलशो वञ्चयन्नुपसञ्चरैः ॥ दूरस्थान् पाययामास जरामृत्युहरां सुधाम् ॥ २१ ॥ ते पालयन्तः समयमसुराः स्वकृतं नृप ॥ तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ २२ ॥**

तथैतेभ्योऽमृतदानमप्यन्याय्यमित्यर्थः ॥ १९ ॥ जगत्पतिर्भगवान् मोहिनीरूपः उभयेषां देवानां असुराणां च पङ्क्तीः पृथक् विविक्ताः कल्पयित्वा विधाय तांश्च देवासुरान् तासु पङ्क्तिषु स्वेषु तत्सजातीयेषु उपवेशयामासेत्यन्वयः ॥ २० ॥ ततश्च गृहीतः कलशो येन स भगवान् उपसञ्चरैः उप समीपे एव सञ्चरैः भ्रूभङ्गिनेत्रस्मितव्रीडामुखार्धाच्छादननूपुरादिभूषणवसनसञ्चलनपूर्वकैः चरणसञ्चलनैः किञ्चिन्मात्रदानेन दूरस्थाना देवानामुत्कण्ठा निवर्त्य सम्पूर्णं युष्मानेव पाययिष्यामीति प्रत्यायनैः समीपस्थानपि दैत्यान् वञ्चयन् दूरस्थानपि देवान् जरामृत्युहरां सुधा पाययामासेत्यन्वयः ॥ २१ ॥ ननु तथापि दैत्याः कथं तूष्णीमासन्नित्याशङ्क्याह— त इति। हे नृप परीक्षित ते असुराः साध्वसाधु वा यथेष्टं विभजस्वेति स्वकृतं समयं नियमं पालयन्तस्तूष्णीमासन्। हेत्वन्तरमाह— तस्यां कृतः स्नेहो यैस्ते तथा स्नेहभङ्गभिया च तूष्णीमासन्। हेत्वन्तरमाह— स्त्रीति । स्त्रिया सह विवादस्य जुगुप्सया लज्जयाऽपि तूष्णीमासन्नित्यन्वयः ॥ २२ ॥

उक्तमेव स्पष्टयति— तस्यामिति । तस्या मोहिन्या कृतः अतिप्रणयः स्नेहो यैस्ते अतएव प्रणयस्यापायेन भङ्गेन कातराः भीताः एते तावत्कृपणाः पूर्वं तावत् किञ्चित्पिबन्तु यूयं तु धीराः क्षणं प्रतीक्षध्वमित्यादिबहुमानेन च आबद्धाः तद्वशत्वं गताः किञ्चिदप्यप्रियं नोचुः । किन्तु तूष्णीमेवासन् ॥ २३ ॥ देवानां लिङ्गेन वेषेण प्रतिच्छन्नः आच्छादितासुरस्वरूपः स्वर्भानुर्देवसंसदि देवानां पङ्क्तौ चन्द्रार्कयोर्मध्ये प्रविष्टः सन् सोमममृतं अपिबत् । तदा च ताभ्यामयमसुर इति भगवते सूचितः, बलिष्ठत्वेन तद्भयात्स्पष्टं वक्तुमशक्यत्वात् भ्रूभङ्ग्या ज्ञापित इत्यर्थः ॥ २४ ॥ ज्ञात्वा च हरिः क्षुरवत्तीक्ष्ण-धारेण चक्रेण अमृतं पिबतस्तस्य राहोः शिरो जहार कायात् पृथक्कृतवान् । तस्य कबन्धः शिरोरहितदेहस्तु सुधया अप्लावितोऽसंस्पृष्टो यतः अपतत् मृत इत्यर्थः ॥ २५ ॥ तस्य शिरस्त्वमृतसम्बन्धेन अमरतां नीतं अतोऽजः भगवान् तद्ग्रहमचीक्लृपत् सूर्यादिवद्ग्रहत्वाधिकारे स्थापितवान् । एतेनामृतप्रभावः प्रदर्शितः । तस्य प्रसिद्धिमाह— यस्त्विति । चन्द्रार्काभ्या सूचितत्वात्तयोर्वैरधीः सन् यस्तु पर्वणि लब्धावसरे चन्द्रार्कावभिधावतीति

तस्यां कृतातिप्रणयाः प्रणयापायकातराः ॥ बहुमानेन चाबद्धा नोचुः किञ्चन विप्रियम् ॥ २३ ॥ देवलिङ्ग-प्रतिच्छन्नः स्वर्भानुर्देवसंसदि ॥ प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥ २४ ॥ चक्रेण क्षुरधारेण जहार पिबतः शिरः ॥ हरिस्तस्य कबन्धस्तु सुधयाऽप्लावितोऽपतत् ॥ २५ ॥ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ॥ यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥ २६ ॥ पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः ॥ पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः ॥ २७ ॥ एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि फलेविकल्पाः ॥ तत्रामृतं सुरगणाः फलमञ्जसाऽऽपुर्यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ २८ ॥

सम्बन्धः ॥ २६ ॥ देवैरमृते पीतप्राये सति लोकभावनः शरणागतभक्तजनरक्षको हरिः असुरेन्द्राणां पश्यतामेव सता स्वरूपं जगृहे इत्यन्वयः । तथाकरणे सामर्थ्यमाह— भगवानिति, यत ऐश्वर्यादिमानित्यर्थः ॥ २७ ॥ भगवद्भक्तानामेवोद्यमः सफलो भवति नान्येषामित्येवमाख्यानतात्पर्यमाह— एवमिति । एव पूर्वोक्तप्रकारेण समा देशादयो येषां ते तथाभूता अपि सुरासुरगणाः फले विविधः कल्पः फलं केषाञ्चिज्जातं केषाञ्चिन्नेति वैचित्र्यं येषां ते, फले वैषम्यवन्तो बभूवुरित्यर्थः । हेतुः मन्दरादिः । अर्थः समुद्रे क्षिप्तवीरुधादि । कर्म मन्थनप्रयत्नः । वैषम्यमेव दर्शयन् भगवद्भजनं विधत्ते— तत्रेति । तत्र देवासुरमध्ये यस्य पादपङ्कजरजसा श्रयणात् आश्रयणात् सुरगणाः अमृतरूपं फल अञ्जसा अनायासेनापुः, यद्वैमुख्यात् दैत्यास्तन्नापुः, स हरिरेव सर्वैः सेव्य इति शेषः, यत्तदोर्नित्यसम्बन्धात् ॥ २८ ॥

सर्वमूलत्वादपि भगवानेव भजनीय इत्याह— यदिति। असुः प्राणः वसु धनं कर्म कर्मेन्द्रियप्राणादिभिः करणैः नृभिः कर्तृभिर्यत् सम्माननं देहात्मजादिषु युज्यते क्रियते तदसत् व्यर्थं भवति। तत्र हेतुमाह— पृथक्त्वादिति। देहादीना परस्पर भिन्नत्वाच्छाखानिषेचनवदेकस्य सन्मानन न सर्वस्येति। यतो भगवतः सन्माननं सर्वस्य जगतः सन्मानन भवतीत्यर्थः। तत्रापि हेतुमाह—अपृथक्त्वादिति, भगवतः सर्वात्मकत्वेन केनापि भेदाभावादित्यर्थः। तत्र दृष्टान्तमाह— मूलेति। यत्तरोर्मूलनिषेचनं तद्यथा सर्वस्य स्कन्धशाखादेरपि भवति तथा भगवदाराधनं सर्वस्य देवमनुष्यादेरपि भवतीत्यर्थः॥ २९॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे स्कन्धे सर्वदाननिरूपणे॥ विवृतो नवमोऽध्यायोऽमृतदाननिरूपकः॥ ३ ॥ ॥ ७ ॥ ॥ दशमे हरिदत्तस्य देवपीतामृतस्य वै॥ दैत्यैर्युद्धप्रसङ्गेन जीर्णत्वं विनिरूप्यते॥ १ ॥ ॥ तदेवं भगवद्विमुखत्वाद्दैत्यानाममृतप्राप्तिर्न जातेत्याह— इतीति। इत्येवं युक्ताः

यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात्॥ तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात् सर्वस्य तद्भवति मूलनिषेचनं यत्॥ २९॥ इति श्रीमद्भागवते महापुराणे ऽष्टमस्कन्धे सम्पत्सु सर्वदानप्रकरणेऽमृतदान-निरूपणं नाम नवमोऽध्यायः॥ ९ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच॥ इति दानवदैतेया नाविन्दन्नमृतं नृप॥ युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः॥ १ ॥ साधयित्वाऽमृतं राजन् पाययित्वा स्वकान् सुरान्॥ पश्यतां सर्वभूतानां ययौ गरुडवाहनः॥ २ ॥ सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनन्दनाः॥ अमृष्यमाणा उत्पेतुर्देवान् प्रत्युद्यतायुधाः॥ ३ ॥ ततः सुरगणाः सर्वे सुधया पीतयैधिताः॥ प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः॥ ४ ॥

सावधानाः सन्तः कर्मणि समुद्रमथने यत्ताः प्रयत्नवन्तोऽपि दानवादयोऽमृत नाविन्दन् न प्रापुः। तत्र हेतुः— वासुदेवपराङ्मुखा इति। हे नृपेति सम्बोधनेन भगवन्मायासामर्थ्याश्चर्यं तु त्वया गर्भादेव बहुशोऽनुभूतं श्रुतं चेति सूचयति॥ १ ॥ हे राजन् इति सम्बोधनं यथा पाण्डवानां राज्यं साधयित्वा ययौ तथेति सूचनार्थम्। एवं समुद्रमन्थनेनामृतं साधयित्वा तथा स्वकान् स्वभक्तान् सुरान् अमृतं पाययित्वा तत्रत्याना सर्वभूताना पश्यतां सतां गरुड-वाहनः गरुडारूढः सन् हरिर्ययावित्यन्वयः॥ २ ॥ सपत्नाना स्वशत्रूणा परामुत्कृष्टां समृद्धिं दृष्ट्वा ते अप्राप्तामृतभागा दितिनन्दनाः दैत्याः अमृष्यमाणाः असहमानाः उद्यतायुधाः सन्तः युद्धार्थं देवान् प्रति उत्पेतुः आजग्मुरित्यन्वयः॥ ३ ॥ ततश्च सर्वे सुरगणाः शस्त्रैः प्रतिसंयुयुधुरित्यन्वयः। तेषामिदानीं युद्धे भयं नास्तीति तत्र हेतुमाह— पीतया सुधया एधिताः बलपुष्ट्यादिसम्पत्त्या वर्द्धिता इति। सुधापानेऽपि हेतुमाह— नारायणपदाश्रया इति॥ ४॥

हे राजन् तत्र उदन्वतः समुद्रस्य रोधसि तीरे देवासुरो नाम परमदारुणः अतिभयङ्करः रणः सङ्ग्रामः बभूवेति शेषेणान्वयः। सङ्ग्रामस्य दारुणत्वमुपपादयति— तुमुल इति, अतिसङ्कीर्णः। रोमहर्षण इति, रोमोद्भेदकर इत्यर्थः॥ ५॥ तत्र समुद्रतीरस्थरणे ते देवासुराः अन्योन्यं स्वस्वबलैश्वर्यादिसादृश्यं विलोक्य आसाद्य प्राप्य अस्यादिभिर्विविधैरायुधैरन्योन्यं निजघ्नुरित्यन्वयः। तत्र हेतुमाह— संरब्धमनस इति, क्रोधव्याप्तमनस इत्यर्थः। क्रोधेऽपि हेतुमाह— सपत्ना इति। पूर्वमपि विरोधित्वादिदानीं चामृतपाने वैषम्येण कृतसमयस्य भग्नत्वाच्च बद्धवैराः शत्रव इत्यर्थः ॥ ६ ॥ तत्र च शङ्खादीनां महान् निस्स्वनः शब्दोऽभवदित्यन्वयः ॥ ७ ॥ समासाद्येति यदुक्तं तत्सम्यक्त्वमेव स्पष्टयति— रथिन इति। तत्र संयुगे युद्धे रथिनो

तत्र देवासुरो नाम रणः परमदारुणः ॥ रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ॥ ५ ॥ तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे ॥ समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥ शङ्खतूर्यमृदङ्गानां भेरीडमरिणां[1] महान् ॥ हस्त्यश्वरथपत्तीनां नदतां निस्स्वनोऽभवत् ॥ ७ ॥ रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ॥ हया हयैरिभाश्चेभैः समसज्जन्त संयुगे ॥ ८ ॥ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः ॥ केचिद्गौरमृगैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९ ॥ गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः ॥ शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः[2] ॥ १० ॥ शिवाभिराखुभिः केचित् कृकलासैः शशैर्नरैः ॥ बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥ अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ॥ सेनयोरुभयो राजन् विविशुस्तेऽग्रतोऽग्रतः ॥ १२ ॥ चित्रध्वजपटै राजन्नातपत्रैः सितामलैः ॥ महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥

रथिभिः सह समसज्जन्त युयुधुरित्यन्वयः। पत्तिभिः पादचारिभिर्मनुष्यैः सह पत्तयस्तत्र समसज्जन्त। हयारूढाः हयैः हयारूढैः सह समसज्जन्त इभाः हस्त्यारूढाः इभैः हस्त्यारूढैः सह समसज्जन्त ॥ ८ ॥ तेषां वाहनप्रदर्शनपूर्वकं रणे प्रवेशं वर्णयति— उष्ट्रैरिति चतुर्भिः। केचित् केचित् भटाः उष्ट्रादिभिरभिययुः आजग्मुस्ते च हे राजन् अग्रतोऽग्रतः उभयोः सेनयोर्विविशुरिति चतुर्थेनान्वयः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ चित्रध्वजपटादिभिः देवदानववीराणां ध्वजिन्यौ सेने रेजतुरिति त्रयाणामन्वयः। हे राजन्[3] हे पाण्डुनन्दनेति सम्बोधनाभ्यां राजपुत्रत्वाद्राज्यवृत्तेः स्थितत्वाच्च त्वयाऽपि बहुशः सेनाचमत्कारो दृष्टः परन्तु नैतादृश इति सूचयति। सितैरमलैः स्वच्छैरातपत्रैः। वज्रदण्डैर्हीरकजडितदण्डैर्व्यजनैः। बार्हचामरैः मयूरपिच्छविरचितचामरैः ॥ १३ ॥

१ 'डमरुणा' इति सुबोधिनीपाठस्तत्र छन्दोनुरोधाद्ध्रस्वत्वम्। २ आरुणै. पशुविशेषै। ३ राजन्नित्यत्रत्य सम्बोधनम्। पाण्डुनन्दनेत्येतत्सम्बोधन तु पञ्चदशश्लोकान्तर्गतमिति चिन्त्यम्।

वातेनोद्धूतैरुत्तरैः उत्तरीयैः उष्णीषैश्च अर्चिभिरग्निज्वालादिभिः सूर्यरश्मिभिर्हेतुभूतैः सुतरां स्फुरद्भिरिति तृतीयान्तानां सर्वेषां विशेषणम्। विशदैः स्वच्छैः ॥ १४ ॥ वीराणां मालाभिः समुदायैश्च। तत्र दृष्टान्तमाह— यादसामिति। यादसां जलचराणां मालाभिर्यथा सागरौ रेजेतां तथेत्यर्थः ॥ १५ ॥ सङ्ख्ये युद्धे सः प्रसिद्धः असुराणां चमूपतिः सेनापतिर्बलिस्तत् सर्वश्रेष्ठत्वेन प्रसिद्धं विमानाग्र्यं विमानश्रेष्ठं यानं वाहनमास्थितो वालव्यजनैश्छत्राग्र्यैश्च उदयगिरिशिखरे स्थितश्चन्द्र इव रेजे इति त्रयाणामन्वयः। बलिनामकान्यशङ्कानिरासार्थं तं विशिनष्टि— वैरोचन इति, विरोचनपुत्रः। विमानस्य श्रेष्ठत्वं दर्शयति— यानमिति सार्धेन। वैहायसनामकमिति तथा नामत्वे हेतुमाह— कामगमिति, यथेष्टगतिमदित्यर्थः। एवम्भूतं कुत आगत-

वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥ १४ ॥ देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन ॥ रेजतुर्वीरमालाभिर्यादसामिव सागरौ ॥ १५ ॥ वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः ॥ यानं वैहायसं नाम कामगं मयनिर्मितम् ॥ १६ ॥ सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो ॥ अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥ आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ॥ वालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये ॥ १८ ॥ तस्यासन् सर्वतो यानैर्यूथानां पतयोऽसुराः ॥ नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥ द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः ॥ शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥ हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः ॥ तारकश्चक्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः ॥ २१ ॥ अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः ॥ अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥ अलब्धभागाः सोमस्य केवलं क्लेशभागिनः ॥ सर्व एते रणमुखे बहुशो निर्जितामराः ॥ २३ ॥

मित्यपेक्षायां तस्य कर्तृतोऽपि श्रेष्ठत्वं दर्शयति— मयेन महामायाविना निर्मितमिति ॥ १६ ॥ सर्वसाङ्ग्रामिकोपेतं अपेक्षितसर्वसङ्ग्रामसाधनपूर्णं सर्वाश्चर्यमयं सर्वथा अद्भुतत्वेनाश्चर्यजनकम्। तत्र हेतुद्वयमाह— अप्रतर्क्यं मनसः अविषयमतएव अनिर्देश्यं निर्देष्टुं वचसा निरूपयितुमशक्यम्। तत्रापि हेतुमाह— कदाचित् दृश्यमानं भवति कदाचित् क्वचिददर्शनं च भवतीति ॥ १७ ॥ चमूपतित्वमेव विशदयति— सर्वानीकाधिपैर्वृत इति ॥ १८ ॥ सर्वपतित्वादेव तस्य बलेः सर्वतो सुरयूथानां पतयः असुरा यानैरासन्। तान् यूथपतीन् दर्शयति— नमुचिरिति सार्धैस्त्रिभिः ॥ १९ ॥ २० ॥ ॥ २१ ॥ २२ ॥ युद्धप्रवृत्तौ हेतुमाह— अलब्धभागाः सोमस्यामृतस्य अतएव केवलं क्लेशभागिन इति। तर्हि कथं पीतामृतैर्बलिभिर्देवैः सह

युद्धे प्रवृत्तास्तत्राह— सर्वे एत इति । देवान् बहुशो निर्जितत्वादिदानीमपि तान् वयं विजेष्यामहे एवेत्यभिमानेन पीतामृतैर्भगवद्भक्तैरपि सह युद्धे तेषां प्रवृत्तिरिति भावः ॥ २३ ॥ युद्धप्रारम्भमाह— सिंहनादमिति । एवं बलिं निरूप्येन्द्रं निरूपयति— दृष्ट्वेति । सपत्नान् शत्रून् असुरान् उत्सिक्तान् गर्वितान् दृष्ट्वा बलभित् इन्द्रो भृशं कुपितः सन् ॥ २४ ॥ दिक्करिणं महत्त्वेन महाबलत्वेन च दिग्गजसदृशं हस्तिनमैरावतनामकमारूढः शुशुभे इति द्वयोरन्वयः । तस्य महत्त्वमाह— स्वराडिति । देवराजत्वेन स्वयमेव राजते इति तथा । तच्छोभाया दृष्टान्तमाह— यथेति । स्रवन्ति प्रस्रवणानि निर्झरजलानि यस्मिंस्तं उदयाद्रिं आरूढोऽहर्पतिः सूर्यो यथा शोभते तथेत्यर्थः । ऐरावतेऽपि मदधाराः प्रस्रवन्तीति तत्साहश्यार्थं स्रवत्प्रस्रवणमित्यद्रि-

सिंहनादं विमुञ्चन्तः शङ्खान् दध्मुर्महारवान् ॥ दृष्ट्वा सपत्नानुत्सिक्तान् बलभित कुपितो भृशम् ॥ २४ ॥ ऐरावतं दिक्करिणमारूढः शुशुभे स्वराट् ॥ यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥ तस्याऽऽसन् सर्वतो देवा नाना-वाहध्वजायुधाः ॥ लोकपालाः सहगणैर्वाय्वग्निवरुणादयः ॥ २६ ॥ तेऽन्योन्यमभिसंसृत्य क्षिपन्तो मर्मभिर्मिथः ॥ आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः ॥ २७ ॥ युयोध बलिरिन्द्रेण तारकेण गुहोऽस्यत ॥ वरुणो हेतिना-ऽयुद्ध्यन्मित्रो राजन् प्रहेतिना ॥ २८ ॥ यमस्तु कालनाभेन विश्वकर्मा मयेन वै ॥ शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥ २९ ॥ अपराजितेन नमुचिरश्विनौ वृषपर्वणा ॥ सूर्यो बलिसुतैर्देवो बाणज्येष्ठैः शतेन च ॥ ३० ॥ राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ॥ निशुम्भशुम्भयोर्देवी भद्रकाली तरस्विनी ॥ ३१ ॥

विशेषणम् ॥ २५ ॥ तस्येन्द्रस्य सर्वतः स्वस्वगणैः सह वर्तमाना नानावाहध्वजायुधानि येषां ते तथाभूता देवाः वाय्वग्निवरुणादयो लोकपालाश्च आसन्नित्यन्वयः ॥ २६ ॥ ते देवा असुराश्चान्योन्य अभिसंसृत्य सम्मुखमागत्य नामभिराह्वयन्तो दुर्वचनैः क्षिपन्तस्तिरस्कुर्वन्तः अग्रेऽग्रे विशन्तो द्वन्द्वयोधिनश्च सन्तो मिथो युयुधुरित्यन्वयः ॥ २७ ॥ द्वन्द्वान्येव दर्शयति— युयोधेति सप्तभिः । गुहः स्वामिकार्तिकेयः अस्यत आस्यन्, अयुध्य-तेत्यर्थः ॥ २८ ॥ २९ ॥ सूर्यो देव एक एव शतेन बाणज्येष्ठैर्बलिसुतैर्युयुधे ॥ ३० ॥ षष्ठी तृतीयार्थे । निशुम्भशुम्भाभ्यां तरस्विनी महावेगवती भद्रकाली देवी युयुधे ॥ ३१ ॥

---

१ 'आरूढ शुशुभे' इत्यत्र 'आरूढो जयति' 'आरूढो वियति स्थित' इत्यपि च पाठान्तरे क्वचिद्दृश्येते । २ 'नामभि' इति पाठान्तरम् ।

विभावसुरग्निः । ब्रह्मपुत्रैर्मरीच्यादिभिः ॥ ३२ ॥ युयुध इत्यस्य यथापेक्षितं सर्वत्रान्वयः ॥ ३३ ॥ ३४ ॥ ते जिगीषवः परस्परं जेतुमिच्छवः असुराः सुरेन्द्राश्च आजौ युद्धे एवं द्वन्द्वेन संहत्य मिलित्वा युद्ध्यमानाः ओजसा वेगेनान्योन्यं आसाद्य सम्प्राप्य तीक्ष्णशरासितोमरैर्निजघ्नुरित्यन्वयः ॥ ३५ ॥ अन्योन्यं भुशुण्ड्यादिभिश्च शिरांसि चिच्छिदुरित्यन्वयः ॥ ३६ ॥ न केवलं योद्धार एव खण्डिता जाताः किन्तु गजादयोऽपीत्याह— गजास्तुरङ्गा इति तत्तदारूढा अपीत्यपि ज्ञेयम् । सरथाः रथेन सहिताः रथिनः आरोहन्तीत्यारोहाः वाह्या योद्धारस्तैः सहिता अन्ये च वाहा वाहना विविधप्रकारकाः पूर्वोक्ता उष्ट्रादयो विखण्डिताः । विखण्डितत्वमेव विशदयति— निकृन्तेत्यर्धेन । निकृन्ताः सञ्छिन्ना बाह्वादयो येषा ते । छिन्नानि ध्वजादीनि येषां ते ।

वृषाकपिस्तु जम्भेन महिषेण विभावसुः ॥ इल्वलः सहवातापिर्ब्रह्मपुत्रैररिन्दम ॥ ३२ ॥ कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह ॥ बृहस्पतिश्चोशनसा नरकेण शनैश्चरः ॥ ३३ ॥ मरुतो निवातकवचैः कालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥ त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युद्ध्यमानाः ॥ अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥ भुशुण्डिभिश्चक्रगदर्ष्टिपट्टिशैः शक्त्युल्मुकैः प्रासपरश्वधैरपि ॥ निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिन्दिपालैश्च शिरांसि चिच्छिदुः ॥ ३६ ॥ गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः ॥ निकृन्त[2]बाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥ ३७ ॥ तेषां पदाघातरथाङ्गचूर्णितादायोधनादुल्बण उत्थितस्तदा ॥ रेणुर्दिशः खं द्युमणिं च छादयन्न्यवर्ततासृक्स्रुतिभिः परिप्लुतात्[3] ॥ ३८ ॥ शिरोभिरुद्धूतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः ॥ महाभुजैः साभरणैः सहायुधैः सा प्रास्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥

इष्वासो धनुः । तनुत्रः कवचम् ॥ ३७ ॥ तेषां देवादीनां पादाघातैः रथाङ्गैः रथचक्रैश्च चूर्णितात् आयोधनात् रणभूमेः सकाशात् उत्थितो रेणुर्दिशः खमाकाशं द्युमणिं सूर्यं च छादयंस्तदैव खादेः सकाशान्न्यवर्तत । ततो निवृत्तौ हेतुं सूचयन्नायोधनं विशिनष्टि—असृगिति । असृक्स्रुतिभिः रक्तक्षरणैः परिप्लुतात् संसिक्तादित्यर्थः । यद्वा परिप्लुतादिति भावे क्तः, परिप्लवनाद्धेतोस्ततो न्यवर्तत । रक्तधाराणां तत्पर्यन्तमुच्छलनादित्यर्थः । प्रथमान्तपाठे रेणोर्विशेषणम् ॥ ३८ ॥ उद्धूतानि उत्पतितानि किरीटानि कुण्डलानि च येभ्यस्तैः संरम्भः क्रोधस्तद्युक्ता दृशो येषु तैः क्रोधेनैव परिदष्टा दच्छदाः ओष्ठाः



१ ब्रह्मपुत्रैर्वसिष्ठादिभिरिति सुबोधिन्याम् । २ 'निकृत्तबाहूरु-' इत्यपि श्रीधरस्वाम्यादिसम्मत पाठ । ३ ' परिप्लुत ' इति पाठान्तरम् ।

येषु तैः शिरोभिः तथा साभरणैः आभरणानि भूषणानि तत्सहितैः सहायुधैः आयुधसहितैश्च महाभुजैः तथा करभो हस्तिशुण्डस्तत्सदृशैरूरुभिश्च सा रणभूः प्रकर्षेणास्तृता आच्छादिता सती बभावित्यन्वयः ॥ ३९ ॥ उद्यतान्यायुधानि यैस्तथाभूतैर्दोर्दण्डैर्युक्ताः कबन्धाः शिरोभी रहिता देहाश्च तत्र मृधे युद्धभूमौ आ सर्वतो धावन्तो भटान् प्रति उत्पेतुः योद्धुमतिवेगेन समागता इत्यन्वयः। ननु शिरोहीनाना तेषामक्ष्यभावेन दर्शनासम्भवात्कथं ते भटानुत्पेतुरित्यपेक्षायामाह—पश्यन्त इति। तत्र पतितानि यानि स्वशिरासि तत्रत्यैरक्षिभिरेव ते पश्यन्त इत्यर्थः ॥ ४० ॥ एवं सामान्यतो युद्धं निरूप्य विशेषतश्च तन्निरूपयति—बलिरित्यादिना। बलिर्दशभिः शरैरिन्द्रमार्च्छयत् विव्याध, त्रिभिः शरैरैरावतं तद्धस्तिनं विव्याध, चतुर्भिः शरैश्चतुरो वाहान् ऐरावतपादरक्षकान् विव्याध, एकेन शरेण आरोहं हस्तिपं विव्याधेत्यन्वयः ॥ ४१ ॥ स देवराजतया प्रसिद्धः शक्रस्तान् बलिप्रयुक्तान्

**कबन्धास्तत्र चोत्पेतुः पश्यन्तः स्वशिरोऽक्षिभिः ॥ उद्यतायुधदोर्दण्डैराधावन्तो भटान् मृधे ॥ ४० ॥ बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः ॥ चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत् ॥ ४१ ॥ स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ॥ चिच्छेद निशितैर्भल्लैरसम्प्राप्तान् हसन्निव ॥ ४२ ॥ तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ॥ तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥ ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ॥ यद्यच्छस्त्रं समादद्यात् सर्वं तदच्छिनद्विभुः ॥ ४४ ॥ ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः ॥ ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥ ४५ ॥**

बाणान् आपततः आगच्छतः असम्प्राप्तानेव तावद्भिरष्टादशभिः शितैस्तीक्ष्णैः भल्लैर्बाणविशेषैश्चिच्छेदेत्यन्वयः । तस्य तच्छेदने प्रयासो नाभूदिति सूचयन्नाह—हसन्निवेति। कथमेवमेकदैव तावद्बाणच्छेदन सम्भवतीत्यपेक्षायामाह—शीघ्रविक्रम इति ॥ ४२ ॥ तस्येन्द्रस्य तद्बाणच्छेदनलक्षणमुत्तमं कर्म वीक्ष्य दुर्मर्षः शत्रुत्वादसहमानो बलिस्तं हंतुं शक्तिमाददे गृहीतवान् तां च तद्धस्तस्थामेव हरिः इन्द्र अच्छिनदित्यन्वयः। शक्तेः प्रभावातिशयमाह—महोल्कावदाभा सादृश्य यस्यास्तामतएव ज्वलन्तीमिति ॥ ४३ ॥ ततश्च शूलादिकं यद्यच्छस्त्रं तं हंतु बलिः समादद्यात् गृहीतवास्तत्सर्वं विभुः समर्थ इन्द्रः अच्छिनदित्यन्वयः ॥ ४४ ॥ एवं तत्तच्छस्त्रे सञ्छिन्ने सति अथानन्तरं सोऽसुरो बलिरासुरीं माया ससर्जेत्यन्वयः। तेन सृष्टां मायामेव दर्शयति—पूर्वं तु सोऽन्तर्धानं गतः ततस्तदनन्तरं हे प्रभो परीक्षित् सुरानीकस्योपरि शैलः प्रादुरभूदित्यन्वयः ॥ ४५ ॥

---

१ 'पतितस्वशिरोक्षिभिः' इति पाठान्तर प्रतिभाति श्रीधरस्वामिसम्मतमपि ।

ततः शैलात् दावाग्निना दह्यमानाः प्रज्वलन्तस्तरवः सुरानीकोपरि निपेतुः द्विषद्बलं द्विषता देवानां सेनां चूर्णयन्त्यः टङ्कवत्तीक्ष्णाग्रैः शिखरैः सहिताः शिलाश्च सुरानीकोपरि निपेतुरित्यन्वयः ॥ ४६ ॥ ततश्च महोरगादयश्च तदुपरि समुत्पेतुः । दन्दशूकाः सर्पविशेषाः तथा सिंहादयश्च महागजान् मर्दयन्तः समुत्पेतुः आजग्मुरित्यन्वयः ॥ ४७ ॥ तथा हे प्रभो शूलहस्ता विवाससो नग्नाः छिन्धिभिन्धीति वादिन्यः शतशो यातुधान्यो राक्षस्यो रक्षोगणाश्च समुत्पेतुरित्यन्वयः ॥ ४८ ॥ ततश्च गम्भीरः परुषः श्रवणपीडाकरश्च स्वनो येषां ते महान्तो घनाः मेघा व्योम्नि स्थिता वातैराहता अङ्गारान् मुमुचुः, स्तनयित्नवश्च अङ्गारान्मुमुचुरित्यन्वयः ॥ ४९ ॥ दैत्येन बलिना सृष्टः श्वसनः पवनः सारथिः सहायो यस्य सः अतएव सांवर्तकः प्रलयकालीनो वह्निः तदिवात्युग्रो भयङ्करः सुमहान् अतिवृद्धो वह्निर्विबुधाना देवाना ध्वजिनीं सेना -अधागित्यार्षः- अधाक्षीदित्यन्वयः ॥ ५० ॥

ततो निपेतुस्तरवो दह्यमाना दवाग्निना ॥ शिलाः सटङ्कशिखराश्चूर्णयन्त्यो द्विषद्बलम् ॥ ४६ ॥ महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजान् ॥ ४७ ॥ यातुधान्यश्च शतशः शूलहस्ता विवाससः ॥ छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणाः प्रभो ॥ ४८ ॥ ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः ॥ अङ्गारान् मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥ सृष्टो दैत्येन सुमहान् वह्निः श्वसनसारथिः ॥ सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥ ५० ॥ ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत ॥ प्रचण्डवातैरुद्धूततरङ्गावर्तभीषणः ॥ ५१ ॥ एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः ॥ सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥ न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप ॥ ध्यातः प्रादुरभूत्तत्र भगवान् विश्वभावनः ॥ ५३ ॥

ततश्च समुद्रः सर्वतः प्रत्यदृश्यत । तस्य भयङ्करत्वं दर्शयति— । उद्वेलः वेला मर्यादा तदुल्लङ्घ्य वर्तमानः प्रचण्डवातैरुद्धूतैस्तरङ्गैः आवर्तैश्च भीषण इति ॥ ५१ ॥ न केवलमेकेन बलिनैव माया सृष्टा किन्त्वेवमन्यैरपि दैत्यैः सृज्यमानासु मायासु सुरसैनिका विषेदुः विषादं प्रापुरित्यन्वयः । तेषामपि भयङ्करत्वमाह— अलक्ष्येति । अलक्ष्याभिर्गतिभिर्भीषणैरित्यर्थः । अलक्ष्यगतित्वे हेतुमाह— महामायैरिति ॥ ५२ ॥ ततश्च किं जातमित्याकाङ्क्षायामाह—नेति । हे नृपेति सम्बोधनमशक्ये हरिरेव देवादीना स्वभक्तानां सहाय इति सूचनार्थम् । यत्र यदा इन्द्रादयो देवास्तस्य दैत्यनिर्मितस्य प्रतिविधि निवृत्त्युपाय न विदुस्तत्र तदा तैर्ध्यातः सन् विश्वभावनः शरणागतसकलजनपालको भगवांस्तत्र प्रादुरभूदित्यन्वयः ॥ ५३ ॥

१ ‘ प्रचण्डवातैरुद्धूत—’ इति पाठान्तरम् ।

ततः प्रादुर्भावानन्तरं सोऽदृश्यतेत्यन्वयः । दर्शनविषयं भगवन्तं वर्णयति— सुपर्णस्यांसे स्कन्धे कृतौ स्थापितौ अङ्घ्रिपल्लवौ येन सः । पिशङ्गं पीतं वासो वस्त्रं यस्य सः । नवकञ्जवल्लोचने यस्य सः । अष्टौ आयुधयुक्ता बाहवो यस्य सः । श्रीश्च कौस्तुभश्च अनर्घ्यकिरीटं कुण्डले च उल्लसन्ति श्रीकौस्तुभादीनि यस्मिन् सः ॥ ५४ ॥ तस्मिन् भगवति देवसेना प्रविष्टे सति तस्य महीयसो महत्तरस्य महिना महिम्नैव असुराणां यत्कूटकर्ममन्त्रादिप्रयोगस्तस्माज्जाता या मायास्ता विनेशुरित्यन्वयः । तत्र दृष्टान्तमाह— स्वप्न इति । यथा प्रतिबोधे आगते सति स्वप्नो विनश्यति तथेत्यर्थः । हीति प्रसिद्धमेतत् । तत्र कैमुत्यन्यायं दर्शयति— हरेः स्मृतिरेव तावत् सर्वासा विपदा विमोक्षणरूपा, किमुत तत्प्रवेश इत्यर्थः ॥ ५५ ॥ अथ मायाविनाशानन्तरं इभारिः सिंहः स वाहो यस्य स तथाभूतः कालनेमिः मृधे युद्धे गरुडवाहं भगवन्तं दृष्ट्वा तं हन्तुं शूलमाविध्य भ्रामयित्वा अहिनोत् चिक्षेप । त्र्यधीशः त्रयाणा लोकानां गुणानां सत्त्वरजस्तमसा वाऽधीशो नियन्ता भगवान् गरुडस्य मूर्ध्नि पतत् तच्छूल लीलया अनायासेनैव गृहीत्वा

**ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुण्डलः ॥ ५४ ॥ तस्मिन् प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना महीयसः ॥ स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणम् ॥ ५५ ॥ दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः ॥ तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ॥ आहत्य तिग्मगदयाऽहनदण्डजेन्द्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाद्यः ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे सम्पत्सु सर्वदानप्रकरणे जीर्णतानिरूपणं नाम दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥**

तेनैव शूलेन सवाहमरिं कालनेमिं अहनदित्यन्वयः । हे नृपेति सम्बोधनं भगवत्कर्तृकयुद्धचमत्कारस्य सावधानतया श्रोतव्यत्वद्योतनार्थम् ॥ ५६ ॥ तदनन्तरमतिबलौ माली सुमाली च भगवन्तं हन्तुं युधि आगच्छतां तदा भगवता चक्रेण च्छिन्नशिरसौ कृतौ यत् यस्य भगवतश्चक्रेण तौ कृत्तशिरसौ सन्तौ युधि पेततुस्तं तथाभूतमपि भगवन्तमथानन्तरमेव माल्यवानाहत्य सम्पद्य तिग्मया तीक्ष्णया गदया अण्डजेन्द्रं गरुडमहनत् हन्तुं गदामुद्धृतवानित्यर्थः । तावत् गदाप्रक्षेपात्पूर्वमेवाद्यो हरिररिणा चक्रेण तस्यारेः शिरोऽच्छिनदित्यन्वयः ॥ ५७ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्कन्धे दाननिरूपणे ॥ दशमो विवृतोऽध्यायो जीर्णताविनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

देवाना हरिभक्ताना शत्रुविजयपूर्वकम् ॥ एकादशे स्वलोकस्य प्राप्तिः फलं निरूप्यते ॥ १ ॥ ॥ अथो माल्यवन्मरणानन्तरमेव परस्य पुंसः पुरुषोत्तमस्य भगवतः परया अनुकम्पया कृपया प्रत्युपलब्धचेतसः शक्रादयः सुराः पुरा यैर्दैत्यैः सह अभिसंहताः योद्धुं प्रवृत्ताः । यद्वा यैर्हननविषयीकृताः तांस्तान् रणे भृशं जघ्नुरित्यर्थः ॥ १ ॥ भगवान् भगवत्कृपया ऐश्वर्यादिमान् पाकशासनः इन्द्रः सरब्धः क्रुद्धः सन् वैरोचनाय विरोचनपुत्राय बलये तं हन्तु यदा वज्रमुदयच्छत् उन्निन्ये तदा तस्य प्रजाः दैत्याः हाहेति चुक्रुशुरित्यन्वयः ॥ २ ॥ मनस्विनं धैर्यवन्तं सुसम्पन्नं युद्धसाधनशस्त्रादिसयुक्तं महामृधे विशेषेण निर्भयतया चरन्तं अतः स्वपुरः स्थितं तं बलिं वज्रपाणिरिन्द्रो वचसा तिरस्कृत्येद वक्ष्यमाणमाहेत्यन्वयः ॥ ३ ॥ तिरस्कारवचास्येव दर्शयति— नटवदिति त्रिभिः । हे मूढ नटः कपटवृत्तिर्मायाभिर्मन्त्रादिप्रयोगैर्निबद्धानि भ्रान्तानि अक्षीणि येषा तान् बालानज्ञान् जित्वा स्ववशीकृत्य यथा तेषा धन हरति तद्वत्त्व मायाभिर्मायेशान् नोऽस्मान् जेतुमिच्छसि, तदस्मासु तव मायाप्राबल्य न चलिष्यतीति शेषेणान्वयः ॥ ४ ॥

श्रीशुक उवाच ॥ अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयाऽनुकम्पया ॥ जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान् रणे यैरभिसंहताः पुरा ॥ १ ॥ वैरोचनाय संरब्धो भगवान् पाकशासनः ॥ उदयच्छद्यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितम् ॥ मनस्विनं सुसम्पन्नं विचरन्तं महामृधे ॥ ३ ॥ नटवन्मूढ मायाभिर्मायेशान्नो जिगीषसि ॥ जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनम् ॥ ४ ॥ आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम् ॥ तान्दस्यून् विधुनोम्यज्ञान् पूर्वस्माच्च पदादधः[1] ॥ ५ ॥ सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ॥ शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह ॥ ६ ॥ बलिरुवाच ॥ सङ्ग्रामे वर्त्तमानानां कालचोदितकर्मणाम् ॥ कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥

मत्प्रभावमज्ञात्वैव दुर्लभे स्वर्गारोहणे तव मनोरथस्तत्र तावन्मत्प्रभावं शृण्वित्याह— आरुरुक्षन्तीति । ये स्वमायाभिर्दिवं स्वर्गमारुरुक्षन्ति आरोढुमिच्छन्ति ये च तमुत्सिसृप्सन्ति उल्लङ्घ्य तदुपरि मोक्षमिच्छन्ति तान् अज्ञान् दस्यून् अहं पूर्वस्मादपि पदात् स्थानादधो विधुनोमि पातयामीत्यन्वयः ॥ ५ ॥ स एवम्प्रभावोऽहं शतपर्वणा वज्रेण दुर्मायिनः लोकमोहनमायावतस्ते तव शिरः अद्यैव हरिष्ये । हे मन्दात्मन् मन्दबुद्धे त्वं ज्ञातिभिः सह घटस्व पराक्रमं कुर्वित्यन्वयः ॥ ६ ॥ त्वमेवाज्ञो यतः कीर्तिजयादिरहस्यं न जानासि अतएवैवं कथयसि अतस्तद्रहस्यं शृण्वित्याह— सङ्ग्राम इति । सङ्ग्रामे वर्तमानानां सर्वेषामेव कीर्त्यादयः स्युर्भवन्ति परन्तु अनुक्रमात् कालभेदेन, नत्वेकदा सर्वदैवैक एवैकस्य कस्यचित् । तत्र हेतुमाह— कालेति । कीर्त्याद्यनुकूल तत्तत्कर्म यदा यदा कालेन चोदितमुद्बुद्धं भवति तदा तदनुसारेण क्रमेण कीर्त्यादयो भवन्तीत्यर्थः ॥ ७ ॥

[1] पूर्वस्माद्रसातलरूपात् पदादध ।

ननु कीर्त्यादिकं सर्वं कर्म प्रेरककालाधीनमित्यत्र किं प्रमाणमित्यपेक्षायां महतामनुभव इत्याह— तदिति । तदिदं कीर्त्यादिकं सर्वं कालरशनं कालपाशाधीनमिति सूरयो विवेकिनो जनाः पश्यन्ति । इत्यत्र किं मानमित्यपेक्षाया हर्षशोकादिराहित्येनानुमानमेवेत्याशयेनाह— न हृष्यन्ति न शोचन्तीति । तत्रैवं विवेके यूयमपण्डिताः अनिपुणाः ॥ ८ ॥ कुतस्तत्रापाण्डित्यमित्यपेक्षाया तत्रात्मनः साधनाभिमानाद्भवन्त उपेक्ष्यवचनाश्चेत्याह— न वयमिति । तत्र कीर्तिजयादौ आत्मानं देहादिसङ्घातं साधनं मन्यमानानां अतएव अज्ञतया साधुभिः शोच्यानां वो युष्माकं मर्मसु हृदयादिषु ताडनं याभिस्तास्तथाभूता अपि गिरो वयं न गृह्णीमो यथार्थतया नाङ्गीकुर्म इत्यन्वयः ॥ ९ ॥ वीरान् मर्दयतीति तथाभूतो वीरो बलिर्विभुं महान्तमपीन्द्रमित्येव वचोभिराक्षिप्य तिरस्कृत्य आक्षेपैः परुषवाक्यैराहतं तिरस्कृतमपि तमाकर्णपूर्णैः कर्णपर्यन्तमाकृष्टैर्नाराचैर्बाणैः पुनरहनदित्यन्वयः ॥ १० ॥ तथ्यवादिना

**तदिदं कालरशनं जनाः पश्यन्ति सूरयः ॥ न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ॥ ८ ॥ न वयं मन्यमानाना-
मात्मानं तत्र साधनम् ॥ गिरो वः साधु शोच्यानां गृह्णीमो मर्मताडनाः ॥ ९ ॥ श्रीशुक उवाच ॥ इत्याक्षिप्य
विभुं वीरो नाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥ १० ॥ एवं निराकृतो देवो वैरिणा तथ्यवादिना ॥
नामृष्यत्तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥ प्राहरत् कुलिशं तस्मा अमोघं परमर्दनः ॥ सयानो न्यपतद्भूमौ
छिन्नपक्ष इवाचलः ॥ १२ ॥ सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् ॥ अभ्ययात् सौहृदं सख्युर्हतस्यापि
समाचरन् ॥ १३ ॥**

यथार्थवक्त्राऽपि बलिना एवं निराकृतो देव इन्द्रस्तस्याधिक्षेपं निराकरणवाक्यं नामृष्यत् नासहतेत्यन्वयः । ननु यदि स यथार्थवादी तदा तद्वाक्यं कुतो नासहेतेत्याशङ्क्याह— वैरिणेति । तथ्यमपि वैरिवाक्यं सो ज्ञः कथं सहेतेति भावः । तत्र दृष्टान्तमाह— तोत्रेति । तोत्रमङ्कुशस्तेन आहतस्ताडितो द्विपो हस्ती यथा तत्ताडनं न सहते तथेत्यर्थः ॥ ११ ॥ ततः किं चकारेत्यपेक्षायामाह— प्राहरदिति । परः शत्रुस्त मर्दयतीति तथाभूत इन्द्रस्तस्मै बलये बलिं हन्तुममोघं कार्यमकृत्वा प्रत्यावर्तिनं कुलिशं वज्रं प्राहरत् चिक्षेप । तेन हतो बलिः छिन्नपक्षः अचल इव सयानो वाहनसहितो भूमौ न्यपतदित्यन्वयः ॥ १२ ॥ सखायं बलिं पतितं दृष्ट्वा बलिसखो जम्भो हतस्यापि तस्य सख्युः सौहृदं हितं समाचरन् अभ्ययात् योद्धुमिन्द्रसम्मुखमागच्छत यतः सुहृत तस्मिन् स्नेहवानित्यन्वयः ॥ १३ ॥

आगत्य च किं कृतवांस्तत्राह— स इति । स जम्भः सिंहवाहः सिंहारूढ आसाद्य इन्द्रसमीपमागत्य गदामुद्यम्य रंहसा अतिवेगेन जत्रौ स्कन्धोपर्यस्थिप्रदेशे शक्रं गजमैरावतं च अताडयदित्यन्वयः । ननु महाबलं बलिं तेन कुलिशहतं दृष्ट्वापि कथं तस्य तत्ताडने प्रवृत्तिर्भयात्पलायनस्यापि सम्भवात्तेन ताडनेपि तस्य महाबलपराक्रमस्य का क्षतिरित्याशङ्क्याह— सुमहाबल इति ॥ १४ ॥ तस्य महाबलप्रयुक्तपराक्रमं सूचयन्नाह— गदेति । तस्य गदाप्रहारेण व्यथितः पीडितः अतएव भृशमत्यन्तं विह्वलितो व्याकुलो गजो जानुभ्यां धरणीं स्पृष्ट्वा परमं कश्मलं ययौ परां मूर्च्छां प्रापेत्यन्वयः ॥ १५ ॥ ततः ऐरावतस्य मूर्च्छाप्राप्त्यनन्तरमेव दशशतैः सहस्रैर्हरिभिः अश्वैर्वृतः युक्तः रथो मातलिनाम्ना सूतेनानीतस्ततश्च विभुरिन्द्रो द्विपं हस्तिनमुत्सृज्य त्यक्त्वा रथमारुरुहे इत्यन्वयः ॥ १६ ॥ मृधे युद्धभूमित्वेन भयङ्करस्थानेऽपि तस्य यन्तुः सूतस्य तत् झटिति रथानयनरूपं कर्म पूजयन् सत्कुर्वन्

स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ॥ जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥ गदाप्रहारव्यथितो भृशं विह्वलितो गजः ॥ जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥ ततो रथो मातलिना हरिभिर्दशशतैर्वृतः[2] ॥ आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥ तस्य तत्पूजयन् कर्म यन्तुर्दानवसत्तमः ॥ शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे ॥ १७ ॥ सेहे रुजं सुदुर्मर्षां सत्त्वमालम्ब्य मातलिः ॥ इन्द्रो जम्भस्य सङ्क्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥ जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ॥ नमुचिश्च बलः पाकस्तत्रापेतुस्त्वरान्विताः ॥ १९ ॥ वचोभिः परुषैरिन्द्रं मर्दयन्तोऽस्य मर्मसु ॥ शरैरवाकिरन् मेघा धाराभिरिव पर्वतम् ॥ २० ॥

स्मयमानः कथमेवं झटिति रथमानीतवानित्याश्चर्यं च कुर्वन् दानवेषु सत्तमः श्रेष्ठो जम्भो ज्वलता अग्निवत्स्फुरता स्वशूलेन तं सूतं त्वहनदित्यन्वयः । ॥ १७ ॥ मातलिस्तु सत्त्वं धैर्यमालम्ब्य शूलप्रहारजनितां सुदुर्मर्षां दुस्सहामपि रुज पीडां सेहे इन्द्रश्च सङ्क्रुद्धः सन् वज्रेण जम्भस्य शिरोऽपाहरदित्यन्वयः ॥ १८ ॥ नारदात् जम्भं हतं श्रुत्वा तस्य जम्भस्य ज्ञातयस्त्वरान्वितास्तद्युद्धभूमावापेतुराजग्मुरित्यन्वयः । कथं नारदवचनात्तेषा विश्वासो जात इत्यपेक्षायामाह— ऋषेरिति । नारदस्य देवर्षित्वाद्भगवद्भक्तत्वाच्च तस्य वचने देवाना दैत्याना मनुष्याणा च सर्वेषामेव विश्वासः अयमपि भगवत्कृपाया एव चमत्कार इति भावः । के ते ज्ञातय इत्यपेक्षायां तान् दर्शयति— नमुचिर्बलः पाकश्चेति ॥ १९ ॥ परुषै रूक्षैर्वचोभिरस्येन्द्रस्य मर्मसु मनआदिचतुर्विधान्तःकरणेषु मर्दयन्तः पीडयन्तः शरैरिन्द्रमवाकिरन् आच्छादितवन्त इत्यन्वयः । तत्र दृष्टान्तमाह— मेघा इति । मेघा यथा जलधाराभिः पर्वतमाच्छादयन्ति तथेत्यर्थः ॥ २० ॥

१ सूतस्य मातले । २ 'हयैर्दशशतैर्वृत' इत्यपि पाठोऽन्यत्र छन्दोभङ्गभिया स्वीकृत इति भाति ।

त्रयाणां पृथक् पृथक् विक्रमानाह— हरीनिति त्रिभिः । हर्यश्वस्य इन्द्रस्य दशशतानि एकसहस्रं हरीन् अश्वान् आजौ युद्धे बलः तावद्भिः दशभिः शतैः शरैः युगपत् एकदैव अर्दयामास पीडयामासेत्यन्वयः । नन्वेकेन तेन कथं युगपत्सहस्रैः शरैस्तदर्दनं सम्भवतीत्याशङ्क्याह— लघुहस्तवानिति, शीघ्रविक्रम इत्यर्थः ॥ २१ ॥ सकृत् एकदैव सन्धानं धनुषि संयोजनं ततो मोक्षणं च तन्मात्रेण शराणां शताभ्यां पाको मातलिं सावयवं रथं च पृथक्पृथगर्दयामासेत्यनुषङ्गेणान्वयः । तत् एव मर्दनं रणे अद्भुतमाश्चर्यमभूत् ॥ २२ ॥ स्वर्णमयाः पुङ्खाः पूर्वभागा येषां तैः पञ्चदशभिर्महेषुभिर्महाबाणैः सङ्ख्ये सङ्ग्रामे इन्द्रमाहत्य विध्वा नमुचिर्विशेषेण अनदत् नादमकरोदित्यन्वयः । तत्र दृष्टान्तमाह— सतोय इति । तोयेन सहितस्तोयदो मेघो यथा विनदति तथेत्यर्थः ॥ २३ ॥ अन्येऽपि बलादिसहकारिणो सुराः सरथसारथिं शक्रं शरकूटेन सर्वतश्छादयामासुरित्यन्वयः । तत्र दृष्टान्तमाह— प्रावृडिति । प्रावृट्काले वर्तमानं सूर्यं यथा अम्बुदाश्छादयन्ति तथेत्यर्थः ॥ २४ ॥ तमिन्द्रमलक्षयन्तः अपश्यन्तः सहानुगाः गन्धर्वाद्यनुगैः सहिताः

हरीन् दशशतान्याजौ हर्यश्वस्य बलः शरैः ॥ तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥ शताभ्यां मातलिं पाको रथं सावयवं पृथक् ॥ सकृत्सन्धानमोक्षेण तदद्भुतमभूद्रणे ॥ २२ ॥ नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः ॥ आहत्य व्यनदत् सङ्ख्ये सतोय इव तोयदः ॥ २३ ॥ सर्वतः शरकूटेन शक्रं सरथसारथिम् ॥ छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥ अलक्षयन्तस्तमतीव विह्वला विचुक्रुशुर्देवगणाः सहानुगाः ॥ अनायकाः शत्रुबलेन निर्जिता वणिक्पथा भिन्ननवो यथाऽर्णवे ॥ २५ ॥ ततस्तुराषाडिषुबद्धपञ्जराद्विनिर्गतः साश्वरथध्वजाग्रणीः ॥ बभौ दिशः खं पृथिवीं विरोचयन् स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥ निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे ॥ उदयच्छद्रिपुं हन्तुं वज्रं वज्रधरो रुषा ॥ २७ ॥

देवगणा अतीव विह्वला व्याकुलाः सन्तो विचुक्रुशुरित्यन्वयः । व्याकुलतायां हेतुद्वयमाह—अनायकाः स्वरक्षकस्वामिहीनाः शत्रूणां बलेन सेनया च निर्जिताः पराजिताः । विक्रोशे दृष्टान्तमाह— वणिगिति । वणिक्पथाः वणिजः भिन्ना नौर्येषां ते तथाभूताः सन्तो यथाऽर्णवे अतिव्याकुला विक्रोशन्ति तथेत्यर्थः ॥ २५ ॥ ततो विक्रोशानन्तरमेव इषुबद्धपञ्जरात् बाणसमूहात् अश्वादिसहितस्तुराषाट् इन्द्रो विनिर्गतः सन् स्वतेजसा स्वप्रकाशेन दिशः खं पृथिवीं विरोचयन् प्रकाशयन् बभावित्यन्वयः । तत्र दृष्टान्तमाह— सूर्य इवेति, क्षपात्यये रात्रिविनाशे सति यथा सूर्यः स्वतेजसा दिशः प्रकाशयन्भाति तथेत्यर्थः । अग्रणीः सारथिः ॥ २६ ॥ देव इन्द्रः पृतना स्वसेनां परैः शत्रुभिरभ्यर्दिता सर्वतः पीडितां निरीक्ष्य वज्रधरः सन् रुषा क्रोधेन रणे रिपुं स्वशत्रुं हन्तुं वज्रमुदयच्छत् उद्यन्ये इत्यन्वयः ॥ २७ ॥

स इन्द्रस्तज्ज्ञातीनां भयं जनयन् तेनैवाष्टधारेण वज्रेण बलपाकयोः शिरसी जहारेत्यन्वयः। ज्ञातीनां पश्यतामित्यनेन तेषामपि पराक्रमो न चलित इति सूचितम्। हे राजन्निति सम्बोधनेन भगवदनुगृहीतानामेव पराक्रमः सम्भवति तत्तु भगवद्भक्तत्वात्त्वमपि जानासीति सूचयति ॥ २८ ॥ तदिति तयोर्बलपाकयोर्वधं दृष्ट्वा ज्ञातिवधाच्छोको वधकर्त्रीन्द्रविषयकामर्षः तदुत्कर्षासहनेन सन्तापस्ताभ्यां युक्तया रुषा क्रोधेनान्वितो युक्तो नमुचिरिन्द्रं जिघांसुर्हन्तुमिच्छन् परम महान्तमुद्यमं चकारेत्यन्वयः। हे नृपते इति सम्बोधनेन भगवद्विमुखा अज्ञा बहूनुद्यमान् कुर्वन्ति परन्तु तेनैव सफला भवन्तीति त्वयाऽपि नृपतित्वाद्बहुशोऽनुभूतमिति सूचयति ॥ २९ ॥ तस्योद्यममेव दर्शयति— अश्मसारेति सार्धेन। नमुचिः क्रुद्धः सन् शूल प्रगृह्य हतोऽसीति इन्द्रं तर्जयन् अभ्यद्रवत् हन्तुं सम्मुखमाजगाम। ततश्च देवराजाय देवराजमिन्द्रं हन्तुं तत्प्राहिणोत् चिक्षेपेति सार्धेनान्वयः। शूलस्य काठिन्यमाह—अश्मसारमयमिति। तस्य शोभातिशयमाह— हेमभूषणमिति। मृगराट् सिंहस्तदिव निनदन् ॥ ३० ॥ भगवद्विमुखत्वात् तदुद्यमस्य

स तेनैवाष्टधारेण शिरसी बलपाकयोः ॥ ज्ञातीनां पश्यतां राजन् जहार जनयन् भयम् ॥ २८ ॥ नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः ॥ जिघांसुरिन्द्रं नृपते चकार परमोद्यमम् ॥ २९ ॥ अश्मसारमयं[1] शूलं घण्टावद्धे[2]मभूषणम्[3] ॥ प्रगृह्याभ्यद्रवत् क्रुद्धो हतोऽसीति वितर्जयन् ॥ प्राहिणोद्देवराजाय निनदन् मृगराडिव ॥ ३० ॥ तदापतद्गगनतले महाजवं विचिच्छिदे हरिरिषुभिः सहस्रधा ॥ तमाहनन्नृप कुलिशेन कन्धरे रुषाऽन्वितस्त्रिदशपतिः शिरो हरन् ॥ ३१ ॥ न तस्य हि त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः ॥ तदद्भुतं परमतिवीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा ॥ ३२ ॥ तस्मादिन्द्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः ॥ किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३३ ॥

विफलत्वं जातमित्यभिप्रेत्य तद्दर्शयति— तदिति। महान् जवो वेगो यस्य तथाभूतमपि तच्छूलं आपतद्गगनतले आकाशे एव हरिरिन्द्रः इषुभिः सहस्रधा विशेषेण पृथक्पृथग्यथा स्यात्तथा चिच्छिदे इत्यन्वयः। हे नृपेति सम्बोधनेन भगवत्सहायेनैव नमुचिर्हतो न केवलमिन्द्रपराक्रमेणेति निश्चेतव्यमिति सूचयति। ततश्च त्रिदशपतिरिन्द्रो रुषा क्रोधेनान्वितो युक्तः संस्तस्य शिरो हरन् हर्तुं कन्धरे ग्रीवायां कुलिशेन वज्रेण तं नमुचिमाहनदित्यन्वयः ॥ ३१ ॥ हि यस्मात् यः सुरपतिना ओजसा बलेन ईरितः प्रक्षिप्तः स वज्र ऊर्जितः अतिप्रभाववानपि तस्य नमुचेस्त्वचमपि न बिभेद तत्तस्मात् जनानां परं अद्भुतं अत्याश्चर्यं अभूदित्यन्वयः। वज्रस्य प्रभावातिशयसूचकं जनानामाश्चर्यवाक्यं दर्शयति— अतिवीर्येति। यः पूर्वमतिवीर्यमपि वृत्रमभिनत्स इदानीं नमुचिशिरोधरत्वचा तिरस्कृत इत्यन्वयः ॥ ३२ ॥ यतो यस्माच्छत्रोः सकाशात् वज्रः प्रतिहतस्तस्माच्छत्रोः सकाशात्

[1] लोहमयम्। [2] घण्टावदिति पृथक्पद शूलविशेषणम्। घण्टायुक्तमित्यर्थ। [3] हेमभूषण स्वर्णालङ्कृतम्।

इन्द्रोऽबिभेत् भयं प्रापेत्यन्वयः। एतत् दृष्ट्वेन्द्रस्याप्याश्चर्यं जातं तत्तद्वचनेनैव दर्शयति— किमिति दैवयोगेन प्रारब्धवशेन लोकविमोहनमिदं किं भूतं जातमित्यन्वयः ॥ ३३ ॥ इदम्पदार्थमेव विवृणोति— येनेति सार्धद्वयेन। पतत्त्रैः पक्षैर्निविशतां यत्र तत्र यथेष्टं गच्छता भारैस्तत्र तत्र भुवि पततामद्रीणा पक्षच्छेदो येन वज्रेण मे मया पूर्वं कृतः सोऽयमिति तृतीयेनान्वयः। ननु ते तथा पतन्तु त्वया किमिति तेषा पक्षच्छेदः कृत इत्याशङ्क्य तत्र निमित्तमाह— प्रजेति। प्रजानामत्यये विनाशे निमित्ते सतीत्यर्थः ॥ ३४ ॥ सारमयं वीर्याधिक त्वाष्ट्र तप एव वृत्रः स येन वज्रेण मया विपाटितः विनाशितः। तथा सर्वैरस्त्रैर्न क्षता त्वगपि येषां तथाभूता अन्ये चापि बलोपेता वीरा येन वज्रेण मया विपाटिताः ॥ ३५॥ सोऽयं वज्रोऽल्पके पूर्वविपाटितापेक्षया तुच्छे नमुचौ मया मुक्तः प्रक्षिप्तः सन् प्रतिहतस्तस्य त्वचमपि न बिभेद ततो ब्रह्मतेजो दधीचेस्तपोरूपोऽप्यकारणमकिंञ्चित्करं दण्ड लकुटतुल्यमेनमहं नाददे नाङ्गीकरिष्यामि ॥ ३६ ॥ भगवद्भक्तानामुद्यमस्तु कदाचित् प्रतिहतोऽपि तदनुग्रहेण सफलो भवतीति सूचयन्निन्द्रस्य विजयप्रकार-

येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ॥ कृतो निविशतां भारैः पतत्त्रैः पततां भुवि ॥ ३४ ॥ तपः सारमयं त्वाष्ट्रं वृत्रो येन विपाटितः ॥ अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३५ ॥ सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ॥ नाहं तदाददे दण्डं ब्रह्मतेजोऽप्यकारणम् ॥ ३६ ॥ इति शक्रं विषीदन्तमाह वागशरीरिणी ॥ नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३७ ॥ मयाऽस्मै यद्वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ॥ अतोऽन्यश्चिन्तनीयस्त उपायो मघवन् रिपोः ॥ ३८ ॥ तां दैवीं गिरमाकर्ण्य मघवान् सुसमाहितः ॥ ध्यायन् फेनमथापश्यदुपायमुभयात्मकम् ॥ ३९ ॥ न शुष्केण न चार्द्रेण जहार नमुचेः शिरः ॥ तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन् विभुम् ॥ ४० ॥

माह— इतीति षड्भिः। इत्येवं विषीदन्तं विषादं प्राप्नुवन्तं शक्रं अशरीरिणी अदृष्टवक्तृका वागाह वाणी बभूव। तामेव दर्शयति— नायमिति सार्धेन। अयं दानवो नमुचिः शुष्कैः पदार्थैर्वधं नार्हति, अथो तथा आर्द्रैरपि वधं नार्हति ॥ ३७ ॥ कुत एवमित्यपेक्षायामाह— मयेति। यत् यस्मात् आर्द्रशुष्कयोः आर्द्रशुष्काभ्यां तव मृत्युर्नैव भविष्यतीत्यस्मै मया वरो दत्तः अतो हे मघवन् रिपोर्वधोपायस्ते त्वयाऽन्यश्चिन्तनीय इत्यन्वयः ॥ ३८ ॥ ता दैवीं पारमेश्वरीं गिरमाकर्ण्य श्रुत्वा सुसमाहितः अतिसावधानचित्तः सन् मघवा इन्द्रो ध्यायंस्तद्वधोपायं चिन्तयन् अथ भगवदनुग्रहेणानन्तरमेव आर्द्रशुष्कोभयात्मकं फेनरूपमुपायमपश्यत ज्ञातवानित्यन्वयः ॥ ३९ ॥ उभयात्मकत्वमेव विवृण्वन्निन्द्रजयमाह— । न शुष्केण न चार्द्रेण किन्तु उभयात्मकेन फेनेन नमुचेः शिरो जहार। तद्वधान्मुन्यादीनां महानुत्सवो जातस्तदाह— तमिति सार्धेन। तं विभुमिद्रं मुनिगणास्तुष्टुवुर्माल्यैः पुष्पैश्चावाकिरन् आच्छादयामासुरित्यन्वयः ॥ ४० ॥

मुदा हर्षेणेत्यस्य सर्वत्र मुन्यादिषु यथोचितमन्वयः । विश्वावसुः परावसुश्च द्वौ गन्धर्वमुख्यौ जगतुर्गानं कृतवन्तौ । देवाना दुन्दुभयो नेदुः । नर्तक्योऽप्सरसो ननृतुः ॥ ४१ ॥ अन्येऽपि वाय्वादयः स्वप्रतिद्वन्द्वान् अस्त्रौघैः शस्त्रादिसमूहैरेवमेव सूदयामासुर्विनाशितवन्तः । तत्र दृष्टान्तमाह— मृगानिति । केसरिणः सिंहाः मृगान् हरिणादीन् यथा विनाशयन्ति तथेत्यर्थः ॥ ४२ ॥ एवं देवानां विजये जातेऽपि वैरवशात्तैर्दानवाना सङ्क्षयं दृष्ट्वा ब्रह्मणा प्रेषितो देवर्षिर्नारदो देवान् विबुधान् देवानुगान् अन्याश्च दानवविनाशान्निवारयामासेत्यन्वयः । हे नृपेति सम्बोधनेनेयमप्यलौकिकी भगवल्लीला यत्पूर्वमुपेक्ष्य स्वभक्तदेवविजयानन्तर तेनान्तर्यामिणा वारणार्थं ब्रह्मा प्रेरितो न पूर्वमिति सूचयति ॥ ४३ ॥ भगवदनुग्रहेणैव देवाना विजयो जातो न तेषां पराक्रमेण केवलमिति नारदवचनेनैव दर्शयंस्तद्वचनमाह— भवद्भिरिति । नारायणभुजा आश्रयो येषा तथाभूतैर्भवद्भिः

गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू ॥ देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४१ ॥ अन्येऽप्येवं प्रतिद्वन्द्वान् वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान् केसरिणो यथा ॥ ४२ ॥ ब्रह्मणा प्रेषितो देवान् देवर्षिर्नारदो नृप ॥ वारयामास विबुधान् दृष्ट्वा दानवसङ्क्षयम् ॥ ४३ ॥ नारद उवाच ॥ भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः ॥ श्रिया समेधिताः सर्व उपारमत विग्रहात् ॥ ४४ ॥ श्रीशुक उवाच ॥ संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ॥ उपगीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४५ ॥ येऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते ॥ बलिं विपन्नमादाय अस्ताद्रिमुपागमन् ॥ ४६ ॥ तत्राविनष्टावयवान् विद्यमानशिरोधरान् ॥ उशना जीवयामास सञ्जीविन्या स्वविद्यया ॥ ४७ ॥

तदनुग्रहेणामृतं प्राप्तं तदनुग्रहादेव तद्वशवर्तिन्या श्रिया लक्ष्म्या च सर्वे यूयं सम्यगेधिताः कृपादृष्ट्या वर्धिताः, अतः कार्यस्य जातत्वात् अधुना युद्धफलत्वाभावात् । निष्फलाद्विग्रहात् युद्धादुपारमतेत्यन्वयः ॥ ४४ ॥ ततश्च मुनेर्नारदस्य वचो मानयन्तो मन्युसंरम्भं क्रोधावेशं सयम्य त्यक्त्वा उपगीयमानैरनुचरैर्गन्धर्वादिभिः सह सर्वे देवाः त्रिविष्टपं स्वर्गं ययुरित्यन्वयः ॥ ४५ ॥ तस्मिन् रणे ये दानवा अवशिष्टा उर्वरिताः तैर्नारदस्यानुमतेन सम्मत्या विपन्नं विपदं प्राप्तं क्षतपीडितत्वेन व्याकुलं बलिमादाय अस्ताचलमुपागमन्नित्यन्वयः । सन्ध्यभाव आर्षः ॥ ४६ ॥ तत्रास्ताचले न विनष्टा अवयवाः करचरणादयो येषां तान् विद्यमानाः शिरोधरा येषां तान् सञ्जीविन्या स्वविद्यया उशनाः शुक्रः जीवयामासेत्यन्वयः ॥ ४७ ॥

* १ अनुचरैरनुगीयमाना ( देवा ) इत्यर्थ, उपगीयमानैरनुचरै सहेति वा इति श्रीधरस्वामिन । ' उपगीयमाना अनुचरै ' इति छेदयुक्पाठे सन्धिरार्ष । ' गीयमाना अनुचरै ' इति पाठस्तु श्रीधरस्वाम्यादीनामसम्मत ।

चकारस्तुशब्दार्थः । बलिस्तूशनसा स्पृष्टस्तत्स्पर्शमात्रेणैव प्रत्यापन्नानि पुनः प्राप्तानीन्द्रियाणि स्मृतिश्च येन तथाभूतः सन् पराजितोऽपि नाखिद्यत् । तत्र हेतुमाह— लोकतत्त्वविचक्षण इति । सङ्ग्रामे वर्तमानानामित्याद्युक्तप्रकारेण जयपराजयादिसर्वं भगवच्छक्तिकालाद्यधीनामिति ज्ञानवानित्यर्थः ॥ ४८ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र सर्वदाननिरूपणे ॥ एकादशो गतो वृत्तिं फलप्राप्तिनिरूपकः ॥ ३ ॥ ॥ छ ॥ भगवन्मोहिनीरूपदर्शनेन विमोहितः ॥ देवश्रेष्ठो महादेवो द्वादशे तन्निरूप्यते ॥ १ ॥ ॥ यत्र देवप्रवरो विनिर्जितकाम ईश्वर-कोट्यापन्नः श्रीमहादेवोऽपि भगवतो मोहिनीरूपदर्शनेन विमोहितः तत्रातिकामुका असुरास्तद्दर्शनेन विमोहिता इति न चित्रमिति सूचयन् महादेवमोहनप्रसङ्गमाह— वृषध्वजेत्यादिना । हरिर्योषिद्रूपेण दानवान् मोहयित्वा स्वभक्तान् सुरगणान् सोमममृतं अपाययदितीदं वृषध्वजो महादेवो

**बलिश्चोशनसा पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः ॥ पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे ऽष्टमस्कन्धे सर्वदानप्रकरणे देवानां स्वर्गरूपफलप्राप्तिनिरूपणं नाम एकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥**

**श्रीबादरायणिरुवाच ॥ वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् ॥ मोहयित्वा सुरगणान् हरिः सोममपाययत् ॥ १ ॥ वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ॥ सह देव्या ययौ द्रष्टुं यत्राऽऽस्ते मधुसूदनः ॥ २ ॥ सभाजितो भगवता सादरं सोमया[1] भवः ॥ सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन् हरिम् ॥ ३ ॥ श्रीमहादेव उवाच ॥ देवदेव जगद्व्यापिन् जगदीश जगन्मय ॥ सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः ॥ ४ ॥**

निशम्य श्रुत्वा वृषमारुह्य सर्वभूतगणैर्वृतः सह देव्या पार्वत्या सहितो यत्र मधुसूदनः मधुदैत्यविमर्दको भगवान् विष्णुरास्ते तत्र तन्मोहिनीरूपं द्रष्टुं ययाविति द्वयोरन्वयः । वृषवाहना अन्येऽपि सन्ति तच्छङ्कावारणाय तं विशिनष्टि— गिरिश इति । देव्या सह गमन तस्या अपि मोहिनीस्वरूप-चमत्कारप्रदर्शनार्थम् ॥ १ ॥ २ ॥ भगवता विष्णुना सादरं प्रीतिपूर्वकं यथा भवति तथा सोमया उमया सहितो भवः सभाजितः पूजाप्रशंसादिभिः सत्कृतः अतः सूपविष्टः सुखेन उपविष्टः हरिं प्रतिपूज्य स्तुतिनमस्कारादिभिः सत्कृत्य स्मयन् मोहिनीरूपस्मरणेनाश्चर्यं कुर्वन्निद वक्ष्यमाण उवाचेत्यन्वयः ॥ ३ ॥ तत्र स्वापेक्षितमोहिनीदर्शन प्रार्थयितुं प्रथममचिन्त्यानन्तैश्वर्यवत्त्वेन सर्वकारणत्वेन सदुपास्यत्वेन दुर्विज्ञेयत्वेन च भगवन्त स्तौति— देवदेवेत्यष्टभिः । कुतोऽहं देवाना देव इत्यपेक्षायामाह— हे जगद्व्यापिन्निति । जगद्व्यापकत्वेऽपि हेतुं सूचयन् सम्बोधयति— हे जगन्मयेति ।

१ सोमयेति सन्धिरार्ष, पादपूरणार्थ । स उमया ( सह ) भव इति श्रीधरस्वामिना व्याचचक्षे ।

जगत उपादानत्वादुपादानोपादेययोरभेदाच्चेति भावः। न केवलमुपादानं किन्तु निमित्तकारणमपि त्वमेवेत्याशयेन पुनः सम्बोधयति– हे जगदीशेति। जगत उदयोत्पादकः पालकः उपसंहारकश्चेति भावः । एव सम्बोधनैः सूचितमेवार्थं स्पष्टयति– सर्वेषामिति । अपिशब्दोऽवधारणार्थकः। सर्वेषां भावानां स्थावरजङ्गमात्मकसर्वपदार्थाना आत्मा स्वरूपमुपादानं त्वमेवेत्यर्थः । तथा सर्वेषा पदार्थाना हेतुरुत्पादको निमित्तकारण त्वमेवेत्यन्वयः। तथा सर्वेषा भावानां ईश्वरः पालको नियामक उपसंहर्ता च त्वमेवेत्यन्वयः ॥ ४ ॥ नन्वेवं सर्वजगदुपादानत्वे विकारित्वं स्यादित्याशङ्क्याचिन्त्यानन्तैश्वर्यवत्तया सर्वोपादानत्वेऽपि न विकारित्वमित्याह– आद्यन्ताविति। अस्य जगतो यौ आद्यन्तौ जन्ममृत्यू यच्च मध्यं जीवनं यच्च इदं प्रत्यक्षं वस्तु यच्चान्यत् परोक्षं वस्तु यच्चाहमहङ्कारास्पदं भोक्तृ यच्च बहिर्ममकारास्पदं भोग्यं वस्तु तत्सर्वं यतो भवति यस्य चैतानि आद्यन्तादीनि न भवन्ति तत्सत्य सर्वोपादानत्वेन परमार्थभूतं सर्वनिर्माणकर्तृत्वेन सर्वपालकत्वेन सर्वान्तर्यामित्वेन सर्वोपसंहारकर्तृत्वेन च चित् चैतन्यरूपं ब्रह्म भवानेवेत्यन्वयः। ननु सर्वोपादानत्वेन तस्य कथं न विकारित्वमित्याशङ्क्याह– अव्ययस्येति । स्वरूपतो गुणतश्च व्ययशून्यस्येत्यर्थः ॥ ५ ॥

**आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः ॥ यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्म चिद्भवान् ॥ ५ ॥ तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः ॥ विसृज्योभयतः सङ्गं मुनयः समुपासते ॥ ६ ॥ त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यदन्यत् ॥ विश्वस्य हेतुरुदयस्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ७ ॥**

अतएव मुमुक्षुभिस्त्वमेवोपास्यो नान्य इत्याह– तवैवेति । श्रेयस्कामा मुमुक्षवस्तवैव चरणाम्भोजं सम्यक् आदरेणोपासते इत्यन्वयः। ननु धर्मादित्रिवर्गकामनासत्त्वे कथं मुमुक्षत्वमिति शङ्कानिरासायाह–निराशिष इति । धर्मादित्रिवर्गकामनारहिता इत्यर्थः । ननु तत्तद्भोगासक्तौ कथं तत्कामनाराहित्यं सम्भवतीत्याशङ्क्याह–विसृज्येति। उभयतः इहामुत्र च सङ्गं भोगासक्तिं विसृज्य त्यक्त्वेत्यर्थः । ननु तदासक्तित्यागोऽपि कथमित्याकाङ्क्षायामाह– मुनय इति । अनेकजन्मानुष्ठितभगवदर्पितकर्मभिस्तत्कृपया विशुद्धान्तःकरणतया विचारेणोत्पन्नसदसद्विवेका इत्यर्थः॥ ६ ॥ प्रेमातिशयवशात्पूर्वोक्तमेव पुनः स्पष्टयति– त्वमिति । वेदप्रतिपादितं ब्रह्म त्वमेवेत्यर्थः । ब्रह्मपदार्थं विवृणोति– पूर्णमिति सर्वत्र व्यापकमित्यर्थः। तत्र हेतुमाह–विश्वस्यात्मेति, तत्तत्सर्वपदार्थस्वरूपमित्यर्थः । तत्रापि हेतुमाह– सर्वोपादानतया केनापि भेदाभावादित्यर्थः । न केवलमुपादानमेव किन्तु निमित्तकारणमपि त्वमेवेत्याह– विश्वस्योदयस्थितिसंयमाना हेतुरिति न केवलं कारणमात्रं किन्तु जीवानामन्तर्यामितया

तान् तत्तत्कर्मसु प्रवर्त्य तदपेक्षिततत्तत्फलदाता चेत्याह— ईश्वरश्च तदपेक्षतयेति। तैः प्राणिभिस्तत्तत्फलदानार्थमपेक्ष्यत इति तदपेक्षस्तस्य भावस्तदपेक्षता तया ईश्वरस्तत्तत्फलदाता चेत्यर्थः। किं तर्हि राजादिवत्कयाऽप्यपेक्षया सेवकेभ्यः फलं ददातीत्याशङ्क्याह— अनपेक्ष इति, स्वयं तु परमानन्दपूर्णत्वात् सर्वपूजादिनिरपेक्ष एवेत्यर्थः। भवत्वेवं तथापि जगत उपादानत्वादुदयादिकर्तृत्वाच्च मृदादिवद्विकारित्वं तु स्यादेवेत्याशङ्क्याह— अविकारमिति। तत्र हेतुमाह— अमृतमिति, मरणरहितमित्यर्थः। जन्मादिराहित्यस्योपलक्षणमेतत्। अतएव विशोकमिति। जन्मादिविकारवत एव शोको भवतीति प्रसिद्धम्। जन्मादिराहित्ये हेतुमाह— विगुणमिति, गुणातीतमित्यर्थः। तत्रापि हेतुमाह— अन्यदिति, गुणकार्याद्भिन्नमित्यर्थः। तर्हि कीदृशं तदित्यपेक्षायामाह— आनन्दमात्रमिति, आनन्दमात्रकरचरणमुखोदरादिमदित्यर्थः। अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थमिति फलितम्॥ ७॥ नन्वेकस्यैव ब्रह्मणोऽन्यत्वमनन्यत्वं च कथं सङ्गच्छते इत्याशङ्क्य दृष्टान्तेनोपपादयति— एक इति। सत् स्थूलमसत्सूक्ष्मं द्वय कार्यमद्वयं कारणं च त्वमेवैकः। अत इह त्वयि प्रपञ्चे वचनवस्तुतो भेदः। तत्र दृष्टान्तमाह— स्वर्णमिति। यथा कृतं कुण्डलादि-

**एकस्त्वमेव सदसद्वयमद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदः॥ अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणव्यतिकरो निरुपाधिकस्य॥ ८॥ त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक एके परं सदसतोः पुरुषं परेशम्॥ अन्येऽवयन्ति नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्मतन्त्रम्॥ ९॥ नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसर्गाः॥ यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः॥ १०॥**

रूपं द्वयं कार्यमकृतं च केवलमद्वयं कारणरूपं स्वर्णमेकमेव, न तत्र वस्तुतो भेदस्तथेत्यर्थः। कथं तर्हि भेदप्रतीतिस्तत्राह— अज्ञानत इति। यस्मादज्ञानतस्त्वयि जनैर्विकल्पस्तत्तद्भेदो विहितः कल्पित एव, तस्मान्निरुपाधिकस्य सर्वोपाधिविनिर्मुक्तस्य शुद्धस्य तव गुणैः कृतैव व्यतिकरो भेदः, न वस्तुत इत्यन्वयः॥ ८॥ अतएव कवयस्त्वां बहुधा वर्णयन्तीत्याह— त्वमिति। उतेत्यवधारणे। केचिद्वेदान्तिनस्त्वामेव ब्रह्म अवयन्ति मन्यन्ते। एके मीमांसकास्त्वामेव धर्मं मन्यन्ते। केचित् साङ्ख्यास्त्वामेव सदसतोः परं पुरुषं पुरुषोत्तमं अतएव परेषां ब्रह्मादीनामपीशं मन्यन्ते। अन्ये पाञ्चरात्रा भक्तास्त्वमेव विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशाना अनुग्रहा चेत्येव नवशक्तियुतं परं परमेश्वरं मन्यन्ते। केचित् पातञ्जलास्त्वामेव अव्ययं जन्मविनाशादिविकाररहितं अतएवात्मतन्त्रं अतएव महापुरुषं मन्यन्ते॥ ९॥ त्वत्कटाक्षविरचितप्रपञ्चतत्त्वज्ञानमपि तावद्दुर्घटं तत्वज्ञानं दुर्घटमिति किं वक्तव्यमित्याशयेनाह— नेति। अहं रुद्रः। परायुः ब्रह्मा। खलुशब्दोऽप्यर्थे। सत्त्वसर्गा सत्त्वेन गुणेन सृष्टा अपि ब्रह्मादयो

---

१ 'कर्म चैके' इति पाठान्तरम्।

येन विरचितं विश्वमपि तत्त्वतो न जानन्ति तर्हि शश्वदभद्रं तामसं राजसं च वृत्तमुत्पत्तिर्वृद्धिश्च येषां ते दैत्यादयो न जानन्तीति किमुत वक्तव्यं ? यदा त्वद्विरचितविश्वमपि न जानन्ति तदा त्वां न जानन्तीत्यपि किं वक्तव्यम् ? । अज्ञाने हेतुमाह— यदिति । यस्य तव मायया मुषितं मोहितं चेतो येषां ते । कथमेवं मायायाः प्राबल्यं येन ब्रह्मादयोऽपि मोहिता इत्याकाङ्क्षाया परमेशस्य तव शक्तिरूपत्वादिति सूचयन् सम्बोधयति— हे ईशेति ॥ १० ॥ तर्हि को वा मायाविमोहरहितः सर्वज्ञ इत्यपेक्षायामाह— समीहित स्वकृतममुष्य जगतः स्थितिजन्मनाशं तथा भूतानामीहित कर्म च तथा तेषा भवेन बन्ध ततो मोक्षं चेति । व्याप्तौ दृष्टान्तमाह— वायुरिति । चराचराख्यं देहजातं खं च यथा वायुराविशति तथेत्यर्थः । सर्वव्याप्तौ हेतुमाह— तदात्मकतयेति । तस्य सर्वस्य चराचरात्मकस्य जगत आत्मकतया उपादानतयेत्यर्थः । ननु तर्हि जडप्रपञ्चोपादानतया तस्यापि जडत्वापत्तिरिति शङ्कां निवारयन् सर्वज्ञाने हेतुमाह—अवगम इति, ज्ञानरूप इत्यर्थः ॥ ११ ॥ एवं स्तुत्वा मोहिनीस्वरूपदर्शनं प्रार्थयते— अवतारा इति द्वयेन । गुणैः सत्त्वादिभिः

स त्वं समीहितमदःस्थितिजन्मनाशं भूतेहितं च जगतो भवबन्धमोक्षौ ॥ वायुर्यथा विशति खं च चराचराख्यं सर्वं तदात्मकतयाऽवगमोऽवरुंत्से ॥ ११ ॥ अवतारा मया दृष्टा रममाणस्य ते गुणैः ॥ सोऽहं तद्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम् ॥ १२ ॥ येन सम्मोहिता दैत्याः पायिताश्चामृतं सुराः ॥ तद्दिदृक्षव आयाताः परं कौतूहलं हि नः ॥ १३ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितो विष्णुर्भगवाञ्छूलपाणिना ॥ प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥ १४ ॥ श्रीभगवानुवाच ॥ कौतूहलाय दैत्यानां[1] योषिद्वेषो मया कृतः ॥ पश्यता सुरकार्याणि गते पीयूषभाजने ॥ १५ ॥

रममाणस्य तवावतारा नरसिंहादयो मया दृष्टाः स तव कृपापात्रत्वेन प्रसिद्धोऽहमिदानीं ते त्वया यद्योषिद्वपुर्धृतं तद्द्रष्टुमिच्छामीत्यन्वयः ॥ १२ ॥ न केवलं ममैव दिदृक्षा किन्तु मम परिकरभूतानां सर्वेषामपीत्याशयेनाह— येनेति । येन योषिद्रूपेण दैत्याः सम्मोहिताः सुराश्चामृतं पायिताः तद्रूपं दिदृक्षवः सन्तो वयमत्रागताः, हि यस्मान्नोऽस्माकं परं कौतूहलमाश्चर्यं जातमित्यन्वयः ॥ १३ ॥ शूलपाणिना रुद्रेण एवमभ्यर्थितः सम्प्रार्थितो विष्णुः भावगम्भीरं तद्रूपदर्शनेन शिवोऽपि विमोहितो भविष्यतीति भावो गम्भीरो यस्मिंस्तद्यथा भवत्येवं प्रहस्य गिरिशं प्रत्यभाषतेत्यन्वयः । ननु प्रथमतः कथं ज्ञातवानेतद्रूपदर्शनेनास्य मोहो भविष्यतीत्याशङ्कानिरासायाह— भगवानिति, सर्वज्ञत्वादिति भावः ॥ १४ ॥ पीयूषस्यामृतस्य भाजने पात्रे दैत्यहस्ते गते सति वञ्चनमोहनादिसारेण योषिद्रूपेणैव सुरकार्याणि पश्यता मया दैत्यानां कौतूहलाय सम्मोहनाय योषिद्वेषो धृतो रूपान्तरेण तद्सम्भवादित्यन्वयः ॥ १५ ॥

[1] 'कृत' इत्यत्र 'धृत' इति कुत्रचित्पाठान्तरम् ।

हे सुरसत्तमेति सम्बोधनेन तस्मिन् कृपातिशयं सूचयति— सङ्कल्पप्रभवः कामस्तस्योदयो यस्मिन् तत अतएव कामिना बहुमन्तव्यं तद्रूपमहं ते दिदृक्षोर्दर्शयिष्यामीत्यन्वयः ॥ १६ ॥ भगवान् विष्णुरित्येवं ब्रुवाणः सन् तत्रैवान्तरधीयत । उमया सह भवः सर्वतश्चक्षुश्चारयं-स्तत्रैवास्ते स्म ॥ १७ ॥ ततस्तदनन्तरमेव विचित्राणि पुष्पाणि अरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिन् तस्मिन्नुपवने वरामतिश्रेष्ठां सुन्दरीं स्त्रियं भवो ददर्शेत्यन्वयः । तां स्त्रियं वर्णयति— विक्रीडतीमिति सार्धैस्त्रिभिः । कन्दुकलीलया विक्रीडन्तीम् । लसता दुकूलेन पर्यस्ते परिवृत्ते नितम्बे मेखला यस्यास्ताम् ॥ १८ ॥ उत्पततपतत्कुन्दुकलीलावशेन ये आवर्त्तनोद्वर्तने नमनोन्नमने ताभ्या कम्पितयोः स्तनयोः प्रकृष्टहाराणा चोरुभारैः प्रतिपदं मध्ये प्रभज्यमानामिव चलत्पदमेव प्रवालवत्कोमलत्वात्प्रवालं तत्ततस्ततो नयन्तीम् ॥ १९ ॥ दिक्षु भ्रमतः कन्दुकस्य

**तत्तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ॥ कामिनां बहु मन्तव्यं सङ्कल्पप्रभवोदयम् ॥ १६ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया ॥ १७ ॥ ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥ १८ ॥ आवर्तनोद्वर्तनकम्पि-तस्तनप्रकृष्टहारोरुभरैः पदे पदे ॥ प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥ १९ ॥ दिक्षु भ्रमत्कन्दुक-चापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ॥ स्वकर्णविभ्राजितकुण्डलोल्लसत्कपोलनीलालकमण्डिताननाम् ॥ २० ॥ श्लथद्दुकूलं कबरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ॥ विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्म-मायया ॥ २१ ॥ तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ॥ स्त्रीप्रेक्षणप्रतिसमीक्षणविह्व-लात्मा नात्मानमन्तिक उमां स्वगणांश्च वेद ॥ २२ ॥**

चापलैश्चाञ्चल्यैर्भृशं प्रोद्विग्नतारे आयते लोले चञ्चले लोचने यस्यास्ताम् । स्वकर्णाभ्या विभ्राजिते ये कुण्डले ताभ्यामुल्लसन्तौ यौ कपोलौ ताभ्या च नीलालकैश्च मण्डितमाननं यस्यास्ताम् ॥ २० ॥ श्लथत् विश्लेषं प्राप्नुवत् दुकूलं विच्युतां विकीर्णां कबरीं च वल्गुना मनोहरेण वामकरेण सन्नह्यतीं बध्नन्तीमन्येन दक्षिणेन करेण कन्दुकं विनिघ्नतीं आत्ममायया स्वचमत्कारेण जगद्विमोहयन्तीं ददर्शेति सर्वत्र पूर्वेणैव सम्बन्धः ॥ २१ ॥ देवः श्रीमहादेवस्तां पूर्ववर्णितस्वरूपा स्त्रियं वीक्ष्य आत्मानमन्तिके स्वसमीपे स्थितामुमां स्वगणांश्च नन्दीश्वरादीन्न वेदेत्यन्वयः । तत्र हेतुमाह— इतीति ।

१ कबरीं केशबन्धनरज्जुम् । इति सु० । २ विनिघ्नतीं उच्छलयन्तीम् । इति सु० ।

इत्येवम्भूतया कन्दुकलीलया या ईषद्व्रीडा तया अस्फुटं यत्स्मितं तेन सह विसृष्टो यः कटाक्षस्तेन मुष्टो वञ्चितः। वञ्चितत्वमेव स्पष्टयति— स्त्रीति स्वयं यत् स्त्रिया प्रेक्षणं तया च यत्प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य सः ॥ २२ ॥ यदा तु तस्याः कराग्रात्स क्रीडासाधनीभूतः कन्दुको विदूरं गतस्तदा भवस्यानु निरन्तरं पश्यतः सतस्तं कन्दुकमनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मं ससूत्रं काञ्चीसहितं वासो मारुतः अहरदित्यन्वयः। भगवन्मायायाः प्राबल्यसूचनार्थं देवस्येति विशेषणम्। किलेत्याश्चर्ये। अत्याश्चर्यमेतद्यद्देवश्रेष्ठस्य श्रीमहादेवस्य निर्जितकामस्यापि मोहो जात इत्यर्थः ॥ २३ ॥ तन्मोहमेव दर्शयति— एवमिति। एवम्भूता विवस्त्रा ता दृष्ट्वा भवस्तस्या मनश्चक्रे इत्यन्वयः। किलेति निश्चये, नात्र सन्देहः। तस्या मनःकरणे हेतुमाह— मनोरमामिति। तत्रापि हेतुमाह— दर्शनीयामिति। तत्रापि हेतुमाह— रुचिरापाङ्गीमिति। तथात्वेऽपि विषज्जन्त्यां कुञ्चितकटाक्षैः श्रीमहादेवनिरीक्षणेन तस्मिन्नात्मन आसक्तिमभिनयन्त्यामित्यर्थः ॥ २४ ॥ एवं तस्यामासक्तमना महादेवस्तस्याः स्त्रियाः पद स्थानं समीप यया-

**तस्याः कराग्रात् स तु कन्दुको यदा गतो विदूरं तमनुव्रजत्स्त्रियाः ॥ वासः ससूत्रं लघु मारुतोऽहरद्भवस्य देवस्य किलानु पश्यतः ॥ २३ ॥ एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् ॥ दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां भवः किल ॥ २४ ॥ तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥ भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥ २५ ॥ सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम् ॥ निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत ॥ २६ ॥ तामन्वगच्छद्भगवान् भवः प्रमुषितेन्द्रियः ॥ कामस्य च वशं नीतः करेणुमिव यूथपः ॥ २७ ॥**

वित्यन्वयः। ननु स्वभार्यासमीपे तस्य कथमेवं प्रवृत्तिरिति शङ्कानिरासायाह— भवान्या अपि पश्यन्त्या इति। तत्र हेतुमाह— गतह्रीरिति। स्वभार्यासमीप एवंप्रवृत्तौ लज्जैव प्रतिबन्धिका सा च तस्य गतेति भावः। तत्र हेतुमाह— तया मोहिन्या निमित्तभूतया अपहृत विज्ञानं यस्य सः। कथं तया विज्ञानमपहृतमित्यपेक्षायां कामोत्पादनद्वारेत्याह— तदिति। तया निमित्तभूतया कृत उत्पादितो यः स्मरः कामस्तेन विह्वलः, परवश इत्यर्थः ॥ २५ ॥ सा श्रीः तं श्रीमहादेवमायान्तमालोक्य तस्य मोहाधिक्यार्थं हसन्ती वृक्षेषु निलीयमाना आत्मानमाच्छादयन्ती भवं लक्षीकृत्य नान्वतिष्ठत न स्थितवती, किन्तु दुद्रावैवेत्यन्वयः। तत्र हेतुमाह— भृशं व्रीडितेति। तत्रापि हेतुमाह— विवस्त्रेति ॥ २६ ॥ भवस्तामन्वगच्छत्। तत्र हेतुमाह— प्रमुषितेन्द्रिय इति, व्याकुलमना इत्यर्थः। तत्रापि हेतुमाह— कामस्य स्ववैरिणो वशं नीत इति। तत्र दृष्टान्तमाह— करेणुमिति। यथा कामस्य वशं

नीतः प्रमुषितेन्द्रियो यूथपो मतङ्गजः करेणुं हस्तिनीमनुगच्छति तथेत्यर्थः। भगवन्मायाया विमोहने प्राबल्यं सूचयन्नाह— भगवानिति। ज्ञानैश्वर्यादिमानपि भव एवं विमोहितः काऽन्यस्य वार्तेति भावः॥ २७॥ स तु भवः तामालिङ्गनादिकमनिच्छतीमपि स्त्रियं वेगेनानुव्रज्य केशबन्धे कबर्यां गृहीत्वा उपानीय आकृष्य बाहुभ्यां परिषस्वजे इत्यन्वयः॥ २८॥ यथा करिणा हस्तिना बलादुपगूढा आलिङ्गिता कारिणी हस्तिनी इतस्ततः प्रसर्पन्ती तथा भगवता रुद्रेण सा स्त्री बलादुपगूढा अतएव पारवश्याद्विप्रकीर्णाः शिरोरुहा यस्याः सा इतस्ततः प्रसर्पन्ती सुरर्षभस्य महादेवस्य भुजान्तरात् बाहुमध्यात् आत्मानं मोचयित्वा पृथुश्रोणी स्थूलनितम्बापि प्राद्रवदित्यन्वयः। कथं सा महाबलपराक्रमस्य रुद्रस्य बाहुमध्यादात्मानं मोचयितुं शक्तेति शङ्कानिरासायाह— सा देवेन भगवता विष्णुना विनिर्मिता प्रकटिता मायेति। हे अङ्गेति सम्बोधनेनान्तरङ्गत्वात्त्वा प्रतीदं सुगोप्यमप्युक्तमनधिकारिणं प्रति तु नैव वक्तव्यं, रुद्रापकर्षसूचकत्वेन तदपमानेनानर्थहेतुत्वादिति सूचितम्॥ २९॥ ३०॥ असौ रुद्रस्य वैरिणा

**सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम्॥ केशबन्ध उपानीय बाहुभ्यां परिषस्वजे॥ २८॥ सोपगूढा भगवता करिणा कारिणी यथा॥ इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा॥ २९॥ आत्मानं मोचयित्वाऽङ्ग सुरर्षभभुजान्तरात्॥ प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता॥ ३०॥ तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः॥ प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः॥ ३१॥ तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः॥ शुष्मिणो यूथपस्येव वासितामनुधावतः॥ ३२॥ यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः॥ तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन् महीपते॥ ३३॥**

कामेन विनिर्जित इव परवश इव तस्य विष्णोः पदवीं मार्गं प्रत्यपद्यतेत्यन्वयः। वस्तुतस्तु भगवदिच्छैवैतादृशी, न कामप्राबल्य, तेन तस्य पूर्वमेव विनिर्जितत्वादिति इवशब्देन सूचितम्। ननूभयोरपीश्वरत्वात् कथ विष्णोरिच्छयैव रुद्रस्य मोह इत्याशङ्कानिरासायाह— अद्भुतकर्मण इति। इयमपि भगवतोऽलौकिकी लीलेति भावः॥ ३१॥ तं मोहिनीरूपं विष्णुमनुधावतस्तस्य रुद्रस्य रेतश्चस्कन्द सुस्राव तद्रेतसो वक्ष्यमाणरूप्यादिहेतुत्वं सूचयन् विशिनष्टि— अमोघरेतस इति। अमोघं रूप्यादिहेतुत्वात् सफलं रेतो यस्य तस्येत्यर्थः। तत्र दृष्टान्तमाह— शुष्मिण इति। वासिता गर्भधारणायोद्यतां गामनुधावतः शुष्मिणो मत्तस्य यूथपस्य वृषभश्रेष्ठस्य यथा रेतः स्रवति तथेत्यर्थः॥ ३२॥ अमोघरेतस्त्वमेव दर्शयति— यत्रेति। हे महीपते तस्य रुद्रस्य रेतो मह्या यत्र यत्रापतत् तानि स्थानानि रूप्यस्य हेम्नः सुवर्णस्य च क्षेत्राण्यासन्नित्यन्वयः। अमोघरेतस्त्वेऽपि हेतुमाह— महात्मन इति। महान् आत्मा यस्य तस्येश्वरस्येत्यर्थः। तदेव रूप्यादि इदानीन्तनाना राज्ञा ऐश्वर्यादिकारणं जातमिति सम्बोधनेन सूचितम्॥ ३३॥

एवं तामनुधावन् हरः सरित्सरस्सु शैलादिषु च यत्र क्व च स्थानेष्वृषय आसंस्तत्र सन्निहितो बभूवेति शेषेणान्वयः। तत्र मोहिनीसन्निधिं प्रापेत्यर्थः। अनेन मोहिनीरूपेण भगवता ऋषिणां महाननुग्रहः कृतो येन रुद्रदशाप्रदर्शनेन निर्जितेन्द्रियकामैरपि स्त्रीदर्शनादिकं वर्जनीयमिति शिक्षिता इति ज्ञेयम् ॥ ३४ ॥ हे नृपश्रेष्ठेति सम्बोधनेन तव तु भगवदनुग्रहादेव मोहो निवृत्तो येन स्त्र्यादि सर्वं त्यक्तवानसीति सूचयति। एवं रेतसि स्कन्ने सति स रुद्रो देवस्य भगवतो विष्णोर्मायया जडीकृतमात्मानमपश्यत्। मोहिनीदर्शनक्षणमारभ्यैव जडीभूतमपि तदानीं तथात्वेनानुसन्दधावित्यर्थः । अतः कश्मलान्मोहात्सन्न्यवर्तत ॥ ३५ ॥ अथ मोहनिवृत्त्यनन्तरमेव आत्मनः स्वस्य जगदात्मनो हरेश्चावगतं ज्ञातं माहात्म्यं येन स रुद्रस्तद्भगवन्मायया जडीकरणमद्भुतमाश्चर्यं न मेने इत्यन्वयः। तत्रात्मनो माहात्म्यं भगवदधीनप्रवृत्तित्वं हरेर्माहात्म्यं सर्वनियन्तृत्वम्। तत्र हेतुमाह– अपरिज्ञेयं अपरिमेयं

**सरित्सरस्सु शैलेषु वनेषूपवनेषु च ॥ यत्र क्व चासन्नृषयस्तत्र सन्निहितो हरः ॥ ३४ ॥ स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया ॥ जडीकृतं नृपश्रेष्ठ सन्न्यवर्तत कश्मलात् ॥ ३५ ॥ अथावगतमाहात्म्य आत्मनो जगदात्मनः ॥ अपरिज्ञेयवीर्यस्य न मेने तदु हाद्भुतम् ॥ ३६ ॥ तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ॥ उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुम् ॥ ३७ ॥ श्रीभगवानुवाच ॥ दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः ॥ यन्मे स्त्रीरूपया स्वैरं मोहितोऽप्यङ्ग[1] मायया ॥ ३८ ॥**

वीर्यं मायाशक्तिरूपं यस्य तस्येत्यर्थः। उ-हेति भगवन्मायाप्राबल्यं सर्वशास्त्रप्रसिद्धमिति द्योतयति॥ ३६ ॥ तं श्रीरुद्रमविक्लवं व्याकुलतारहितं स्वपरमाहात्म्यानुसन्धानेन अव्रीडं गतलज्जं चालक्ष्य परमप्रीतः स्वां सनातनीं पौरुषीं तनु बिभ्रत्सन् मधुसूदन उवाचेत्यन्वयः ॥ ३७ ॥ भगवद्वाक्यान्येव दर्शयति– दिष्ट्येति त्रिभिः। हे विबुधश्रेष्ठ आत्मना स्वत एव त्व स्वा निष्ठा प्रकृतिं स्थित इति दिष्ट्या भद्रं जात, यत् यस्मात् स्त्रीरूपया मे मम मायया स्वैरं यथेष्टं पूर्वं त्वं मोहितोऽसीत्यन्वयः। अनेन स्वमायामोहितस्य स्वस्थता सुदुर्लभेति सूचितम् । स्वतस्स्वस्थतायां हेतुत्वेन सम्बोधयति– हे विबुधश्रेष्ठ इति। यद्यन्य एव कश्चिद्विबुधोऽपीत्थं मोहितः स्यात्तदा स्वनिष्ठा स्थातुं न शक्नुयादिति भावः । तत्रापि मम कृपातिशय एव हेतुरिति ज्ञेयमन्तरङ्गभक्तत्वादिति सूचनार्थं सम्बोधनान्तरमाह– हे अङ्गेति ॥ ३८ ॥

१ ‘ मोहितोऽस्यङ्ग मायया ’ इति ‘ मोहितो नाङ्ग मायया ’ इति च पाठद्वयम् ।

विषक्तो विषयभोगासक्तः पुमान् मे मम माया को नु अतितरेत् उल्लङ्घ्य स्वस्थचित्तो भवेदित्यन्वयः। त्वं तु मद्भक्तत्वेन मत्कृपापात्रत्वात्त्वा तीर्णा इति सूचयन्नाह—त्वद्दते इति। दुस्तरत्वमेव स्पष्टयति—। अकृतात्मभिः मद्भक्तिराहित्येन अशोधितान्तःकरणैर्दुस्तरामिति। तत्र हेतुमाह— तानिति। तांस्तान् भावान् विषयान् विसृजतीम्॥ ३९॥ इतोऽग्रे तवैवं मोहोऽपि नैव भविष्यतीत्यनुग्रहेणाह—सेति। कालेन सृष्ट्यादिनिमित्तेन प्रेरिता कलयतीति कालः पुरुषस्तेन रूपेण मया भागशः रजआदिविभागेन समेता अङ्गीकृताऽपि सा दुस्तरेयं रजआदिगुणमयी मम माया इतोऽग्रे त्वा नैवाभिभविष्यति तव मोहं नैव करिष्यतीत्यन्वयः ॥ ४० ॥ हे राजन् श्रीवत्सः अङ्कश्चिह्नविशेषो यस्य तेन भगवता विष्णुनैवं सत्कृतः शिवस्तमामन्त्र्य पृष्ट्वा परिक्रम्य प्रदक्षिणीकृत्य च सगणः पार्वत्यादिस्वगणसहितः स्वस्यालयं स्थानं कैलासं ययावित्यन्वयः ॥ ४१ ॥ हे भारतेति सम्बोधनेन कुलश्रेष्ठस्य वंशे जातत्वाद्भगवद्भक्तत्वाच्च त्वमप्यतिश्रेष्ठोऽसि इतीदं रहस्यान्तरं शृण्विति सूचयति। अथ स्वस्थानप्राप्त्यनन्तरमृषिमुख्यानां शंसता स्तुवतामेव सतां

को नु मेऽतितरेन्मायां विषक्तस्त्वद्दते पुमान् ॥ तांस्तान् विसृजतीं भावान् दुस्तरामकृतात्मभिः ॥ ३९ ॥
सेयं गुणमयी माया न त्वामभिभविष्यति ॥ मया समेता कालेन कालरूपेण भागशः ॥ ४० ॥ श्रीशुक उवाच ॥
एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः ॥ आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४१ ॥ आत्मांशभूतां
तां मायां भवानीं भगवान् भवः ॥ शंसतामृषिमुख्यानां प्रीत्याऽचष्टाऽथ भारत ॥ ४२ ॥ अपि व्यपश्यस्त्वमजस्य
मायां परस्य पुंसः परदेवतायाः। अहं कलानामृषभो विमुह्ये ययाऽवशोऽन्ये किमुतास्वतन्त्राः ॥ ४३ ॥

ताननादृत्य आत्मांशभूता आत्मनः स्वस्य तामसत्वात्तामसीं मायां तां भवानीं प्रति भगवान् भवः प्रीत्या आचष्ट भगवन्मायाप्राबल्यं उक्तवानित्यन्वयः। ननु भगवन्मायाप्राबल्यकथनस्य स्वविमोहनिरूपकत्वेन स्वापकर्षहेतुत्वात् कथं तत्कथितवानित्याशङ्क्याह— प्रीत्येति। कदाचिद्भवान्या भगवत्यपकृष्ट-बुद्धिः स्यात्तदा महाननर्थः स्यात्तन्माभूदित्यभिप्रायेण प्रीत्या कथितवानित्यर्थः ॥ ४२ ॥ अपीति प्रश्ने। हे देवि परस्य पुंसः पुरुषोत्तमस्य मायां त्वं विशेषेणाऽपश्यो दृष्टवत्यसीत्यन्वयः। ननु का सा माया या मया दृष्टेत्यपेक्षायामाह—अहमिति। कलानां तदंशावताराणामृषभः श्रेष्ठोऽप्यहमवशः सन् यया मायया विमुह्ये विमोहं गतोऽस्मि तदा अस्वतन्त्राः इन्द्रियादिपरवशा अन्ये विमुह्युरिति किमुत वक्तव्यमित्यर्थः। ननु त्वमपि देवादिश्रेष्ठत्वात् पुरुषोत्तम एवेति शङ्कानिरासायाह— परदेवताया इति, मत्तोऽपि स श्रेष्ठ एवेति भावः। तत्रापि हेतुमाह—अजस्येति, जन्मादिविकाररहितस्येत्यर्थः॥ ४३ ॥

१ 'शृण्वता' इति पाठ क्वचित्। २ 'अयि' इति सम्बोधनार्थः, पाठ.।

समासहस्रान्ते संवत्सरसहस्रान्ते योगाद्ध्यानसमाध्यादेरुपारतं निवृत्तं मामुपेत्य त्वं परमेश्वरः कस्य ध्यानं करोषीति त्वं यमपृच्छः पृष्टवती स पुराणः पुरुषः साक्षादेष एवेत्यन्वयः। वै अवधारणे। पुराणत्वे हेतुमाह– न यत्रेति। उत्पत्तिविनाशादिविकारहेतुः कालः सर्वत्र जगति प्रविशन्नपि यत्र भगवति न विशते न प्रविशतीत्यर्थः। ननु जन्मादिहेतुशुभाशुभकर्मणा विद्यमानत्वात् कथं कालो न प्रविशेत्तेन जन्माद्यभावात् पुराणत्व स्यादिति शङ्का-निरासायाह– न वेद इति। शुभाशुभकर्मनियामकवेदस्य मनुष्यादिजीवाधिकारिकत्वात् सर्वेश्वरे भगवति तस्य प्रवेशो येन शुभाशुभकर्मस्पर्शेन तदनुसारिकालः प्रविशेदित्यर्थः ॥ ४४ ॥ अष्टाध्यायोक्तमर्थं निगमयति– इतीति। राज्ञि स्वस्नेह सूचयन् सम्बोधयति– हे तात सिन्धोर्निर्मथने येन महाबलपराक्रमेण महान् अचलः पर्वतः मन्दरनामकः पृष्ठे धृतस्तस्य शार्ङ्गधन्वन इत्येवं समुद्रनिर्मथनादिरूपो विक्रमस्ते तुभ्य मया अभिहितः कथित इत्यन्वयः ॥ ४५ ॥ एतत्कीर्तनश्रवणयोः फलमाह– एतदिति। एतत्समुद्रमथनादिरूपं भगवच्चरितं मुहुः कीर्तयतोऽनुशृण्वतश्च पुंसां समुद्यमः जातु कदाचिदपि काले क्वचिदपि देशे न रिष्यते न नश्यति, निष्फलो नैव भवतीत्यन्वयः। अनेन भगवद्भक्ताना तत्तत्फलप्राप्तौ न देशमुहूर्ता-

यं मामपृच्छस्त्वमुपेत्य योगात् समासहस्रान्त उपारतं वै ॥ स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥ ४४ ॥ श्रीशुक उवाच ॥ इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः ॥ सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥ ४५ ॥ एतन्मुहुः कीर्त्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ॥ यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसार-परिश्रमापहम् ॥ ४६ ॥ असदविषयमङ्घ्रिं भावगम्यं प्रपन्नानमृतममरवर्यानाशयत् सिन्धुमध्यम् ॥ कपटयुवतिवेषो मोहयन् यः सुरारींस्तमहमुपसृतानां कामपूरं नतोऽस्मि ॥ ४७ ॥ इति श्रीमद्भा० महापु० अष्ट० सम्पत्सु सर्वदान-प्रकरणे रुद्रमोहनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥

दिविघ्नहेतुरिति दर्शितम्। न केवलमस्यैव चरितस्य कीर्तनादितत्तदुद्यमसाफल्यहेतुः किन्तु सर्वस्यैव भगवद्गुणानुवर्णनमात्रस्यापि तद्धेतुत्व, तत्रापि न केवल सासारिकफलहेतुत्वमेव किन्तु मोक्षहेतुत्वमपीत्याह– तदिति। यस्मादेव तत्तस्मादुत्तमः तमोऽज्ञानं तदुद्गच्छति यस्मात्स तथाभूतः श्लोको यशो यस्य तस्य भगवतो गुणानामनुवर्णनादिकं समस्तो यः संसारे परिश्रमः खेदस्तमपहन्तीति पुरुषार्थचतुष्टयप्रदमित्यर्थः ॥ ४६ ॥ भगवता कृतं स्वभक्तपक्षपातं स्मरन्नमस्करोति– असदविषयमिति। यः कपटेन मायया युवतिवेषः सन् सुरारीन् असुरान् मोहयन् अङ्घ्रिप्रपन्नान् स्वचरणं शरणमागतान् अमरवर्यान् सिन्धुमध्यं सिन्धुमथनोद्धृतं अमृतमाशयत् अभोजयत्, तमुपसृतानां कामपूरं पुरुषार्थचतुष्टयप्रदमह नतोऽस्मीत्यन्वयः। नन्वेवं सर्वपुरुषार्थप्रदस्य चरणं शरणमसुरा एव कुतो नागतास्तथाचैतेऽप्यमृतं प्राप्नुयुरिति शङ्का निरस्यति– असदिति। असता तामसानामविषय पुरुषार्थप्रदत्वेन दुर्ज्ञेयमित्यर्थः। तथाचाज्ञानात्ते शरणं नागता इति भावः। तर्हि देवाः कथ शरणमागतास्तत्राह– भावगम्यामिति

... भक्त्या गम्य ज्ञातु शक्यमित्यर्थः । तथाच भक्तत्वेन सर्वपुरुषार्थप्रदत्वज्ञानाद्देवाः शरणमागता इति भावः ॥ ४७ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र सर्वदाननिरूपणे ॥ विवृतो द्वादशोऽध्यायो रुद्रमोहनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥
त्रयोदशे तु मन्वादि षड्भवन्ति समासतः ॥ मन्वन्तराणि कथ्यन्ते सप्तमादीन्यनुक्रमात् ॥ १ ॥ ॥ एवं मन्वन्तरनिरूपणे प्रसङ्गप्राप्तं समुद्रमथनादिभगवच्चरितं निरूप्यावशिष्टानि सप्तमादीनि मन्वन्तराणि निरूपयति— मनुरित्यादिना यावदध्यायसमाप्ति । यो विवस्वतः सूर्यस्य पुत्रः श्राद्धदेव इति श्रुतः प्रसिद्धः सप्तमो वर्तमानो मनुस्तस्यापत्यानि मे मत्तस्त्वं शृण्वित्यन्वयः ॥ १ ॥ तानेव दशपुत्रान् दर्शयति— इक्ष्वाकुरित्यादिद्वयेन ॥ २ ॥

**श्रीशुक उवाच ॥ मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः ॥ सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥ १ ॥**
**इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च ॥ नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥ करूषश्च पृषध्रश्च दशमो**
**वसुमान् स्मृतः ॥ मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ॥ ३ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥**
**अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः ॥ ४ ॥ कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्भरद्वाज**
**इति सप्तर्षयः स्मृताः ॥ ५ ॥ अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ॥ आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥**
**सङ्क्षेपतो मयोक्तानि सप्त मन्वन्तराणि ते ॥ भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्याऽन्वितानि च ॥ ७ ॥**

हे परन्तप हे शत्रुतापनेति राजसम्बोधनम् ॥ ३ ॥ अस्मिन्मन्वन्तरे आदित्यादयो देवाः सन्तीति शेषेणान्वयः । हे राजन् तेषामादित्यादीनामिन्द्रस्तु पुरन्दरनामाऽस्ति ॥ ४ ॥ कश्यपादयः सप्तर्षयः स्मृताः, अस्मिन्मन्वन्तरे सन्तीति महद्भिः कथिता इत्यर्थः ॥ ५ ॥ अत्रापि अस्मिन्नपि मन्वन्तरे कश्यपात् पितुः अदितेर्मातुश्च सकाशात् भगवतो जन्म प्रादुर्भावः अभूत् । ननु कोऽसौ प्रादुर्भूतो भगवान् विष्णुरित्यपेक्षायामाह—आदित्यानामिति । द्वादशादित्यानां मध्ये योऽसाववरजः सर्वतः कनिष्ठो वामनरूपधृक् ह्रस्वस्वरूपधारी स एव भगवान् विष्णुरित्यन्वयः ॥ ६ ॥ उक्तमनुवदन् वक्तव्यं प्रतिजानीते— सङ्क्षेपत इति । सप्त मन्वन्तराणि मया सङ्क्षेपत उक्तानीत्यन्वयः । चकारात्तत्र तत्र मन्वन्तरे कृतानि भगवच्चरितान्यप्युक्तानीति ज्ञेयम् । अथेदानीं भगवतो विष्णोः शक्त्या अवतारेणान्वितानि युक्तानि भविष्याणि मन्वन्तराणि वक्ष्यामीत्यन्वयः । चकारात्तत्र तत्र भगवत्कृत स्वभक्तेन्द्रपक्षपातं च ॥ ७ ॥

१ ‘ शक्त्यन्वितानि च ’ इत्यपि पाठो बहुषु पुस्तकेषु ।

अष्टमं मनुं वक्तुं तत्प्रस्तावकथामाह— विवस्वत इति त्रिभिः। विवस्वतश्च द्वे भार्ये ते च उभे अपि विश्वकर्मणः सुते। तयोर्नामाह—सञ्ज्ञा छाया चेति। पूर्वोक्तं स्मारयति— हे राजेन्द्र प्राक् षष्ठस्कन्धे ये मया तव त्वां प्रत्यभिहिते कथिते इत्यर्थः ॥ ८ ॥ एके वडवा तृतीया भार्यामाहुः । मम तु सञ्ज्ञैव वडवा जातेति मतम्। तदुक्तं षष्ठे—'सैव भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि' इति। तासां स्त्रीणां मध्ये यमो यमी यमुना श्राद्धदेवश्चेति त्रयः संज्ञायाः सुताः ॥ ९ ॥ छायासुतानेव दर्शयति— सावर्णिः पुत्रः तपतीनाम्नी कन्या या च सवरणस्य भार्या जाता। शनैश्चरश्च तृतीयः पुत्रोऽभूत्। वडवाया आत्मजौ तु अश्विनौ नासत्यदस्रौ ॥ १० ॥ प्रासङ्गिकमुक्त्वाऽष्टमं मन्वन्तरमाह—अष्टम इति। अष्टमे मन्वन्तरे तद्योग्ये काले आयाते सति विवस्वतः पुत्रः सावर्णिर्मनुर्भविता भविष्यति। हे नृप निर्मोकाद्यास्तस्य सावर्णेस्तनया भविष्यन्ति ॥ ११ ॥ तत्र तस्मिन्मन्वन्तरे सुतपसो विरजा अमृतप्रभा इति सञ्ज्ञका देवा भविष्यन्ति। विरोचनसुतो बलिश्च तेषां देवानामिन्द्रो भविष्यति ॥ १२ ॥ नन्वसुरोऽसौ कथं देवाधिपतिरिन्द्रः स्यात्

विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे ॥ सञ्ज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव ॥ ८ ॥ तृतीयां वडवामेके तासां सञ्ज्ञासुतास्त्रयः ॥ यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥ ९ ॥ सावर्णिस्तपतीकन्या भार्या संवरणस्य या ॥ शनैश्चरस्तृतीयोऽभूदश्विनौ वडबात्मजौ ॥ १० ॥ अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः ॥ निर्मोकविरजस्काद्याः सावर्णितनया नृप ॥ ११ ॥ तत्र देवाः सुतपसो विरजा अमृतप्रभाः ॥ तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥ दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ॥ राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ १३ ॥ योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ॥ निवेशितोऽधिके स्वर्गादधुनाऽऽस्ते स्वराडिव ॥ १४ ॥

तथात्वेऽपि तस्य बन्ध एव स्यादित्याशङ्क्य भगवद्भक्तत्वात्तत्प्रसादेन तस्येन्द्रत्वं संसारविमुक्तिश्चोभयं भविष्यतीत्याह— दत्त्वेति। योऽसुरकुलोत्पन्नोऽपि भगवद्भक्तत्वेन प्रसिद्ध इदानीं सप्तमे मन्वन्तरे पदत्रयं याचमानाय विष्णवे इमां सर्वां महीं दत्त्वाऽऽस्ते स भगवत्प्रसादेनैवाष्टमे मन्वन्तरे राद्धं लब्धमिन्द्रपदं तद्भोगावसाने मन्वन्तरसमाप्तौ हित्वा ततस्तदनन्तरं सिद्धिं भगवद्धामप्राप्तिरूपां विमुक्तिमवाप्स्यति ॥ १३ ॥ तर्हीदानीमैश्वर्याद्भ्रंशितस्य तस्य लोके यशो भोगश्च न स्यादित्याशङ्क्य भगवदनुग्रहेणेदानीमपि तदुभयमस्तीत्याह— य इति । तद्धैर्यादिगुणान् दृष्ट्वा प्रीतेन भगवता लोके तद्धैर्यादिगुणान् व्यापयितु योऽसौ बद्धः पुनश्च सुखभोगार्थं स्वर्गादप्यधिके अधिकसुखे सुतले निवेशितः सन्नधुनाऽपि स्वराडिव इन्द्र इव भोगैश्वर्यादिसम्पन्नस्तत्रास्ते इत्यन्वयः ॥ १४ ॥

१ सुतौ च सुता च सुता इत्येकशेष, यमो यमी श्राद्धदेव इति तत्रैवोक्तत्वात्।

तत्र तस्मिन्मन्वन्तरे इमे गालवादयः सप्तर्षयो भविष्यन्तीति द्वयोरन्वयः । तत्र रामः परशुरामः। द्रोणपुत्रः अश्वत्थामा ॥ १५ ॥ त इदानीं कथ कुत्र च सन्तीत्यपेक्षायामाह– स्वयोग इति । इदानीमपि ते हे राजन् स्वयोगप्रभावेण स्वे स्वे आश्रममण्डले आसते इत्यन्वयः ॥ १६ ॥ तत्र भगवदवतारमाह– देवेति । देवगुह्याख्यपितुः सकाशात् सरस्वत्याख्याया मातरि सार्वभौम इति नाम्ना प्रभुर्भगवान् अवतरिष्यतीति शेषः । अवतारप्रयोजनमाह– स्थानमिति, स्वर्गमित्यर्थः । तथादानसामर्थ्ये हेतुमाह– ईश्वर इति ॥ १७ ॥ हे नृप वरुणसम्भवो वरुणपुत्रो दक्षसावर्णिनामको नवमो मनुर्भविष्यतीति शेषः । तत्पुत्रान् दर्शयति– भूतकेतुरित्यादिना ॥ १८ ॥ तत्र मन्वन्तरे पारामरीचिगर्भाद्या देवा भविष्यन्ति, अद्भुतनाम्ना स्मृतः प्रसिद्ध इन्द्रो भविष्यति, ततस्तस्मिन् मन्वन्तरे द्युतिमत्प्रमुखाः सप्तर्षयो भविष्यन्तीत्यन्वयः । प्रमुखशब्देन 'सवनो द्युतिमान् हव्यो वसुर्मेधा-

गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा ॥ ऋष्यशृङ्गः पिताऽस्माकं भगवान् बादरायणः ॥ १५ ॥ इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः ॥ इदानीमासते राजन् स्वे स्व आश्रममण्डले ॥ १६ ॥ देवगुह्यात् सरस्वत्यां सार्वभौम इति प्रभुः ॥ स्थानं पुरन्दराद्धृत्वा बलये दास्यतीश्वरः ॥ १७ ॥ नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः ॥ भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप ॥ १८ ॥ पारामरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः स्मृतः ॥ द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः ॥ १९ ॥ आयुष्मतोऽम्बुधारायामृषभो भगवत्कला ॥ भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥ २० ॥ दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ॥ तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥ हविष्मान् सुकृतिः सत्यो जयो मूर्तिस्तदा द्विजाः ॥ सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥ २२ ॥

तिथिस्तथा ॥ ज्योतिष्मान् सप्तमः सत्यस्तथैते च महर्षयः' इति हरिवंशोक्ता अन्येऽपि ज्ञेयाः ॥ १९ ॥ तत्रत्यं भगवदवतारमाह– आयुष्मत इति । आयुष्मतः पितुः सकाशादम्बुधारायां मातरि ऋषभनामको भगवत्कला भवित्री भगवदवतारो भविष्यति, येन ऋषभेण संराद्धां संसिद्धां स्ववशीकृता त्रिलोकीमद्भुतसञ्ज्ञक इन्द्रो भोक्ष्यते इत्यन्वयः ॥ २० ॥ उपश्लोकस्य सुतो ब्रह्मसावर्णिनामको दशमो मनुर्भविष्यतीति शेषः । तस्य मनुत्वप्राप्तौ हेतुमाह– गुणैर्महानिति । तदपत्यान्याह– तत्सुता इति । तत्रत्यान् सप्तर्षीनाह– हविष्मत्प्रमुखा द्विजा भविष्यन्तीति शेषेणान्वयः ॥ २१ ॥ हविष्मत्प्रमुखा द्विजा इत्युक्तानामेव केषाञ्चिन्नामान्याह– हविष्मानिति । इतोऽप्यवशिष्टाः–'हविष्मान् पौलहश्चैव सुकृतिश्चैव भार्गवः ॥ जयो

१ 'देवगुह्या सरस्वत्यां' इति सुबोधिन्या पाठो दृश्यते स निरर्थक एवेति भाति । २ 'धृष्टकेतु.' इति 'धृतकेतु' इति च क्वचित्पाठान्तरे । ३ उभयत्रापि 'इन्द्र श्रुत.' इति पाठान्तर चिन्त्यम् । ४ भवित्रीति एतट्टीकाकारसम्मत पाठइति भाति ।

मूर्तिस्तथाऽऽत्रेयो वासिष्ठश्चाष्टमः स्मृतः ॥ पौलस्त्यः प्रमितिश्चैव नाभागश्चैव काश्यपः ॥ अङ्गिरा नभसः सत्यः सप्तैते च महर्षयः' इति हरिवंशोक्ता ज्ञेयाः। तदा तस्मिन् मन्वन्तरे सुवासनादयो देवा भविष्यन्तीति सर्वत्र शेषः। शम्भुनामकः सुरेश्वरः इन्द्रो भविष्यति ॥ २२ ॥ तत्रापि विश्वसृजो गृहे विषूच्यां स्वांशेन जातः सन् विष्वक्सेननामको भगवान् शम्भोः शम्भुनामकस्येन्द्रस्य सख्यं साहाय्यं करिष्यतीत्यन्वयः। तत्र सामर्थ्यरूप हेतु सूचयन् विशिनष्टि— विभुरिति, साहाय्ये समर्थ इत्यर्थः ॥ २३ ॥ धर्मसावर्णिरेकादशम एकादशो मनुर्भविष्यति। तस्य मनुत्वे हेतुमाह—आत्मवानिति। आत्मा सर्वात्मा हरिः स उपास्यतया विद्यते यस्य स तद्वान्, भगवद्भक्त इत्यर्थः। तत्तस्य च सत्यधर्मादयो दश सुताश्चानागता भाव्या इत्यर्थः॥ २४ ॥ तस्मिन्मन्वन्तरे विहङ्गमाद्याः सुरा देवगणाः तेषा देवानामिन्द्रश्च वैधृतनामा ऋषयश्च अरुणादयो भविष्यन्तीति सर्वत्र शेषः। आदिपदेन—'हविष्मान्

विष्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति ॥ जातः स्वांशेन भगवान् गृहे विश्वसृजो विभुः ॥ २३ ॥ मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ॥ अनागतास्तत्सुताश्च सत्यधर्मादयो दश ॥ २४ ॥ विहङ्गमा कामगमा निर्वाणरुचयः सुराः ॥ इन्द्रश्च वैधृतस्तेषामृषयश्चारुणादयः ॥ २५ ॥ आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः ॥ वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥ २६॥ भविता रुद्रसावर्णी राजन् द्वादशमो मनुः॥ देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २७ ॥ ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः ॥ ऋषयश्च तपोमूर्तिस्तपस्व्याग्नीध्रकादयः ॥ २८ ॥

काश्यपश्चापि वपुष्मान् यश्च भार्गवः ॥ अरुणश्च तथाऽऽत्रेयो वासिष्ठस्त्वनघस्तथा। अङ्गिराश्चोरुधिष्ण्यश्च पौलस्त्यो निश्चरस्तथा॥ पौलहश्चाग्नितेजाश्च भाव्याः सप्त महर्षयः' इति हरिवंशे उक्ता इतोऽवशिष्टा ज्ञेयाः ॥ २५ ॥ तत्र तस्मिन्नपि मन्वन्तरे आर्यकस्य पितुः सुतो वैधृताया मातरि प्रादुर्भूतो हरेरंशो भगवदवताररूपो धर्मसेतुरिति नाम्ना स्मृतो जनैः कथितस्त्रिलोकीं भूरादिलोकत्रयं धारयिष्यति पोषयिष्यतीत्यन्वयः॥ २६ ॥ हे राजन् रुद्रसावर्णिर्द्वादशमो मनुर्भविता भविष्यति। देववानादयस्तस्य सुता भविष्यन्ति ॥ २७ ॥ तत्र तस्मिन् मन्वन्तरे च ऋतधामा इन्द्रो भविष्यति। हरितादयश्च देवा भविष्यन्ति। तपोमूर्त्यादयश्च सप्तर्षयो भविष्यन्ति। अत्राप्यादिपदेन—'द्युतिर्वसिष्ठपुत्रश्च आत्रेयः सुतपास्तथा॥ अङ्गिरास्तपसो मूर्तिस्तपस्वी काश्यपस्तथा॥ तपोधनश्च पौलस्त्यः पौलहश्च तपोरतिः ॥ भार्गवः सप्तमस्तेषा विज्ञेयस्तु तपोधृतिः।' इति हरिवंशोक्तेष्ववशिष्टा ज्ञेयाः ॥ २८ ॥

स्वधामाख्यो हरेरंशो भगवतोऽवतारस्तस्य मनोरन्तरं मन्वन्तरं साधयिष्यति मन्वादीन् पालयिष्यतीत्यर्थः । कुतः प्रादुर्भूत इत्यपेक्षायामाह—सत्यसहसः पितु. सूनृताया मातुश्च सुतः सन्। पालने सामर्थ्यमाह—विभुरिति, यतः समर्थ इत्यर्थः ॥ २९ ॥ देवसावर्णिस्त्रयोदशो मनुर्भाव्यो भविष्यति । चित्रसेनादयो देवसावर्णेर्देहजाः पुत्रा भविष्यन्ति ॥ ३० ॥ तदा तन्मन्वन्तरोपलक्षितकाले सुकर्मादिसञ्ज्ञका देवा भविष्यन्ति । दिवस्पतिनामक इन्द्रो भविष्यति । निर्मोकादयः सप्तर्षयो भविष्यन्ति । अत्राप्यादिपदेन—' निर्मोकस्तत्त्वदर्शी च निष्कम्पश्च निरुत्सुकः ॥ धृतिमानव्ययश्चान्यः सप्तमः सुतपा मुनिः ' इत्यत्रोक्ता अवशिष्टा ज्ञेयाः ॥ ३१ ॥ बृहत्या मातर्यवतीर्णो देवहोत्रस्य तनयो योगेश्वराख्यो हरेरंशो भगवदवतारो दिवस्पतेरिन्द्रस्योपहर्ता त्रिलोकीराज्यसम्पादकः सम्भविष्यतीत्यन्वयः ॥ ३२ ॥ वै वाक्यालङ्कारे । इन्द्रसावर्णिश्चतुर्दशमश्चतुर्दशो मनुरेष्यति

स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ॥ अन्तरं सत्यसहसः सूनृतायाः सुतो विभुः ॥ २९ ॥ मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ॥ चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३० ॥ देवाः सुकर्मसुत्रामसञ्ज्ञा इन्द्रो दिवस्पतिः ॥ निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा ॥ ३१ ॥ देवहोत्रस्य तनय उपहर्ता दिवस्पतेः ॥ योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥ ३२ ॥ मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति ॥ उरुगम्भीरबुद्ध्याद्या इन्द्रसावर्णिवीर्यजाः ॥ ३३ ॥ पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ॥ अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विन[१] ॥ ३४ ॥ सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ॥ वितानायां महाराज क्रियातन्तून्वितायिता ॥ ३५ ॥ राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते ॥ प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः[२] ॥ ३६ ॥ इति श्रीमद्भा० म० अष्टमस्कन्धे सम्पत्सु सर्वदानप्रकरणे मन्वन्तरनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ६७ ॥ ॥

आगमिष्यति, भविष्यतीत्यर्थः । उरुगम्भीरबुद्ध्याद्याः तस्येन्द्रसावर्णेर्वीर्यजाः पुत्रा भविष्यन्ति ॥ ३३ ॥ पवित्रादयस्तत्र देवा भविष्यन्ति । शुचिसञ्ज्ञक इन्द्रो भविष्यति । अग्निबाह्वादयस्तपस्विनः सप्तर्षयो भविष्यन्ति । आदिपदेन—' आग्नीध्रः काश्यपश्चैव पौलस्त्यो मागधस्तथा । भार्गवोऽग्निः सुबाहुश्च शुचिराङ्गिरसस्तथा ॥ मुक्तश्चैव तथाऽऽत्रेयः शुद्धो वासिष्ठ एव च ॥ अजितः पौलहश्चैव अन्त्याः सप्तर्षयश्च ते ' इति हरिवंशोक्तेष्ववशिष्टा ज्ञेयाः ॥ ३४ ॥ हे महाराज तदा तस्मिन्मन्वन्तरे वितानाया मातरि प्रादुर्भूतः सत्रायणस्य पितुस्तनयः सन् बृहद्भानुसञ्ज्ञको हरिः क्रियातन्तून् कर्मसन्ततीर्वितायिता विस्तारयिष्यतीत्यन्वयः ॥ ३५ ॥ मन्वन्तरवर्णन समापयति— राजन्निति सम्बोधनं तस्मिन् स्वानुग्रहसूचनार्थम् । हे राजन्

१ तदिति पृथक्पदं सुबोधिन्या तत्र तत् मनोरन्तरमित्यर्थः । २ एतदग्रे ' चतुर्दशमनूना च कथा य कीर्त्तयेन्नर ॥ शृणुयाद्वापि राजेन्द्र तस्य विष्णु प्रसीदति ' इत्यय श्लोकोऽस्ति कुत्रचित् ।

त्रिषु भूतभविष्यद्वर्तमानेषु कालेष्वनुगतानि वर्तमानान्येतानि चतुर्दश मन्वन्तराणि ते तुभ्यं मया प्रकर्षेण प्रेमपूर्वकमुक्तानि। तत्कथनप्रयोजनमाह— एभिरेति । एभिश्चतुर्दशभिर्मन्वन्तरैर्युगसाहस्रेण पर्ययः परिवर्तो यस्य ब्रह्मदिवसात्मकस्य सङ्कल्पो मित इत्यन्वयः ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्कन्धे दाननिरूपणे। त्रयोदशो गतो वृत्तिं मन्वन्तरनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ भगवद्वशवर्तित्वं दर्शयंस्तु चतुर्दशे ॥ मन्वादीना पृथक्कर्म सङ्क्षेपेण निरूप्यते ॥ १ ॥ ॥ भगवदवतारचरितकथनपूर्वक चतुर्दशमन्वन्तरनिरूपणेन स्वस्मिन् श्रीशुकानुग्रहं ज्ञात्वा मन्वादीनां पृथक्कर्माणि पृच्छति— मन्वन्तरेष्विति। न जानामीति त्वया न वक्तव्यं सर्वज्ञत्वादित्यभिप्रायेण सम्बोधयति— हे भगवन्निति। इमे तु पूर्ववर्णिता मन्वादयः स्वस्वमन्वन्तरेषु यस्मिन् कर्मणि येन ये यथा नियुक्तास्तन्मे वदस्वेत्यन्वयः ॥ १ ॥ एवं पृष्टः पूर्वं 'येन नियुक्ताः' इत्यस्योत्तरमाह—

**राजोवाच ॥ मन्वन्तरेषु भगवन् यथा मन्वादयस्त्विमे ॥ यस्मिन् कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥ १ ॥ ऋषिरुवाच ॥ मनवो मनुपुत्राश्च मुनयश्च महीपते ॥ इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥ यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ॥ मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥ ३ ॥ चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान् यथा ॥ तपसा ऋषयोऽपश्यन् यतो धर्मः सनातनः ॥ ४ ॥**

मनव इति। हे महीपते मन्वादयः सर्वे पुरुषशासना एवेत्यन्वयः। पुरुषेण भगवता यज्ञावतारैः शिष्यन्ते तत्तत्कर्मसु नियुज्यन्ते इति तथाभूता एवेत्यर्थः। सम्बोधनं प्रकृतयो यथा भगवता तत्तत्कर्मसु नियुक्ता भवन्ति तथेति सूचनार्थम् ॥ २ ॥ उक्तमेव स्पष्टयति— यज्ञादय इति। हे नृप या यज्ञादयः पौरुष्यः पुरुषस्य भगवतस्तनवोऽवतारमूर्तयो मया पूर्वं कथिता आभिर्मूर्तिभिः प्रचोदिताः प्रेरिताः सन्तो मन्वादयो जगतो यात्रां नयन्ति निर्वाहं कुर्वन्ति, जगतः स्थित्यर्थं तत्तत्कर्माणि कुर्वन्तीत्यर्थः ॥ ३ ॥ तेषां पृथक्कर्माण्येव दर्शयति— चतुर्युगान्त इति चतुर्भिः। कालेन ग्रस्तान् विलोपितान् श्रुतिगणान् चतुर्युगस्यान्ते कृतयुगप्रवृत्तिसमये तपसा स्वतपोबलेन ऋषयो यथा यथावत् अपश्यन् दृष्ट्वा धर्मप्रचारार्थं लोके वर्णयन्तीत्यर्थः। ततः किमित्यपेक्षायामाह— यत इति। यतो येभ्यो वर्णितेभ्यः श्रुतिगणेभ्यः पुनः सनातनो धर्मः प्रवर्तते इत्यर्थः ॥ ४ ॥

तत ऋष्युपदेशानन्तरं हरिणा उदिताः अन्तर्यामिणा प्रेरिता मनवः स्वस्वे काले चतुष्पादं धर्मं महीं सञ्चारयन्ति मह्यां प्रवर्तयन्तीत्यन्वयः। ननु विषयासक्तौ सत्यां कथं धर्मप्रवर्तनं सम्भवतीत्याशङ्क्याह– युक्ता इति, संयतान्तःकरणा इत्यर्थः। ननूपदेशेन ऋषीणामेव धर्मप्रवर्तकत्वं प्रसिद्धं मनवः सञ्चारयन्तीति कथमुच्यते इत्याशङ्क्याह– अद्धेति। बलात्कारेण साक्षात्प्रवर्तकत्वं मनूनामेवेति भावः। तत्र हेतुमाह– नृपेति। नृपतित्वेन तत्राधिकारादिति भावः॥ ५॥ विभागशः पुत्रपौत्रादिक्रमेण प्रजापाला मनुपुत्राः यत्र मन्वन्तरे ये च देवा अनुकीर्तितास्ते च प्रजाधर्मं च यावदन्तं मन्वन्तरावसानपर्यन्तं पालयन्तीत्यन्वयः। देवानां तत्पालने हेतुमाह– यज्ञभागभुज इति। यज्ञभागभोक्तॄणा प्रजादिपालनाकरणे कृतघ्नताऽग्रे स्वभागहानिश्च स्यादिति भावः॥ ६॥ इन्द्रश्च त्रीन् लोकान् पातीत्यन्वयः। कथमित्यपेक्षायामाह– कामं यथेष्टं लोके जलं प्रवर्षतीति। पालने भगवदाज्ञैव हेतुरिति सूचयन्नाह– भगवता दत्तामतएव ऊर्जिता महतीं त्रैलोक्यसम्बन्धिनीं श्रियं भुञ्जान इति। अन्यथा भगवत्कोपेन तद्भोगभङ्गः

ततो धर्मं चतुष्पादं मनवो हरिणोदिताः॥ युक्ताः सञ्चारयन्त्यद्धा स्वेस्वे काले महीं नृप॥ ५॥ पालयन्ति प्रजापाला यावदन्तं विभागशः॥ यज्ञभागभुजो देवा ये च तत्रान्विताश्च तैः॥ ६॥ इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम्॥ भुञ्जानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति॥ ७॥ ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक्॥ ऋषिरूपधरः कर्मयोगं योगेशरूपधृक्॥ ८॥ सर्गं प्रजेशरूपेण दस्यून् हन्यात् स्वराड्वपुः॥ कालरूपेण सर्वेषामभावाय पृथग्गुणः॥ ९॥ स्तूयमानो जनैरेभिर्मायया नामरूपया॥ विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते॥ १०॥

स्यादिति भावः॥ ७॥ प्रसङ्गाद्रूपान्तरैरपि भगवत एव जगद्यात्राप्रवर्तकत्वमाह– ज्ञानमिति द्वयेन। सिद्धाः सनकादयस्तत्स्वरूपधृग्घरिरेव अनुयुगं तत्तदवसरे ज्ञानं ब्रूते इत्यन्वयः। प्रजेशा मरीच्यादयस्तेन रूपेण हरिरेव सर्गं करोति। स्वराड्वपुः राजमूर्तिः सन् हरिरेवानुयुगं दस्यून् चोरान् हन्यात् हन्ति। कालरूपेण हरिरेव सर्वेषा पदार्थानामभावाय विनाशाय भवति। ननु सर्वपालकस्य कथं सर्वविनाशकत्वमित्याशङ्क्याह– पृथग्गुण इति। तस्यैव रजसोत्पादकत्व सत्त्वेन पालकत्व तमसा च विनाशकत्वमिति गुणभेदेन कार्यभेदसम्भवान्न कोऽपि विरोध इति भावः॥ ८॥ ॥ ९॥ यः स्वतन्त्रो भगवानेतत्सर्वं करोति स वस्तुतः कथम्भूत इत्यपेक्षाया दुर्ज्ञेयत्वादिदमित्थतया वक्तुमशक्य एवेत्याह– स्तूयमान इति। नामरूपात्मिकतया मायया विमोहितात्मभिर्भ्रमितान्तःकरणैरेभिः शास्त्रज्ञत्वेन प्रसिद्धैर्जनैर्नानादर्शनैः शास्त्रैः स्तूयमानो निरूप्यमाणोऽपि भगवान्नैव दृश्यते इदमित्थतया निश्चेतुं नैव शक्यते इत्यर्थः॥ १०॥

एवं प्रासङ्गिकं निरूप्य प्रस्तुतमेवोपसंहरति— एतदिति । एतत्कल्पविकल्पस्य कल्पे चतुर्मुखायुःपर्यन्ते मध्ये यो विकल्पः अवान्तरकल्पस्तदेकदिवसात्मकः तस्य प्रमाणं मया परिकीर्तितम् । यत्र यस्मिन्नवान्तरकल्पे चतुर्दश मन्वन्तराणि भवन्तीति पुराविदो वृद्धा आहुः ॥ ११ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र सर्वदाननिरूपणे ॥ चतुर्दशो गतो वृत्तिं मन्वादिकर्मरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ एवं दशभिरध्यायैः सर्वदानं निरूपितम् ॥ स्वोक्तनिर्वाहधर्मं तु नवभिः प्रोच्यतेऽधुना ॥ १ ॥ तत्र पञ्चदशे चात्र ब्राह्मणाना प्रसादतः ॥ बलेर्दानादिकर्तुस्तु सामर्थ्यं विनिरूप्यते ॥२॥ ॥ नचात्रापि दानस्य प्रतिपादनात् कथ प्रकरणभेद इति शङ्कनीयं पूर्वप्रकरणे सम्पदि यथाशक्यं कथञ्चिद्दानं कर्तव्यम्, आपदि त्वशक्यत्वात् तन्न कर्तव्यमिति दान मुख्यतया प्रतिपादितम्, अत्र तु सयतचित्तस्य सत्यपरस्य कदापि तत्तदशक्यमिति दानस्य गौणत्वं स्वोक्तनिर्वाहस्य

एतत्कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ॥ यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः ॥ ११ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे सम्पत्सु सर्वदानप्रकरणे मन्वादिकर्मनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥

राजोवाच ॥ बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ॥ भूत्वेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥ एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः ॥ यज्ञेश्वरस्य पूर्णस्य बन्धनं चाप्यनागसः ॥ २ ॥

मुख्यत्वं च प्रतिपाद्यते इति प्रतिपाद्यभेदात् प्रकरणभेदो ज्ञेयः । तत्पश्चाद्वक्ष्याम इति श्रीशुकेन प्रतिज्ञातत्वात् स्वस्य भगवद्भक्तत्वेन तच्चरितश्रवणे उत्सुकत्वादत्र मन्वन्तरकथायां तदुपयोगाच्च सङ्क्षेपतः श्रुतमपि बलिबन्धनादिभगवच्चरितं पुनर्विस्तारेण श्रोतुं पृच्छति— बलेरिति । हरिः स्वयमेवेश्वरो भूत्वा कृपणवद्बलेः सकाशाद्भूमेः पदत्रयं कस्माद्धेतोरयाचत त्रैलोक्यग्रहणेन लब्धार्थोऽपि सन् कस्माद्धेतोस्तं बलिं बबन्ध इत्यन्वयः ॥ १ ॥ एतत्कृपणवत् याचने तद्बन्धने च कारणमुभयं सर्वं वेदितुमिच्छामः, हि यस्मान्नोऽस्माकं महत्कौतूहलं महदाश्चर्यं वर्तते । यज्ञेश्वरस्य यज्ञादिकर्मफलदातुः पूर्णस्य परमानन्दस्वरूपलाभेनैव पूर्णकामस्यानागसो देहादिसमर्पणेन निरपराधस्य बलेर्बन्धन-अपिशब्दात्कृपणवद्याचन च-यस्मान्न घटते इति शेषेणान्वयः ॥ २ ॥



१ एतदग्रे 'प्रथमा प्रक्रिया पूर्णा सर्वदाननिरूपिका ॥ स्वोक्तनिर्वाहिका चातो नवभिर्विनिरूप्यते ॥१॥' इत्ययमधिक श्लोक कुत्रचित् । २ लब्धार्थो भूत्वा त बलिं कस्माद्बबन्धेति सुबोधिन्याम्

तत्र तावन्मन्वन्तराधिकारिणः त्रैलोक्यैश्वर्यभोक्तुरिन्द्रस्य विद्यमानत्वे मन्वन्तरासमाप्तौ तन्मध्ये बलात्तत्स्थानस्वर्गस्वीकारस्य अनुचितत्वेऽपि बलेः परमधर्मिष्ठत्वेन स्वभक्तत्वेन च बलात्ततश्चालनमनुचितं मत्वा ततश्चालयितुं तद्यशो विस्तारयितुं च याच्ञादि कृतवानिति वक्तुं ब्राह्मणाराधनप्रभावतो बलेरकाण्ड एव स्वर्गविजयक्रममाह— पराजितश्रीरित्यादिना यावदध्यायसमाप्ति । युद्धे पराजिता श्रीर्येन सः इन्द्रेण असुभिः प्राणैश्च हापितः त्याजितो मूर्छा प्रापितः सन् हि यस्मात् भृगुभिर्भृगुवंश्यैः शुक्रादिभिः स बलिः पुनर्जीवितः तस्मात् सर्वात्मना एतद्भजनप्रभावेणैव मम ऐश्वर्यादिसम्पत्तिर्भविष्यति नान्यथेति दृढविश्वासेन अर्थनिवेदनेन तदपेक्षिततत्तत्पदार्थानां समर्पणेन च तान् भृगून् अभजादित्यन्वयः। तेषा तज्जीवनार्थप्रयत्ने हेतुं सूचयन्नाह— शिष्य इति । एवं तैर्जीवितोऽपि लुब्धश्चेत्कथं तद्धेर्थसमर्पणं सम्भवतीति शङ्कानिरासायाह— महात्मेति, उदारचित्त इत्यर्थः । राजत्वाद्युद्धे भवताऽप्येवं बहुशोऽनुभूतं स्यादिति सूचनार्थं सम्बोधनं हे राजन्निति॥ ३ ॥ त्रिणाकं स्वर्गं जिगीषमाणं जेतुमिच्छन्तं त बलिं भृगवो भृगुवंश्या

**श्रीशुक उवाच ॥ पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन् भृगुभिः स जीवितः ॥ सर्वात्मना तानभजद्भृगून् बलिः शिष्यो महात्माऽर्थनिवेदनेन ॥ ३ ॥ तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन् विश्वजिता त्रिणाकम् ॥ जिगीषमाणं विधिनाऽभिषिच्य महाभिषेकेण महानुभावाः ॥ ४ ॥ ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः ॥ ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ॥ ५ ॥ धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ॥ पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥ ६ ॥**

ब्राह्मणा महाभिषेकेण ऐन्द्रेण बह्वृचब्राह्मणप्रसिद्धेन विधिना प्रकारेण आभिषिच्य विश्वजिता विश्वजित्सञ्ज्ञकयागेन अयाजयन्नित्यन्वयः। तेषां तद्याजने हेतुमाह— धनाद्यर्पणेन प्रीयमाणाः प्रीतियुक्ता इति । ननु प्रीत्या तैर्याजनेऽपि कथमभीष्टसिद्धिरिति शङ्कानिरासार्थमाह— महानुभावा इति, अमितप्रभावा इत्यर्थः ॥ ४ ॥ ततो हविर्भिरिष्टात् पूजितात् हुताशनात् अग्नेः सकाशात् काञ्चनेन पट्टेन वस्त्रेण नद्धः आच्छादितो रथः आस विनिस्सृतः, हर्यश्वस्येन्द्रस्य ये तुरङ्गास्तेषामिव हरितो वर्णो येषां ते तथाभूता हयाश्च विनिस्सृताः, सिंहेन चिह्नेन विराजमानो ध्वजश्च विनिस्सृत इत्यन्वयः॥ ५ ॥ पुरटेन सुवर्णेनोपनद्धं निबद्धमतएव दिव्यमलौकिकं धनुश्च निस्सृतम्, अरिक्तौ अक्षयशरौ तूणौ इषुधी विनिस्सृतौ, दिव्यं कवचं च विनिस्सृतमिति पूर्वमेव[2] क्रियासम्बन्धः। पितामहः प्रह्लादः अम्लानपुष्पां सदैव समवर्णपुष्पग्रथितां मालां च तस्य ददौ, शुक्रः शुक्राचार्यश्च तस्य जलजं शङ्खं ददावित्यन्वयः॥६॥

---

१ ' इन्द्रिय वा एतदस्मिँल्लोके ' इत्यनेनानुवाकेनेत्यर्थ । २ हुताशनात् ( एव ) आसेत्यर्थ ।

एवं विप्रैरर्जितः सम्पादितो योधनार्थो युद्धपरिकरो यस्य स बलिः तैरेव कल्पितं स्वस्त्ययनं मङ्गलवाचनादि यस्य सः अथानन्तरं विप्रान् प्रदक्षिणीकृत्य कृतप्रणामः सन् प्रह्लादमामन्त्र्य पृष्ट्वा नमश्चकार नमस्कारं कृतवान् ॥ ७ ॥ अथानन्तरं दिव्यं रथमारुह्य रथमारूढश्च रराजेति द्वयोरन्वयः। रथस्य दिव्यत्वे हेतुमाह– भृगुदत्तमिति । भृगुवंश्यैः शुक्रादिभिर्विप्रैर्दत्तं यज्ञेन सम्पादितमित्यर्थः। तस्य विराजमानत्वे दृष्टान्तमाह– धिष्ण्यस्थ इति, कुण्डस्थो हव्यवाट् आहवनीयोऽग्निर्यथा राजते तथेत्यर्थः। तत्र हेतुत्वेन तं विशिनष्टि– महारथः योद्धृसहस्रेण सह युद्धकर्ता। सुस्रग्धरः शोभनमालाधरः। धन्वी धनुर्धरः। खड्गी खड्गधरः। धृत इषुधिर्येन सः। हेमरचिताङ्गदाभ्यां लसन्तौ बाहू यस्य सः। स्फुरती मकराकारे कुण्डले यस्य सः॥ ८ ॥ ९ ॥ तुल्यमैश्वर्यं प्रभावो बलं च श्रीश्च सम्पद्येषां तैर्मुखेन खमाकाशं पिबद्भिरिव दृग्भिर्नेत्रैः परिधीन् दिशो दहद्भिरिव दैत्ययूथपैः स्वयूथैर्वृत इत्युत्त-

**एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् ॥ प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥ अथारुह्य रथं दिव्यं भृगुदत्तं महारथः ॥ सुस्रग्धरोऽथ सन्नह्य धन्वी खड्गी धृतेषुधिः ॥ ८ ॥ हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः ॥ रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥ ९ ॥ तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव ॥ १० ॥ वृतो विकर्षन् महतीमासुरीं ध्वजिनीं विभुः ॥ ययाविन्द्रपुरीं स्वृद्धां कम्पयन्निव रोदसी ॥ ११ ॥ रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः ॥ कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ॥ १२ ॥**

रेणान्वयः ॥ १० ॥ विभुः विजयसमर्थो बलिः महतीमासुरीं ध्वजिनीं सेनां विकर्षन् रोदसी द्यावाभूमी कम्पयन्निव स्वृद्धा अतिसमृद्धामिन्द्रपुरीं ययावित्यन्वयः ॥ ११ ॥ अतिप्रयासेन सम्पादिता अतिसमृद्धा अपि भोगपदार्थाः क्षयान्तत्वेन दुःखदा एवातस्तदभिलाषं विहाय परमानन्दलाभाय सन्तोषं प्रगृह्य भगवदेकशरणपरत्वेन भवितव्यमित्याशयेन वैराग्यार्थं इन्द्रपुरीमनुवर्णयति– रम्यामिति सार्धैरेकादशभिः । उपवनानि फलप्रधानानि निकटानि वा, उद्यानानि पुष्पप्रधानानि दूरस्थानि वा विहारस्थानानि तैः। कूजन्ति विहङ्गानां मिथुनानि येषु तथा गायन्तो मत्ता मधुव्रता भ्रमरा येषु तैः। तथा प्रवालादीनामुरुर्भारो यासु ताः शाखा येषां ते अमरद्रुमा देववृक्षाः पारिजातादयो येषु तैः। श्रीमद्भिः शोभातिशयवद्भिः नन्दनादिभिरुपवनोद्यानैः रम्यामिति सार्द्धस्यान्वयः ॥ १२ ॥

१ होमार्हो यज्ञाग्निविशेष । गार्हपत्याग्नेरुद्धृत्य योऽग्नि संस्क्रियते स इत्यर्थ ।

हंसादिपक्षिविशेषाणा कुलैः समूहैराकुला व्याप्ता नालिन्यः सरासि यत्र येषु सन्ति तैरुपवनोद्यानै रम्यामिति पूर्वेणैवान्वयः । यत्र यासु नलिनीषु सुरसेविता देवभोग्याः प्रमदा उत्तमास्त्रियः क्रीडन्ति ॥ १३ ॥ किञ्च परिखाभूतया आकाशगङ्गया वृताम्। गङ्गाया अपि दुर्लभत्वं सूचयंस्तां विशिनष्टि- देव्येति, देवदेवस्य भगवतश्चरणारविन्दसम्बन्धेन सर्वदेवपूज्ययेत्यर्थः। अट्टालास्तत्र तत्र प्राकारोपरि रचितान्युन्नतानि युद्धस्थानानि तत्स- हितेनोन्नतेन मणिसुवर्णादिभिरचितत्वादग्निवर्णेन अग्निवत्प्रकाशमानेन प्राकारेण च वृतामित्यन्वयः ॥ १४ ॥ रुक्मपट्टानि कपाटानि येषु तै- र्द्वारैरवान्तरैः स्फटिकमयैर्गोपुरैः पुरद्वारैश्च जुष्टां युक्ताम् । विभक्ताः प्रपथा राजमार्गा यस्यास्ताम् । एवमतिरम्यत्वे तत्कर्तृश्रेष्ठत्वं हेतु सूचयन्नाह— विश्वेति । अतिनिपुणेन विश्वकर्मणा देवशिल्पिना विशेषेण श्रेष्ठत्वेन निर्मितामित्यर्थः ॥ १५ ॥ सभा उपवेशनस्थानानि चत्वराण्यङ्गणानि रथ्या

हंससारसचक्राह्वकारण्डवकुलाकुलाः ॥ नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः ॥ १३ ॥ आकाशगङ्गया देव्या
वृतां परिधिभूतया ॥ प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ॥ १४ ॥ रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ॥ जुष्टां
विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ॥ १५ ॥ सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ॥ शृङ्गाटकैर्मणिमयैर्वज्रविद्रुम-
वेदिभिः ॥ १६ ॥ यत्र नित्यवयोरूपाः श्यामा विरजवाससः ॥ भ्राजन्ते रूपवन्नार्यो अर्चिर्भिरिव वह्नयः ॥ १७ ॥
सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् ॥ यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥ १८ ॥

उपमार्गाः तैराढ्यां सम्पन्नाम्, न्यर्बुदं दशकोटयस्तावत्सङ्ख्याकैरनन्तैर्विमानैर्वा युताम्, वज्रविद्रुममय्यो वेदयो येषु तैर्मणिमयैः शृङ्गाटकैश्चतुष्पथैश्च युतामित्यन्वयः ॥ १६ ॥ नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं यासां ताः श्यामाः[3] 'शीतकाले भवन्त्युष्णा उष्णकाले सुशीतलाः ॥ स्तनौ सुकठिनौ यासां ताः श्यामाः परिकीर्तिताः' इत्युक्तलक्षणाः, विरजे शुद्धे वाससी यासां ताः रूपवन्नार्यः स्वलङ्कृताः स्त्रियो यत्र यस्यां पुर्यां भ्राजन्ते । तत्र दृष्टान्तमाह— अर्चिर्भिर्ज्वालाभिर्यथा वह्नयो भ्राजन्ते तथाऽलङ्कारैः स्त्रियो भ्राजन्ते इत्यर्थः ॥ १७ ॥ यत्र यस्या पुर्यां मारुतः सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगन्धिकस्रजां नवस्थलचम्पकविरचितमालानामामोदं परिमलमादाय मार्ग आवातीत्यन्वयः ॥ १८ ॥

---

१ 'परिखभूतया' इति पाठान्तरं श्रीधरीयम् । तत्र परिखाशब्दस्य ह्रस्वत्वमार्षम् । २ नार्य अर्चिभिरिति सन्धिरार्ष । ३ षोडशवार्षिक्यः अप्रसूताङ्गना वेति केचित् ।

हेमरचिता ये जालाक्षा गवाक्षास्तेभ्यो निर्गच्छता धूमेन प्रतिच्छन्ने मार्गे यत्र सुरप्रियाः अप्सरसो यान्तीत्यन्वयः । ननु धूमस्य दोषरूपत्वात् तत्प्रतिच्छन्नत्वेन मार्गोऽपि दूषित एव स्यात्तेन तस्याः किं रम्यत्वमित्याशङ्क्य धूमं विशिनष्टि— अगुरुगन्धिनेति । तस्य शोभातिशयमाह— पाण्डुरेणेति, श्वेतवर्णेनेत्यर्थः ॥ १९ ॥ मुक्तामयैर्वितानैः मणिहेममयैः केतुभिर्ध्वजैश्च नानाविधपताकायुक्ताभिर्वलभीभिर्गृहपुरोभागे उपरिरचितैरुपवेशनस्थानविशेषैश्च आवृतां व्याप्ताम् । शिखण्ड्यादिपक्षिविशेषैर्नादिता शब्दिताम् । वैमानिकस्त्रीणा कलगीतैर्मधुरगीतैर्मङ्गलं श्रवणसुखं यस्यां ताम् ॥ २० ॥ मृदङ्गादीना स्वनैः शब्दैः सतालवीणादिमिश्च सवाद्यैर्नृत्यैश्च उपदेवा गन्धर्वादयस्तेषा गीतकैश्च मनोरमाम् । स्वप्रभया जिता तिरस्कृता अन्येषा सूर्यादीना प्रभा यया ताम् । जितग्रहामिति पाठे तु जिता ग्रहाः सूर्यादयो यया तामित्यर्थः ॥ २१ ॥ या पुरीमधर्मिष्ठादयो न व्रजन्ति, यत् यां च एभिरधर्मादि-

**हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना ॥ पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरप्रियाः ॥१९॥ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ॥ शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम् ॥ २० ॥ मृदङ्गशङ्खानकदुन्दुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ॥ नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितप्रभाम्[1] ॥ २१ ॥ यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः ॥ मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्ति यत् ॥ २२ ॥ तां देवधानीं स वरूथिनीपतिर्बहिस्समन्ताद्रुरुधे पृतन्यया ॥ आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन् भयमिन्द्रयोषिताम् ॥ २३ ॥ मघवांस्तमभिप्रेत्य बलेः परममुद्यमम् ॥ सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥ २४ ॥**

दोषैर्हीना व्रजन्ति । अधर्मिष्ठाः पापिनः । खलाः स्वरूपतः स्वभावतश्च भयङ्कराः । भूतद्रुहः प्राणिपीडाकर्तारः । शठा वञ्चकाः । मानिनः अहं कर्ताऽहं भोक्ता कोऽन्योऽस्ति सदृशो मम इत्यभिमानवन्तः । कामिनो विषयासक्ताः । लुब्धा इष्टलाभेऽप्यलम्बुद्धिरहिताः ॥ २२ ॥ ता पूर्ववर्णितामतिसमृद्धां देवधानीं देवानां निवासभूतामिन्द्रपुरीं स वरूथिनीपतिः सेनापतिर्बलिः पृतन्यया पृतनया स्वसेनया बहिस्समन्तात्सर्वतो रुरुधे । इन्द्रस्य योषितां स्त्रीणां भयं प्रयुञ्जन् उत्पादयितुं महान् स्वनो यस्य तमाचार्येण दत्त जलजं शङ्खं दध्मौ वादितवानित्यन्वयः ॥ २३ ॥ तद्बलेः परममुद्यमं मघवान् इन्द्रः अभिप्रेत्य ज्ञात्वा सर्वदेवगणेनोपेतः सहितो ह स्फुट यथा स्यात्तथा गुरुं बृहस्पतिं प्रति एतद्वक्ष्यमाणमुवाचेत्यन्वयः ॥ २४ ॥

१ 'स्वप्रभया जितग्रहाम्' इति पाठान्तरम् ।

तद्वाक्यमेव व्याचष्टे— भगवन्निति सार्धत्रयेण । अहं न जानामीति त्वया न वक्तव्यं सर्वज्ञत्वादिति सूचयन् सम्बोधयति— हे भगवन्निति । नोऽस्माकं पूर्ववैरिणो बलेरिदानीं भूयानुद्यमो जातः । अत इममुद्यमं बलिं वाऽहमविषह्यं सोढुमशक्यं मन्ये । स इदानीं तेजसा ऊर्जितो वर्द्धितः केन हेतुना आसीत् ? । न केवलं ममैवायं अविषह्यः, किन्तु कुतोऽप्युपायात् कश्चिदप्येनं प्रतिवोढुमपाकर्तुमधीश्वरः समर्थो न दृश्यते इति शेषेणान्वयः ॥ २५ ॥ असामर्थ्ये तस्य दुर्धर्षत्वं कारणमाह— पिबन्निति । मुखेनेदं विश्वं पिबन्निव दश दिशो लिहन् आस्वादयन्निव दृग्भिर्नेत्रैर्दिशो दहन्निव च संवर्ताग्निः प्रलयाग्निरिवोत्थित इत्यन्वयः ॥ २६ ॥ अतो यत एतस्य ओजआदि जातं यतश्च ओजआदेरेतस्य सम्यक् महानुद्यमो जातस्तदेतस्य मद्रिपोः दुर्धर्षत्वस्य कारणं ब्रूहीत्यन्वयः । ओज इन्द्रियसामर्थ्यम् । सहोऽन्तःकरणसामर्थ्यम् । बलं देहसामर्थ्यम् । तेजः प्रभावः ॥ २७ ॥ हे मघवन् अस्य तव शत्रोरुन्नतेः कारणमहं जानामीत्यन्वयः । किं तदित्यपेक्षायामाह— शिष्यायेति । शिष्याय श्रद्धाभक्त्यातिशयेन स्वसर्वस्वोपहारकाय बलये भृगुभिः

भगवन्नुद्यमो भूयान् बलेर्नः पूर्ववैरिणः ॥ अविषह्यमिमं मन्ये केनासीत्तेजसोर्जितः ॥ नैनं कश्चित्कुतो वाऽपि प्रतिवोढुमधीश्वरः ॥ २५ ॥ पिबन्निव मुखेनेदं लिहन्निव दिशो दश ॥ दहन्निव दिशो दृग्भिः संवर्ताग्निरिवो-
त्थितः ॥ २६ ॥ ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः ॥ ओजः सहो बलं तेजो यत एतत्समुद्यमः ॥ २७ ॥
गुरुरुवाच ॥ जानामि मघवञ्छत्रोरुन्नतेरस्य कारणम् ॥ शिष्यायोपभृतं तेजो भृगुभिर्ब्रह्मवादिभिः ॥ २८ ॥
भवद्विधो भवान् वाऽपि वर्जयित्वेश्वरं हरिम् ॥ नास्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः ॥ २९ ॥
तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम् ॥ यात कालं प्रतीक्षन्तो यतः शत्रोर्विपर्ययः ॥ ३० ॥

भृगुकुलोत्पन्नैः शुक्रादिभिः स्वीयमेव तेज उपभृतं प्रत्युपहारत्वेन दत्तमित्यर्थः । नन्वेवं स्वतेजोदाने कथं तेषा सामर्थ्यमित्याकाङ्क्षायामाह— ब्रह्मवादिभिरिति, परब्रह्मावताररामकृष्णादिचरितकीर्तनश्रवणादितत्परैरित्यर्थः । तथाच भगवद्भजनप्रभावात् तेषा सर्वसामर्थ्यमिति भावः । त्वया तु ऐश्वर्यमत्तेन न तथा मदाराधनं कृतं तथात्वे मयाऽपि त्वयि तेज उपभृतं स्यादिति मघवन्निति सम्बोधनेन सूचितम् ॥ २८ ॥ अतो भवान् भवद्विध ऐश्वर्यादिमानन्यो वा कोऽपि युद्धार्थमस्य पुरः स्थातु न शक्तः न समर्थः । तत्र दृष्टान्तमाह— कृतान्तस्येति । यथा जनाः केऽपि कृतान्तस्य मृत्योः पुरः स्थातुं न शक्नुवन्ति तथेत्यर्थः । तर्ह्ययमपीश्वर एव स्यादित्याशङ्क्याह— वर्जयित्वेश्वरं हरिमिति ॥ २९[1] ॥ तर्हीदानीमस्माभिः किं कर्तव्यमित्यपेक्षायामाह— तस्मादिति । अस्याग्रे स्थातुं सामर्थ्याभावाद्यूयं सर्वे त्रिविष्टप स्वर्गमुत्सृज्य त्यक्त्वा निलयमदर्शनं यात । तर्हि पुनः स्वर्गप्राप्तिः

१ चक्रवर्तिना तु शिष्यायेत्यारभ्य दत्तमित्यर्थ इत्यन्त एवमेव व्याचचक्षे ।

अस्माकं कथं स्यादित्याकाङ्क्षायां केनापि कालेन तदपि भविष्यतीत्याशयेनाह—कालमिति । यतः कालात् युष्माकं शत्रोर्बलेर्विपर्ययः पराभवो भविष्यति त कालं प्रतीक्षन्तो यातेत्यन्वयः ॥ ३० ॥ अत्यूर्जितपराक्रमस्यास्य कदापि पराभवो न सम्भवति तत्कथ कदा वा स्यादित्यपेक्षायामाह—एष इति । एष बलिर्विप्राणां बलेन उदर्कमुत्तरोत्तरमधिकं फलं यस्य तथाविधः, अतएव सम्प्रत्यूर्जितो महान् विक्रमो यस्य सः, तेषामेव विप्राणां अपमानं यदा करिष्यति तदा तेनैव सानुबन्धो दैत्यादिस्वयूथसहितो विनङ्क्ष्यति पराभूतो भविष्यतीत्यर्थः । इदमपीन्द्रसन्तोषार्थं व्यवहारदृष्ट्यैवोक्त, वस्तुतस्तु तत्कृतस्य विप्रावमानस्य भगवद्भक्तानुकूलत्वात् स तस्य महाकीर्तिस्वर्गाधिकसुतलैश्वर्यभोगद्वारपालीकृतविष्णुत्वभाविमन्वन्तरैन्द्रत्वादिहेतुरेव अभूदिति ज्ञेयम् ॥ ३१ ॥ अर्थानुदर्शिना यथावद्विचारनिपुणेन गुरुणा एवं सुमन्त्रितो विचारपूर्वकमुक्तोऽर्थः कार्यं येषा ते गीर्वाणा देवास्त्रिविष्टपं स्वर्गं हित्वा जग्मुः, यत्रकुत्र विचेरुरित्यर्थः।ननु दैत्यानामपि सर्वत्र सञ्चारस्य सत्त्वात् तथाविचरणेऽपि कथ देवाना निर्वाह इत्याशङ्क्याह—

**एष विप्रबलोदर्कः[1] सम्प्रत्यूर्जितविक्रमः ॥ तेषामेवापमानेन सानुबन्धो विनङ्क्ष्यति ॥ ३१ ॥ एवं सुमन्त्रितार्थास्ते गुरुणाऽर्थानुदर्शिना ॥ हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ॥ ३२ ॥ देवेष्वथ निलीनेषु बलिर्वैरोचनः[2] पुरीम् ॥ देवधानीमधिष्ठाय वशं निन्ये जगत्रयम् ॥ ३३ ॥ तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः ॥ शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥ ततस्तदनुभावेन भुवनत्रयविश्रुताम् ॥ कीर्तिं दिक्षु वितन्वानः स रेज उडुराडिव ॥ ३५ ॥**

कामरूपिण इति । यथेष्टरूपधारणे सामर्थ्यादलक्षितरूपेण विचेरुरिति भावः ॥ ३२ ॥ एवं देवेषु निलीनेषु सत्सु अथानन्तरं विरोचनपुत्रो बलिः देवधानीं देवाना निवासरूपा पुरीमधिष्ठाय जगत्त्रयं भूरादिलोकत्रयं वश निन्ये इत्यन्वयः ॥ ३३ ॥ एवं बलात् प्राप्तमिन्द्रपदं स्थिरीकर्तुं भृगवः शुक्रादयो ब्राह्मणा हयमेधानां शतेन तं विश्वजयिनमपि बलिं अयाजयन्नित्यन्वयः । हठेन याजने हेतुमाह— शिष्यमिति । शिष्योऽपि यद्याज्ञोल्लङ्घी स्यात्तदा द्वेष्येवेत्याशङ्क्याह— अनुव्रतामिति, अनुवर्तिनमित्यर्थः । गुरवोऽपि यदि कठिनचित्तास्तदा तथाभूतमपि शिष्यमुपेक्षन्ते इत्यत आह— शिष्यवत्सला इति ॥ ३४ ॥ ततस्तदनन्तरं तदनुभावेन यज्ञानुष्ठानप्रभावेण भुवनत्रये विश्रुतां प्रसिद्धां स्वकीर्तिं दशदिक्षु वितन्वानो विस्तारयन् स बलिरुडुराडिव चन्द्रमा इव रेजे इत्यन्वयः ॥ ३५ ॥

१ ' एषा ' इत्यपि कुत्रचित्पाठान्तरम् । २ ' वैरोचनि ' इत्यपि पाठान्तरम् ।

यथेष्टविषयलाभान्महन्मनो यस्य स आत्मानं कृतकृत्यमिव मन्यमानो द्विजेषु क्षत्रियादिषु देवा देववत्पूज्या ये ब्राह्मणास्तैरुपलम्भितां प्रापिता स्वृद्धा श्रियं च बुभुजे इत्यन्वयः । इवशब्देन वस्तुतः कृतकृत्यो नास्ति भगवद्भजनरहितत्वाद्विषयाणा तुच्छत्वाच्चेति सूचितम् ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्य-गोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ पञ्चदशो गतो वृत्तिं सामर्थ्यविनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ अदित्याः पुत्रनाशादिदुःखे तु विनिरूपिते ॥ कश्यपेन व्रतं प्रोक्तं षोडशे तन्निरूप्यते ॥ १ ॥ ॥ एवं सति बलीन्द्रयोरुभयोरनुग्रहार्थं भगवान् श्रीवामनरूपो जातस्तत्प्रसङ्गमाह— एवमित्यादिना । एवमुक्तप्रकारेण स्वपुत्रेष्विन्द्रादिषु नष्टेषु अदर्शनं गतेषु सत्सु त्रिविष्टपे स्वर्गे च दैत्यैर्हृते सति तदा देवमाता अदितिरनाथवत् रक्षकरहितवत् अतप्यदित्यन्वयः । वस्तुतस्तु रक्षकस्य कश्यपस्य पत्युर्भगवतश्च सत्त्वाद्वतिप्रयोगः ॥ १ ॥ एकदा तस्या आश्रमं कश्यपः अगादित्यन्वयः । स्वर्गे

**बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलम्भिताम् ॥ कृतकृत्यमिवाऽऽत्मानं मन्यमानो महामनाः॥ ३६ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे सामर्थ्यनिरूपणं नाम पञ्चदशोऽध्यायः॥ १५॥ ॥ ७ ॥ ॥ श्रीशुक उवाच॥ एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा ॥ हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥ एकदा कश्यपस्तस्या आश्रमं भगवानगात् ॥ निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥ स पत्नीं दीनवदनां कृतासनपरिग्रहः ॥ सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥ अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनाऽऽगतम् ॥ न धर्मस्य न लोकस्य मृत्यो-श्छन्दानुवर्तिनः ॥ ४ ॥**

हृते साऽपि कुत्रचिदन्यत्रैवास्तीति सूचयन्नाश्रमं विशिनष्टि— निरुत्सवमिति । इन्द्रादयः पुत्रास्ततोऽप्यन्यत्रैव सन्तीति सूचयन्नाह— निरानन्दमिति । कश्यपस्तदा कुत्र गत आसीदित्याकाङ्क्षायामाह— समाधेः सकाशाच्चिराद्विरतो निवृत्त इति । तदागमनेऽपि किं स्यादिति शङ्कानिरासायाह— भगवानिति । भगवदुपासकत्वेन सर्वोपायज्ञः सर्वं कर्तुं समर्थश्चेत्यर्थः ॥ २ ॥ यथान्यायं देशकालाद्यनुसारेण यथायोग्य सभाजितः अदित्या पूजितः कृतः आसनस्य परिग्रहः स्वीकारो येन स कश्यपो दीनवदना शुष्कवदना पत्नीं अदितिमिदं वक्ष्यमाणमाहेत्यन्वयः । हे कुरूद्वह इति सम्बोधनं त्वं महाकुले उत्पन्नोऽस्यतो मद्वचने विश्वासस्त्वया कार्य इति सूचनार्थम् ॥ ३ ॥ तत्र दीनवदनत्वादिकमालक्ष्य तत्र कारणं बहुधा विकल्पयन् पृच्छति— अप्यभद्रमिति सप्तभिः । पूर्वं तु तव वदनमेवं दीनं नाभूदिति सूचयन् सम्बोधयति—हे भद्रे इति । अपीति प्रश्ने।

अपि किमधुना लोके विप्राणामभद्रमापत्तिस्तु नागतम् । तदभद्रे किं स्यादित्यपेक्षायां धर्माचरणस्य विप्रोपदेशपूर्वकत्वात् तदभद्रे धर्महानिः स्यादिति सूचयन् पृच्छति— न धर्मस्येति । धर्मस्याभद्रं तु नागतमित्यन्वयः । भवतु धर्महानिस्ततोऽपि किं स्यादित्याकाङ्क्षायां धर्मविनाशे प्राणिविनाश एव भवतीति सूचयन्नाह— न लोकस्येति । मृत्योश्छन्दमिच्छामनुवर्तते इति तथाभूतस्य लोकस्याभद्रं विनाशस्त्वधुना नागतं किम्, इत्यन्वयः ॥ ४ ॥ हे गृहमेधिनि हे गृहस्वामिनि अपिवा किंवा गृहेषु धर्मादेः किञ्चिदकुशलं ह्रासो जात इति शेषः । यत्र येषु गृहेषु अयोगिना योगाभ्या-सरहितानामपि योगः स्वधर्माचरणादिना योगफलं भवति । सम्बोधनेन धर्मादिहान्यैव गृहस्थस्य दैन्यं भवति नान्यथेति सूचितम् ॥ ५ ॥ अपिवा किंवा क्वचित् कदाचित् अतिथयोऽभ्येत्य आगत्य त्वया प्रत्युत्थानादिनाऽप्यपूजिता गृहाद्याता इत्यन्वयः । अपूजनं हि गृहासक्त्या सम्भवतीत्याशयेनाह— कुटुम्बासक्तयेति ॥ ६ ॥ अतिथिपूजनं विना तु गृहस्थस्य सर्वं व्यर्थं महाननर्थश्चेति सूचयन्नाह— गृहेष्विति ।

अपिवाऽकुशलं किञ्चिद्गृहेषु गृहमेधिनि ॥ धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥ अपिवाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया ॥ गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥ ६ ॥ गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ॥ यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥ ७ ॥ अप्यग्नयस्तु वेलायां न हुता हविषा सति ॥ त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥ यत्पूजया कामदुघान् याति लोकान् गृहान्वितः[2] ॥ ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवा-त्मनो मुखम् ॥ ९ ॥

येषु गृहेषु अतिथयोऽभ्येत्य यदि अनर्चिताः सत्काररहिताः सन्तो यान्ति तदा ते गृहा नूनं निश्चयेन फेरुराजः शृगालनाथस्तद्गृहोपमाः तद्विवर-तुल्या एवेत्यन्वयः । नन्वापद्गतेन भोजनादिदानेऽसमर्थेन कथं सत्कारः कर्तव्य इत्याशङ्क्य भोजनादिसामर्थ्याभावेऽप्यासनजलादिप्रदानेन स्तुतिनम-स्कारस्वागतवचनादिना सत्कारः कर्तव्य एवेत्याशयेनाह— सलिलैरपीति । अपिशब्देन आसनादिग्रहणम् ॥ ७ ॥ भद्रे इति सम्बोधनेन तव त्वेवं प्रमादो न सम्भवतीति सूचितम् । तथापि हे सति पतिव्रते मयि पत्यौ प्रोषिते देशान्तरं गते सति तु उद्विग्ना धीर्यस्यास्तया त्वया वेलायां होमकाले अपि किमग्नयो हविषा न हुता इत्यन्वयः ॥ ८ ॥ होमोल्लङ्घने महाननर्थो भवतीति सूचयंस्तत्करणे फलमाह— यदिति । यस्याग्नेः पूजया गृहान्विता गृहस्थाः कामदुघान् मनोरथपूरकान् लोकान्यान्ति । यतो ब्राह्मणोऽग्निश्च वै निश्चयेन विष्णोर्मुखम् । तर्हि होमेन विष्ण्वाराधनं भवतु तेन देवतान्त-राराधनं तु न स्यादित्याशङ्क्याह— सर्वदेवात्मन इति । विष्ण्वाराधनेनैव सर्वदेवाराधनमपि भवतीति भावः ॥ ९ ॥

१ वाऽप्यर्थे, टीकायां तथादर्शनात् । २ 'यान्ति लोकान् गृहान्विता' एवमेवैतट्टीकाकारसम्मतः पाठ इति प्रतिभाति टीकाया तथादर्शनात् । एकवचनान्त पाठस्त्वन्यत्र सर्वसम्मतो दृश्यते ।

तव तु धैर्यं सदैव स्थितं कथमिदानीमधीराऽसीति सूचयन् सम्बोधयति— हे मनस्विनीति। अपि किं तव पुत्राः सर्वे कुशलिनः सन्ति १। कथ तवैवं सन्देहो येनैवं विकल्प्य पृच्छसीत्यपेक्षायामाह— भवत्या आत्मानं मनः अस्वस्थं अप्रकृतिस्थमहं लक्षणैः मुखम्लान्यादिभिः लक्षयामीति ॥ १० ॥ अस्वास्थ्यकारण अन्यदेवास्ति तदुक्तं तावत्त्वत्पृष्टमभद्रादिकं नास्तीत्याह—भद्रमिति द्वयेन। भगवदुपासनाप्रभावेण तवाज्ञातं किञ्चिद्यद्यपि नास्त्येव तथापि त्वत्प्रश्नानुरोधेनोत्तरं ददामीति सूचयन्ती सम्बोधयति— हे ब्रह्मन्निति। द्विजादीनां भद्रमेवास्तीति शेषः। गृहस्थस्य त्रिवर्गनाशे चिन्ता भवति साऽपि त्वया न कार्येति सूचयन्ती सम्बोधयति— हे गृहमेधिन्निति। तत्र हेतुमाह— त्रिवर्गस्येति। इमे त्वदीया गृहाः त्रिवर्गस्य परं क्षेत्रमुद्भवस्थानं सन्ति त्रिवर्गोऽपि यथावद्वर्तते इत्यर्थः ॥ ११ ॥ ये चान्येऽपि लिप्सवः आकाङ्क्षावन्तः अभ्यादयः सर्वेऽपि मया पूजिता इति शेषः। एतत्सर्वं भगवद्भक्तस्य ब्राह्मणस्य तव प्रभावादेव सिद्ध्यति न मम पुरुषार्थादिति भावेनाह— हे ब्रह्मन् भगवतस्तवानुक्षणं ध्यानं यन्मया क्रियते तस्मात्सर्वं न रिष्यति किञ्चिदपि

अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि ॥ लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥ अदितिरुवाच ॥
भद्रं द्विजगवां ब्रह्मन् धर्मस्यास्य जनस्य च ॥ त्रिवर्गस्य परं क्षेत्रं गृहमेधिन् गृहा इमे ॥ ११ ॥ अग्नयोऽतिथयो भृत्या
भिक्षवो ये च लिप्सवः ॥ सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥ को नु मे भगवन् कामो न सम्पद्येत
मानसः ॥ यस्या भवान् प्रजाध्यक्ष एवं धर्मान् प्रभाषते ॥ १३ ॥ तवैव मारीच मनश्शरीरजाः प्रजा इमाः
सत्त्वरजस्तमोजुषः ॥ समो भवांस्तास्वसुरादिषु प्रभो तथाऽपि भक्तं भजते महेश्वरः ॥ १४ ॥

न हीयते इत्यर्थः ॥ १२ ॥ एवं तत्प्रश्नोत्तरं दत्त्वा मया स्वास्थ्यनिवृत्त्यर्थं किञ्चित् कार्यमस्ति तदपि भवत्कृपया भविष्यत्येवेत्याह— क इति। हे भगवन्निति सम्बोधनं सामर्थ्यसूचकम्। यस्याः प्रजाध्यक्षः प्रजापतिर्भवानेवमुक्तप्रकारेण धर्मान् प्रभाषते तस्या मम मानसो मनसि वर्तमानः कामो मनोरथः को नु न सम्पद्येतेत्यन्वयः ॥ १३ ॥ कोऽसौ कामो मया सम्पाद्य इत्याकाङ्क्षायामाह— तवेति। मरीचिप्रजापतिपुत्रत्वादिति हेतुं सूचयन् सम्बोधयति— हे मारीच सत्त्वरजस्तमोजुषः सत्त्वादिगुणत्रयवत्य इमाः प्रजाः प्राणिसमूहास्तवैव मनश्शरीरजाः, केचिन्मनसो जाताः, केचिच्छरीराच्च जाताः। अतो हे प्रभो हे स्वामिन् यद्यपि तासु असुरादिषु प्रजासु भवान् समस्तुल्यदृष्टिस्तथा महेश्वरः सृष्ट्यादिकर्ता परमेश्वरः सर्वत्र समोऽपि स्वभक्तमेव भजते स्वभक्तस्यैव मनोरथं पूरयति ॥ १४ ॥

---

१ क-ख—पुस्तकयो सूचयन्नित्यस्ति तथापि तत्र अदितिवाक्यानीति लिङ्गानिर्देश'।

तस्मात् परमेश्वरानुसरणस्यावश्यकत्वात् तथा हे ईश सर्व कर्तुं समर्थ । तत्र हेतुसूचनार्थं सम्बोधनान्तरं हे सुव्रत सुष्ठु भगवदुपासनालक्षणं व्रतं यस्य तत्सम्बोधनम् । त्वमपि त्वा भजन्त्या मे मम श्रेयश्चिन्तयेति सार्द्धस्यान्वयः । किं तव दुःखमित्यपेक्षाया तन्निवेदयन्ती ततो निस्तारं प्रार्थयते— हृतेति । सपत्नैः शत्रुभिर्दैत्यैः हृता श्रीर्येषां तान् हृतं स्थानं येषा तान्नोऽस्मान् पाहि रक्षेत्यन्वयः । बहुवचनं पुत्राभिप्रायेण । त्वया विनाऽस्माकमन्यो रक्षको नास्ति स्वामित्वात् समर्थत्त्वाच्चेति सूचयन्ती सम्बोधयति— हे प्रभो इति ॥ १५ ॥ उक्तमेव स्पष्टयति— परैरिति द्वयेन । प्रबलैः परैः शत्रुभिः ममैश्वर्यादीनि हृतानि सा ऐश्वर्यादिसम्पन्नतया त्वत्पालितया च प्रसिद्धाऽहं परैर्विवासिता स्थानाच्च निष्काशिता, अतो व्यसनस्य दुःखस्य सागरे निमग्ना । ऐश्वर्यं स्वामित्वम् । श्रीः भोग्यसम्पत् ॥ १६ ॥ तर्हि कथ रक्षणीयाऽसीत्यपेक्षायामाह— यथेति । यथा भवान् स्वकार्यं साधयति तथा ममापि साधयत्विति सूचयन्ती सम्बोधयति— हे साधो इति । यथा ममात्मजास्तान्यैश्वर्यादीनि पुनः प्रपद्येरन् लभेरन् तथा धिया विचार्य कल्याणं शुभं साधनं विधेहि उपदिशेत्य-

**तस्मादीश भजन्त्या मे श्रेयश्चिन्तय सुव्रत ॥ हृतश्रियो हृतस्थानान् सपत्नैः पाहि नः प्रभो ॥ १५ ॥ परैर्विवासिता साऽहं मग्ना व्यसनसागरे ॥ ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥ यथा तानि पुनः साधो प्रपद्येरन् ममात्मजाः ॥ तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥ १७ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ॥ अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥ १८ ॥ क्व देहो भौतिकोऽनात्मा क्वचाऽऽत्मा प्रकृतेः परः ॥ कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ १९ ॥**

न्वयः । नच वक्तव्यमह तन्न जानामीति भगवद्ध्यानपरत्वेन शुभाचाराणा श्रेष्ठत्वादित्याशयेन सम्बोधयति— हे कल्याणकृत्तमेति ॥ १७ ॥ कः कश्यपोऽदित्या एवं अभ्यर्थितः प्रार्थितः सन् स्मयन् तस्या वैराग्यमुत्पादयितुं विस्मयं कुर्वन्निव तामाह उपदिदेशेत्यन्वयः । भगवन्मायाप्राबल्यविज्ञत्वात् वस्तुतस्तस्य विस्मयो नास्तीति सूचनार्थं इवशब्दः । कश्यपकृतोपदेशमेव दर्शयति— अहो इति सार्धेन । अहो आश्चर्यरूपमेव विष्णोर्मायाबलं, यत इदं जगत् प्राणिजातं स्नेहेन बद्धमित्यन्वयः ॥ १८ ॥ कथमाश्चर्यं इत्यपेक्षायामाह— क्वेति । भौतिकः पञ्चमहाभूतकार्यरूपः अतएवानात्मा आत्मनो जीवाद्भिन्नो देहः क्व? प्रकृतेः प्रकृतिकार्याद्देहादेः परो भिन्नः आत्मा जीवश्च क्व? एवं परस्परभिन्नत्वे सति देहस्य जडत्वेन अतितुच्छत्वात् आत्मनश्चेतनत्वेप्यदृश्यतया तत्परिचयाभावाच्च कस्य के पतिपुत्राद्याः, अतः परस्परैक्याध्यासेन अहन्ता ममतापूर्वकस्नेहादौ भगवन्मायाकृतमोह एव कारणमित्यन्वयः । न केवलं स्वतर्केणैवमहं वदामि किन्तु शास्त्रप्रसिद्धमेतदिति सूचयितुमाह— हीति ॥ १९ ॥

एवं तत्त्वे उपदिष्टेऽपि तस्या अपरितोषमालक्ष्य सर्वपुरुषार्थसाधनं भगवदुपासनमुपदिशति— उपतिष्ठस्वेति । भगवन्त उपतिष्ठस्व भजस्व । नच भजने तस्य किञ्चिदपेक्ष्यते निजानन्दलाभेन पूर्णत्वादित्याशयेनाह— पुरुषमिति । न केवलं स लौकिकानेव पदार्थान् ददाति किन्तु मोक्षमपीत्याशयेनाह— जनार्दनमिति, जनां मायां अर्दयति निवर्तयतीति तथा तम् । अतएव सर्वोपास्यश्च इष्टत्वात्स एव ब्रह्मादिभिरप्युपास्यते इत्याशयेनाह— जगद्गुरुमिति । कोऽसावेवम्भूतो भगवानित्यपेक्षायां स वसुदेवनन्दनः श्रीकृष्ण एवेत्याह— वासुदेवमिति । नच तस्य भजने किञ्चिदायासः सर्वान्तर्यामित्वादित्याशयेनाह— सर्वभूतगुहावासमिति ॥ २० ॥ तद्भजनान्मम किं स्यादित्यत आह— स इति । स हरिर्भक्तदुःखहरणशीलः ते तव कामान् मनोरथान् विधास्यति । ननु यदि सम्पूर्णत्वेन निरपेक्षस्तदा किमर्थं मम कामान् विदध्यादित्याशङ्क्याह— दीनानुकम्पन इति । दीनेषु अहङ्कारविहीनेषु स्वभक्तेषु अनुकम्पां कृपामेव करोतीति भावः । ननु तर्हि लोको देवतान्तरं कथ भजते इत्याशङ्क्याह— अमोघेति । भगवद्भक्तिरेवामोघा निश्चतफला इतरा देवतान्तरभक्तिः तथाविधा नेति मम निश्चिता मतिः । देवतान्तरभक्ता भ्रान्ता इति भावः ॥ २१ ॥ एवमुक्ताऽदितिर्भजनप्रकारविशेषं

उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् ॥ सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥ २० ॥ स विधास्यति ते कामान्
हरिर्दीनानुकम्पनः ॥ अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥ २१ ॥ अदितिरुवाच ॥ केनाहं विधिना ब्रह्मन्नुपस्थास्ये
जगत्पतिम् ॥ यथा मे सत्यसङ्कल्पो विदध्यात् स मनोरथम् ॥ २२ ॥ आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् ॥
आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥ २३ ॥ कश्यप उवाच ॥ एतन्मे भगवान् पृष्टः प्रजाकामस्य पद्मजः ॥
यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥

पृच्छति— केनेति द्वयेन । सर्वज्ञता सूचयन्ती सम्बोधयति— हे ब्रह्मन्निति । जगत्पतिं जगत्पालकं भगवन्तमह केन विधिना उपस्थास्ये ? । सत्यः सङ्कल्पो भक्तमनोरथपूरकत्वलक्षणो यस्य स भगवान् यथा मे मनोरथं विदध्यात् सम्पादयेत् ॥ २२ ॥ पुत्रकैः सह सीदन्त्याः क्लेशवत्याः मे देवः सृष्ट्यादिविविधक्रीडापरो भगवान् यथा आशु शीघ्रं तुष्यति तुष्येत् तथा तदुपधावनं विधिं तदाराधनप्रकारं त्वमादिशेत्यन्वयः । न जानामीति न च वक्तव्यं यतस्त्वं भगवदाराधकत्वेन द्विजेषु श्रेष्ठ इत्याशयेन सम्बोधयति— द्विजश्रेष्ठेति ॥ २३ ॥ एवमेव मे मया पृष्टः भगवान् यथार्थवक्ता पद्मजो ब्रह्मा मे यद्व्रतमाह तदेतत्तेऽहं प्रवक्ष्यामीत्यन्वयः । एतद्व्रतप्रभावेणैव मम यथेष्टा प्रजा जाता अतस्त्वयाऽपि कृत चेत्तदा त्वदभीष्टपूरकः पुत्रो भविष्यतीति सूचयन्नाह—प्रजाकामस्येति । न चेदं व्रतं व्रतान्तरसदृशं किन्तु सर्वोत्कृष्टमित्याशयेनाह— केशवतोषणमिति । को ब्रह्मा ईशो महादेवस्तयोः व सुख यस्मात्तादृशस्य भगवतस्तोषणमित्यर्थः ॥ २४ ॥

१ मे इति षष्ठी तृतीयार्थे । २ प्रजाकामस्य ( मे ) यद्व्रतमाहेति सम्बन्धो ज्ञेय ।

एवं प्रतिज्ञाय व्रतप्रकारमुपदिशाति । फाल्गुनस्य अमले शुक्ले पक्षे द्वादशाहं प्रतिपदमारभ्य द्वादशीपर्यन्तं पयोव्रतः पयःपायी सन् परमया भक्त्या ऽन्वितश्च सज्जरविन्दाक्षं महाविष्णुं अर्चयेदित्यन्वयः ॥ २५ ॥ एवं सामान्यतोऽर्चनमुक्त्वा विशेषतस्तत्प्रकारं वक्तुमादौ पूर्वेद्युः कृत्यमाह— सिनीवाल्यामित्यादिना 'ब्रह्मचार्यथ तद्रात्र्याम्' इत्यन्तेन ग्रन्थेन । सिनीवाल्याममावास्यायां यदि क्रोडविदीर्णा मृल्लभ्येत तदा तां गृहीत्वा स्रोतासि नदीप्रवाहे स्थित्वा एवं वक्ष्यमाणमन्त्रं उदीरयेत् उच्चारयेत्, ततश्च तया क्रोडविदीर्णया वन्यवराहोत्खातया मृदा स्वशरीरमालिप्य स्नायादित्यन्वयः ॥ २६ ॥ मन्त्रमेव दर्शयति— त्वमिति । पृथ्व्यभिमानिदेवता सम्बोधयति— हे देवीति । प्राणिनां स्थानमिच्छता आदिवराहेण कृतवाराहावतारेण भगवता त्व रसायाः रसातलादुद्धृतासि अतो मे पाप्मानं प्रणाशयेत्यन्वयः । परमोपकारिण्यास्तवोपकारं कर्तुं मया न शक्यते ततः केवलं तुभ्यं नमः ॥ २७ ॥ ततश्च निर्वर्तितं आत्मनः स्वस्य नियमो नित्यनैमित्तिकः क्रियाकलापो येन स समाहितः एकाग्र चित्तः सन् अर्चादौ देवं भगवन्तं अर्चयेदित्य-

फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ॥ अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥ २५ ॥ सिनीवाल्यां मृदाऽऽलिप्य स्नायात्क्रोडविदीर्णया ॥ यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ॥२६॥ त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ॥ उद्धृताऽसि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ २७ ॥ निर्वर्तितात्मनियमो देवमर्चेत् समाहितः ॥ अर्चायां[1] स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥ २८ ॥ नमस्तुभ्यं भगवते पुरुषाय महीयसे ॥ सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २९ ॥ नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ॥ चतुर्विंशद्गुणज्ञाय गुणसङ्ख्यानहेतवे ॥ ३० ॥

न्वयः ॥ २८ ॥ तत्रावाहने नव मन्त्रानाह— नमस्तुभ्यमिति । पाद्यादौ तु विशेषतो द्वादशाक्षरं मन्त्रं वक्ष्यति । प्रथमं श्रीकृष्णं प्रणमति— वासुदेवाय वसुदेवपुत्राय तुभ्यं नमः । ननु श्रीकृष्णप्रणामेन किं स्यादित्याशङ्क्याह— महीयसे इति, ब्रह्मादिदेवगणैः आराधितपादपद्मायेत्यर्थः । तदा च तदाराधनेनैव यथेष्टफलप्राप्तिरिति भावः । महत्त्वे हेतुमाह— पुरुषायेति, पुरुषोत्तमायेत्यर्थः । तत्रापि हेतुमाह— भगवत इति ऐश्वर्यादिगुणपूर्णायेत्यर्थः । ननु नमस्कारादिभजनमजानन् कथं यथेष्टं फलं दद्यादित्याशङ्क्याह साक्षिण इति । शुभाशुभकर्मणा साक्षात्कर्त्रे इत्यर्थः । ननु देशान्तरस्थस्य कथमेवं साक्षात्कर्तृत्वमितिशङ्कानिरासायाह— सर्वभूतनिवासायेति ॥ २९ ॥ परब्रह्मरूपं भगवन्तं प्रणमति— नमेऽव्यक्तायेति । अव्यक्तत्वे हेतुमाह— सूक्ष्मायेति । श्रीकपिलरूपं प्रणमति— चतुर्विंशदिति । गुणानां तत्त्वाना सङ्ख्यानं यस्मिन् साङ्ख्यशास्त्रे तस्य हेतवे प्रवर्तकाय नम इत्यन्वयः । तत्र हेतुमाह— चतुर्विंशति गुणास्तत्त्वानि जानातीति तथा तस्मै । य एव यज्जानाति स एव तत्प्रवर्तयति नत्वज्ञ इति भावः ।

१ अर्चाया प्रतिमाया, स्थण्डिले भूमौ, इति सुबोधिन्याम् ।

सूक्ष्मत्वेऽपि हेतुमाह—प्रधानपुरुषाय चेति । प्रधानस्य प्रकृतेः प्रवर्तकोऽन्तर्यामी पुरुषः प्रधानपुरुषस्तस्मै नम इत्यन्वयः । यद्वा साङ्ख्यशास्त्रप्रवर्तने हेतुमाह—प्रधानेति । प्रधानो मुख्यः पुरुषः प्रधानपुरुषः पुरुषोत्तमस्तस्मै नम इत्यर्थः । यदि तथाभूतो भगवान् मुक्त्युपायं नोपदिशेत्तदा कथं भक्तजनानामुद्धारः स्यादिति भावः ॥ ३० ॥ इदानीं " चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्ता सोऽअस्य ॥ त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्याँऽआविवेश " इति मन्त्रोक्तं यज्ञरूपं भगवन्तं प्रणमति—नम इति । द्वे प्रायणीयोदयनीये शीर्षे यस्य तस्मै । त्रीणि सवनानि पादा यस्य तस्मै । त्रय्यां विद्यायां मन्त्रब्राह्मणकल्परूपायां आत्मा स्वरूपं यस्य तस्मा इति त्रिधाबद्ध इत्यस्यार्थ उक्तः । एवम्भूताय यज्ञाय नमो नमः । विवृतश्चायं मन्त्रो यास्केनर्षिणा—चत्वारिश्शृङ्गेति चत्वारो वेदा एवोक्ताः । त्रयोऽअस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्ताः सप्त

नमो द्विशीर्ष्णे त्रिपदे चतुश्शृङ्गाय तन्तवे ॥ सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥ ३१ ॥
नमः शिवाय रुद्राय नमः शक्तिधराय च ॥ सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३२ ॥

च्छन्दांसि । त्रिधाबद्धो मन्त्रब्राह्मणकल्पैः । वृषभो रोरवीति रोरवणं सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्तीति । तथाचाभियुक्तोक्ताः श्लोकाः—' चत्वारिश्शृङ्गा वेदास्तु पादास्त्रिसवनानि च ॥ प्रायणीयं शिरस्त्वेकमन्यच्चोदयनीयकम् ॥ हस्तास्तु सप्त च्छन्दांसि तैर्गृह्णाति फलान्यसौ ॥ मन्त्रब्राह्मणकल्पैस्तु त्रिधाबद्ध इतीर्यते ॥ शस्तोद्गारस्तुतिरवे रोरवीत्यृत्विजो मुखात् ॥ वृषभो महांश्च धर्मत्वाद्देवस्तु फलभावनात् ' इति ॥ ३१ ॥ रुद्ररूपं भगवन्तं प्रणमति—नमः शिवायेति, परमानन्दस्वरूपायेत्यर्थः । रुद्राय प्रलयकर्तृत्वेन भयङ्करायेत्यर्थः । सर्वविद्याधिपतये धर्मादिपुरुषार्थचतुष्टयहेतुविद्योपदेशकर्त्रे । भूताना प्राणिना पत्ये पुरुषार्थोपायोपदेशेन पालकाय । नन्वेकस्यैव कथमेवं विरुद्धकार्यकर्तृत्वमित्याशङ्क्याह—शक्तिधरायेति । सत्त्वादिगुणत्रयाङ्गीकारेण भिन्नकार्यकर्तृत्वमतो न विरोध इति भावः ॥ ३२ ॥

---

१ एव सामान्यतो नत्वा गुणावतारान् प्रणमति त्रिभिः— तत्राऽऽदौ मन्त्रोक्तयज्ञरूपेण विष्णो' प्रणामो नम इति । द्वे शीर्षे यस्य, त्रय पादा यस्य, तन्तवे फलविस्तारकाय, त्रय्या विद्यायामात्मा येस्यति त्रिधाबद्ध इत्यस्यार्थ उक्त । तथाच मन्त्र.—" चत्वारिशृगा त्रयो अस्य पादा द्वे शीर्वे सप्त हस्ता सोऽ अस्य । त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्याँऽआविवेश " इति । ' मार्गमुद्रवदाल्लून. सोर्य प्राज्ञैर्यथायथम् ॥ विष्णुस्तु यज्ञरूपेण स्तूयतेऽनेन तत्वन' ' ॥ तथाच यास्क'—चत्वारिशृङ्गेति वेदा वा एत उक्तास्त्रयोऽस्य पादा. सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्तहस्ता स' सप्त च्छन्दासि त्रिधाबद्धस्त्रेधाबद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भि' सामभिर्यदेनमृग्भि शसन्ति यजुर्भिर्यजन्ति सामभि स्तुवन्ति महोदेव इत्येष हि महान्देवो यद्यज्ञो मर्त्याँऽआविवेशेत्येष हि मनुष्यानाविशति यजनायेति श्रीधरस्वामिन्याख्या । मार्गमुद्रवेति श्लोकस्तु अस्य ग्रन्थकृत. ( श्रीधरस्वामिन' ) प्रतिभाति ।

चतुर्मुखरूपं प्रणमति— नमो हिरण्यगर्भायेति । जगदात्मने जगतो नियन्त्रे । केन रूपेण नियन्तृत्वमित्यपेक्षायामाह— प्राणायेति, सूत्ररूपायेत्यर्थः । योगेन भगवद्ध्यानेनैश्वर्यं शरीरं च यस्य तस्मै, योगेनैश्वर्यलाभस्य शरीरान्तरग्रहणस्य च द्वितीयस्कन्धादौ प्रसिद्धत्वात् । योगहेतवेऽन्यार्थमपि योगप्रवर्तकायेत्यर्थः ॥ ३३ ॥ श्रीनारायण प्रणमति— आदिदेवायेति । ब्रह्मादिकारणत्वेन सकलजगत्पूज्याय ते तुभ्यं नमः । साक्षिभूतायेति, सर्वोपादानतया सर्वत्र प्रवेशेन शुभाशुभद्रष्ट्रे इत्यर्थः । धर्मपुत्ररूपं प्रणमति— नारायणायेति । नराय नरावतारायेत्यर्थः । मूर्तिद्वयेनावतारप्रयोजनं सूचयन्नाह— ऋषय इति, सूक्ष्मदर्शितया एव तपश्चरणेनैव प्राणिनां सुखं स्यादित्यभिप्रेत्य जनसङ्ग्रहार्थं तपआदिनिष्ठायेत्यर्थः । नन्वेवं जनसुखेन तस्य किं प्रयोजनमित्यपेक्षायामाह— हरये इति, दुःखहरणस्वभावायेत्यर्थः ॥ ३४ ॥ विष्णुरूपं प्रणमति— नम इति । मरकतमणिवच्छ्यामं वपुर्यस्य तस्मै तुभ्यं नमः । अधिगता प्राप्ता श्रीर्येन तस्मै तुभ्यं नमः । को ब्रह्मा ईशो महादेवस्तयोर्वं सुखं यस्मात्

नमो हिरण्यगर्भाय प्राणाय जगदात्मने ॥ योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३३ ॥ नमस्ते आदिदेवाय साक्षिभूताय ते नमः ॥ नारायणाय ऋषये नराय हरये नमः ॥ ३४ ॥ नमो मरकतश्यामवपुषेऽधिगतश्रिये ॥ केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ३५ ॥ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ॥ अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥ ३६ ॥ अन्ववर्तन्त यं देवाः श्रीश्च तत्पादपद्मयोः ॥ स्पृहयन्त इवाऽऽमोदं भगवन्मे प्रसीदताम् ॥ ३७ ॥ एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम् ॥ अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३८ ॥

स केशवस्तस्मै तुभ्यं नमः । पीतं वासो यस्य तस्मै ते तुभ्यं नमः ॥ ३५ ॥ एवं भगवन्तं नमस्कृत्य तत्प्रसादं प्रार्थयते— त्वमिति द्वयेन। हे वरेण्य स्वशरणतया वरणयोग्य । तत्र हेतुतया पुनः सम्बोधयति— हे वरदर्षभेति । देवान्तरं किञ्चित्कचिद्वरं ददाति त्वं तु पुंसां सर्ववरदः धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयप्रदः । यत एवमतएव शीघ्रफलददेवतान्तरमुपेक्ष्य धीरा उद्वेगरहिता विवेकिनः श्रेयसे यथेष्टपुरुषार्थलाभाय ते तवैव पादरेणुं उपासते इत्यन्वयः ॥ ३६ ॥ ननु तर्हि फलप्राप्तौ देवतान्तरकृतो विघ्नः स्यादित्याशङ्क्य देवान्तरस्य तदनुवर्तित्वात् तत्प्रसादेन कोऽपि विघ्नशङ्कालेश इत्यभिप्रेत्याह— अन्ववर्तन्तेति । तत्पादपद्मयोरामोदं स्पृहयन्त इह देवाः श्रीर्लक्ष्मीश्च यमन्ववर्तन्त सेवितवन्तः स भगवान् मे प्रसीदतु ॥ ३७ ॥ एतैर्मन्त्रैरावाहनपुरस्कृतं स्वपुरः स्थिरीकृत केशव श्रद्धया युक्तः पाद्योपस्पर्शनादिभिरर्चयेदित्यन्वयः । उपस्पर्शनं आचमनीयम् ॥ ३८ ॥

एवं प्रथमं पाद्यादिभिर्गन्धमाल्याद्यैश्चार्चित्वा विभुं व्यापकं श्रीविष्णुं पयसा स्नापयित्वा च ततोऽनन्तर वस्त्रोपवीताभरणपाद्योपस्पर्शनैः गन्धपुष्पादिभिश्च पुनरर्चेदित्यन्वयः । आदिपदेनान्येषामपि शास्त्रप्रसिद्धाना विष्णुपूजनयोग्यानामुपचाराणा ग्रहणम् । पाद्यादिसमर्पणे सर्वत्र मन्त्रमाह— द्वादशाक्षरविद्ययेति । ॐनमो भगवते वासुदेवायेति मन्त्रेणेत्यर्थः ॥ ३९ ॥ पयसि श्रृतं पक्वं शाल्यन्नं नीवारादिकमन्यन्नैवेद्य दत्त्वा समर्प्य तेनैव मूलविद्यया द्वादशाक्षरमन्त्रेण तदग्नौ जुहुयादित्यन्वयः । एवं च नैवेद्यदानं विभवाभावे, विभवे सति तु ससर्पिर्घृतसहितं सगुडं गुडसहितं च दत्त्वा जुहुयादित्यन्वयः ॥ ४० ॥ तर्हि निवेदितं तत्किं कर्तव्यमित्यपेक्षायामाह— निवेदितामिति । एवमपेक्षावशात् पूजासमाप्त्यनन्तरं उचितमपि भोजनं पूजाक्रममध्ये एवोक्त्वा पुनः क्रमप्राप्तं पूजाशेषमेवाह— दत्त्वेति ॥ ४१ ॥ द्वादशाक्षरं मन्त्रमष्टोत्तरशत जपेत्, ततश्च स्तुतिभिः

अर्चित्वा गन्धमाल्याद्यैः पयसा स्नापयेद्विभुम् ॥ वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ गन्धपुष्पादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ ३९ ॥ श्रृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥ ४० ॥ निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् ॥ दत्त्वाऽऽचमनमर्चित्वा ताम्बूलं च निवेदयेत् ॥ ४१ ॥ जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा ॥ ४२ ॥ कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः ॥ द्व्यवरान् भोजयेद्विप्रान् पायसेन यथोचितम् ॥ ४३ ॥ भुञ्जीत तैरनुज्ञातः शेषं सेष्टः सभाजितैः ॥ ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ॥ ४४ ॥

प्रभुं प्रभवनशीलं नानावतारधारिणं भगवन्तं स्तुवीत, ततश्च तं प्रदक्षिणं कृत्वा दण्डवद्भूमौ प्रणमेदित्यन्वयः । 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ।' इति भगवद्वाक्येन श्रद्धा विना कृतस्य वैफल्याच्छ्रद्धया हर्षेण च सर्व कर्तव्यमित्याह— मुदेति । श्रद्धया युक्तो मुदेति पदद्वयस्य सर्वत्र यथोचितमन्वयः ॥ ४२ ॥ तस्य शेषां निर्माल्यं स्वशिरसि कृत्वा देवमुद्वासयेत् विसर्जयेत्, द्वौ अवरौ येषां तान् विप्रान् पायसेन यथोचितं भोजयेदित्यन्वयः । सामर्थ्याभावे द्वावपि भोजयेत्, सति तु सामर्थ्ये यथावित्तमित्यर्थः ॥ ४३ ॥ क्रमप्राप्तभोजनावसरे भोजनं विधत्ते— भुञ्जीतेति । सभाजितैः पूजितैस्तैर्विप्रैरनुज्ञातः सन् शेषं ब्राह्मणभोजनावशिष्टमन्नं सेष्टः बन्धुभिः सहितः स्वयं भुञ्जीतेत्यन्वयः । उक्तमेवानुवदति— अथ प्रारम्भे तस्यां रात्र्यां ब्रह्मचारी स्त्रीसङ्गरहितः शयीतेति शेषः । श्वोभूते प्रभाते सति प्रथमेऽहनि प्रतिपदि ॥ ४४ ॥



१ पूर्वश्लोकोक्त पाद्योपस्पर्शनादिक पूजान्तर्गत, अत्रत्ये पाद्योपस्पर्शने तु स्नानवस्त्रोपवीतपरिधाननिमित्ते अतो नैतत्पौनरुक्त्यम् । २ 'श्वोभूते' इत्यस्योत्तरत्र सम्बन्ध ।

स्नातः शुचिः सुसमाहितः एकाग्रमनाश्च सन् भगवन्तं पयसा स्नापयित्वा यथोक्तेन विधिना पूर्वोक्तेन प्रकारेणार्चेदित्यन्वयः। एवं यावद्व्रतसमापनम्। तावत्पय एव भक्षं यस्य स विष्ण्वर्चने आदृतश्च सन्निदं व्रतं चरेदित्यन्वयः । इदमिति किमित्यपेक्षायामाह—पूर्ववदित्यादि ॥ ४५ ॥ ४६ ॥ उक्तमेव स्पष्टयति—एवं त्विति । एवं तु उक्तप्रकारेण द्वादशाहं द्वादशदिनपर्यन्तं पयोव्रतं पयआहारं हरेराराधनं स्तुतिनमस्कारजपादिहोममर्हणं भगवत्पूजनं द्विजतर्पणं ब्राह्मणभोजनं चाहरहः प्रतिदिनं कुर्यादित्यन्वयः ॥ ४७ ॥ व्रतप्रारम्भदिनमारभ्य तत्समाप्तिदिनपर्यन्तमन्यानपि यमनियमादीनाह—प्रतिपद्दिनमिति द्वयेन। ब्रह्मचर्यं स्त्रीसङ्गादिवर्जनम्। सर्वभूतानां प्राणिमात्रस्य अहिंस्रः स्यात् पीडां न कुर्यात्। वासुदेवपरायणः प्रतिक्षणं भगवद्ध्याननिष्ठश्च स्यात् ॥ ४८ ॥ ४९ ॥ अथो द्वादशदिनानन्तरं त्रयोदश्या विधिकोविदैः शास्त्रोक्तप्रकाराभिज्ञैर्ब्राह्मणैः शास्त्रदृष्टेन विधिना

स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ पयसा स्नापयित्वाऽर्चेद्यावद्व्रतसमापनम् ॥ ४५ ॥ पयोभक्षो व्रतमिदं चरेद्विष्ण्वर्चनादृतः ॥ पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ॥ ४६ ॥ एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ॥ हरेराराधनं होममर्हणं द्विजतर्पणम् ॥ ४७ ॥ प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ब्रह्मचर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत् ॥ ४८ ॥ वर्जयेदसदालापं[1] भोगानुच्चावचांस्तथा ॥ अहिंस्रः सर्वभूतानां वासुदेवपरायणः ॥ ४९ ॥ त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभोः ॥ कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ॥ ५० ॥ पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ॥ चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ॥ ५१ ॥ शृतेन तेन पुरुषं यजेत सुसमाहितः ॥ नैवेद्यं चातिगुणवद्दद्यात् पुरुषतुष्टिदम् ॥ ५२ ॥ आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः ॥ तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः ॥ ५३ ॥

प्रकारेण पञ्चकैः दुग्धादिपञ्चामृतैर्विभोरनन्तरूपधारिणो विष्णोः स्नपनं स्नानं कारयेदित्यन्वयः ॥ ५० ॥ वित्तशाठ्यविवर्जितः उदारचित्तः सन् भगवतो महतीं पूजां च कुर्यात्। शिपिविष्टायान्तर्यामिणे विष्णवे चरुं निरूप्य सम्पाद्य तेन पयसि शृतेन पक्केन चरुणा सुसमाहितो भगवद्ध्यानपरः सन् पुरुषमन्तर्यामिणं भगवन्तं यजेत्पचातीति द्वितीयेनान्वयः । अतिगुणवत् मधुरादिषड्रसवत्। अतएव पुरुषतुष्टिदं भगवत्सन्तोषकरं हिंसादिनिषिद्धदोषरहितं नैवेद्यं च दद्यात् भगवते समर्पयेत् ॥ ५१ ॥ ५२ ॥ ज्ञानसम्पन्नमाचार्यमन्यांश्च ऋत्विजो वस्त्राभरणादिभिस्तोषयेत्। ननु भगवदाराधनेनैव फलसिद्धेराचार्यादिसन्तोषविधानं किमर्थमित्याशङ्क्याह—तदिति। तत् आचार्यादिसन्तोषणमपि हरेरेवाराधनं विद्धीत्यन्वयः ॥ ५३ ॥

[1] असद्भिः खलैश्चाण्डालादिभिर्वा सह सम्भाषणम्। दुर्वचोऽनृतालापं वा।

एतच्चातिप्रसन्नतया कार्यं त्वं च तत्र योग्याऽसीति सूचयन् सम्बोधयति— हे शुचिस्मिते इति । तानाचार्यादीन् अन्यांश्च ब्राह्मणान् ये चान्ये प्राणिनस्तत्र समागतास्तानपि शक्त्या स्वसामर्थ्यानुसारेण मधुरादिगुणवता सदन्नेन शुद्धेन हिंसादिदोषरहितान्नेन भोजयेदित्यन्वयः ॥ ५४ ॥ गुरवे आचार्यायान्येभ्यश्च ऋत्विग्भ्यो यथार्हतः यथायोग्य दक्षिणां दद्यात् । भोजने तु स्वशक्तौ सत्या न वर्णाश्रमादिविचारः कार्य इत्याह— अन्नं च तदाद्यं भक्षणयोग्य च तेन आश्वपाकान् चाण्डालादीनभिव्याप्य समुपागतान् प्रीणयेदित्यन्वयः ॥ ५५ ॥ दीनान्धकृपणादिषु सर्वेषु च भुक्तवत्सु सत्सु तद्भोजनं विष्णोः सर्वात्मकस्य भगवतः प्रीणनमिति विद्वान् चिन्तयन् बन्धुभिः सह स्वयमपि भुञ्जीतेत्यन्वयः ॥ ५६ ॥ भगवत्पूजाया नृत्यादयोऽपि सहकारिण इत्याह— नृत्येति । नृत्यादिभिः सह अन्वहं प्रतिपद्दिनमारभ्य त्रयोदशीपर्यन्तं प्रतिदिनं भगवतः पूजा कारयेदित्यन्वयः ।

**भोजयेत्तान् गुणवता सदन्नेन शुचिस्मिते ॥ अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र समागताः ॥ ५४ ॥ दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः ॥ अन्नाद्येनाऽऽश्वपाकांश्च प्रीणयेत् समुपागतान् ॥ ५५ ॥ भुक्तवत्सु च सर्वेषु दीनान्धकृपणेषु[1] च ॥ विष्णोस्तत्प्रीणनं विद्वान् भुञ्जीत सह बन्धुभिः ॥ ५६ ॥ नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः[2] ॥ कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ ५७ ॥ एतत्पयोव्रतं नाम पुरुषाराधनं परम् ॥ पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ५८ ॥ त्वं चानेन महाभागे सम्यक्चीर्णेन केशवम् ॥ आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ॥ ५९ ॥**

स्वसामर्थ्येऽधिकारे च सति पूजां स्वयमेव कुर्यात्तदभावेऽन्येनापि कारयेदित्याशयः ॥ ५७ ॥ एतत्पयोव्रत नाम प्रसिद्धं परमन्येभ्यः साधनेभ्यः उत्कृष्टं यतः पुरुषस्य सर्वान्तर्यामिणो भगवतः आराधनम् । कुत एतस्य प्रसिद्धिरित्यपेक्षायामाह— पितामहेन ब्रह्मणा अभिहितं मह्यं कथितं मया च ते तुभ्यं समुदाहृतं सम्यक् यथावत्कथितम् । अतस्त्वयैतस्योपेक्षा न कार्येति भावः ॥ ५८ ॥ अस्य श्रवणमपि दुर्भागिना दुर्लभं त्वं च श्रुतवत्यतस्तव सौभाग्यमनुमीयते इति सूचयन्सम्बोधयति— हे महाभागे इति । शुद्धो देवतान्तरप्रेमामिलितो भावो भक्तिः तत्प्रेमातिशयो यस्मिंस्तेनात्मना निश्चयात्मकेन चित्तेन नियतो वशीकृत आत्मा सङ्कल्पविकल्पात्मको मनो यया सा तथाभूता सती त्वं च सम्यक् चीर्णेनानुष्ठितेनानेन व्रतेन केशवं ब्रह्मरुद्रयोरपि सुखदातारं भजेत्यन्वयः। देवतान्तरभजनं तु तद्विनाशे निष्फलं भवति न चेदं तथा तस्य विनाशाभावादित्याशयेनाह— अव्ययमिति ॥ ५९ ॥

---

१ 'कृपणादिषु' इति कुत्रचित् पाठान्तरम् । २ 'स्वस्तिवाचनै' इति पाठश्चिन्त्य ।

अयं भगवदाराधनप्रकारः वै निश्चयेन सर्वयज्ञाख्यः अनेनैवैकेन सम्यगनुष्ठितेन सर्वे यज्ञा अनुष्ठितप्राया भवन्ति । सर्वव्रतमिति स्मृतामिति, अनेनैव कृतेन सर्वाणि व्रतानि कृतानि भवन्तीति ब्रह्मणा कथितमित्यर्थः । शुद्धान्तःकरणानामेवात्र विश्वासो भवति तथाभूता च त्वमिति सूचयन् सम्बोधयति—हे भद्रे इति । इदमेव व्रतं तपस्सारम्, अनेनैव कृतेन सर्वाणि तपांस्यपि कृतप्रायाणि भवन्तीत्यर्थः । तथा दानं चेति । अनेन व्रतेन कृतेन सर्वाणि दानान्यपि कृतप्रायाणि भवन्तीत्यर्थः । सर्वत्र हेतुमाह— ईश्वरतर्पणमिति । यतः सर्वेश्वरस्य भगवतस्तृप्तिकरमित्यर्थः ॥ ६० ॥ भगवत्सन्तोषकरत्वेनैव सर्वसाधनानां साफल्यं, नान्यथेत्याह—त इति । साक्षात् उत्तमा नियमास्त एव, यमोत्तमाश्च त एव, उत्तमं तपश्च तदेव, उत्तमं दानं च तदेव, उत्तमं व्रतं च तदेव, उत्तमो यज्ञश्च स एव, येन नियमादिना अधोक्षजः अक्षाणीन्द्रियाणि तज्जन्यं ज्ञानमधो यस्मात् स इन्द्रियजन्यज्ञानाविषयोऽन्तर्यामी भगवान् वासुदेवस्तुष्यतीत्यन्वयः । अन्यत्सर्वं साधनजातं निष्फलमेव विषयभोगसम्पादकत्वेन तस्य संसारहेतुत्वात् ।

**अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम् ॥ तपस्सारमिदं भद्रे दानं चेश्वरतर्पणम् ॥ ६० ॥ त एव नियमाः साक्षात्त एव च यमोत्तमाः ॥ तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥ ६१ ॥ तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर ॥ भगवान् परितुष्टस्ते वरानाशु विधास्यति ॥ ६२ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे पयोव्रतनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्ता साऽदिती राजन् स्वभर्त्रा कश्यपेन वै ॥ अन्वतिष्ठद्व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥**

भगवत्सम्पादितविषयभोगस्य तु न संसारहेतुत्वम् । 'न मय्यावेशितधियां कामः कामाय कल्पते ॥ भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते' इति वाक्येन तस्यापि मोक्षहेतुत्वादिति ध्येयम् ॥ ६१ ॥ यस्मादिदं व्रतं चतुर्विधपुरुषार्थदाने समर्थस्येश्वरस्य सन्तोषकरं तस्मात् हे भद्रे प्रयता प्रयत्नवती सती श्रद्धया आस्तिक्यबुद्ध्या एतद्व्रतमाचर कुरु । अनेन परितुष्टो भगवान् ते तव वरान् मनोरथान् आशु शीघ्रमेव विधास्यति सम्पादयिष्यति । धर्मात्मकत्वात्त्वैतद्व्रतानुष्ठानं सुकरमिति हे भद्रे इति सम्बोधनेन सूचयति ॥ ६२ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ विवृतः षोडशोऽध्यायः पयोव्रतनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ पयोव्रते कृतेऽदित्या प्रसन्नस्य हरेः किल ॥ सप्तदशे प्रतीतस्य प्रसादो विनिरूप्यते ॥ १ ॥ ॥ श्रीवामनावताराश्चर्यं त्वया सावधानतया श्रोतव्यमिति सूचयन्सम्बोधयति— हे राजन्निति ।

इत्येवं कश्यपेनोक्ता उपदिष्टा सा देवमाता अदितिरतन्द्रिता निरालस्या एकया एकाग्रया बुद्ध्या ईश्वरं फलदाने समर्थं महापुरुषं पुरुषोत्तम चिन्तयन्ती च सती वै निश्चयेन द्वादशाहमिदं पयोव्रतमन्वतिष्ठदित्यन्वयः। तद्वचने तस्याः सन्देहो नाभूदिति सूचयन्नाह– स्वभर्त्रेति ॥ १ ॥ सार्द्धेनोक्तमर्थमेव सार्द्धेन स्पष्टयति– प्रगृह्येति। बुद्धिरेव सारथिर्यस्याः साऽदितिः प्रग्रहरूपेण मनसा इन्द्रियरूपान् दुष्टान् अश्वान् प्रगृह्य स्वस्वविषयेभ्यो निवर्त्य ॥ २ ॥ एकाग्रया बुद्ध्या वासुदेवे मनश्च समाधाय स्थिरीकृत्य पयोव्रतं चचारेत्यन्वयः। तस्याः स्त्रियाः एवमिन्द्रियनिग्रहादिकरणमत्याश्चर्यमिति सूचयन्नाह– हेति। वसत्यस्मिन्निति वासुः स चासौ देवो नियमनादिक्रीडापरश्चेति। वासुदेवपदव्युत्पत्तिं स्पष्टयन्नाह– अखिलात्मनीति। अखिलेषु सर्वप्राणिसमूहेष्वात्मा स्वरूपं यस्य तस्मिन्नन्तर्यामिणीत्यर्थः। नत्वेवं सर्वनियन्तृत्वे तस्य विकारित्वं स्यादित्याशङ्क्याह– भगवतीति, अचि-

चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वरम् ॥ प्रगृह्येन्द्रियदुष्टाश्वान् मनसा बुद्धिसारथिः ॥ २ ॥ मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ॥ वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥ तस्याः प्रादुरभूत्तात भगवानादिपूरुषः ॥ पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥ ४ ॥ तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ॥ ननाम भुवि कायेन दण्डवत्प्रीतिविह्वला ॥ ५ ॥ सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा ॥ बभूव तूष्णीं पुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥

न्त्यानन्तैश्वर्यादिगुणवतीत्यर्थः। तथाच न तस्य विकारित्वमिति भावः ॥ ३ ॥ भगवदवताररहस्यकथनहेतुत्वेन तस्मिन् स्वस्नेहं सूचयन् सम्बोधयति– हे तातेति। तस्या व्रतानुष्ठान कृतवत्या अदितेः आदिपुरुषः ब्रह्मादिसर्वकारणभूतो भगवान् प्रादुरभूत्। तं भगवन्तं विशिनष्टि– पीतवासा इत्यादिना ॥ ४ ॥ सहसैव स्वनेत्रगोचरं तं भगवन्तं वीक्ष्य प्रीत्या विह्वला व्याकुला सती अदितिरुत्थाय सादरं यथा भवति तथा कायेन दण्डवद्भुवि ननामेत्यन्वयः ॥ ५ ॥ ततश्च सा उत्थाय बद्धाञ्जलिः सत्येव स्थिता केवलं तमीडितुं स्तोतुं पुनर्नोत्सेहे न शशाक किन्तु तूष्णीमेव बभूवेत्यन्वयः। तत्राशक्तौ हेतुगर्भाणि विशेषणान्याह– आनन्दजलाकुलेक्षणेति। आनन्दजातैर्जलैरश्रुभिराकुले ईक्षणे यस्याः सेत्यर्थः। पुलकैरुत्थितरोमभिराकुला व्याप्ता आकृतिर्देहो यस्याः सा। तस्य भगवतो दर्शनेन योऽत्युत्सवस्तेन गात्रे शरीरे वेपथुः कम्पो यस्याः सा ॥ ६ ॥

अदित्या कृता भगवत्स्तुतिस्त्वं सावधानतया शृणु तेन तव कुलमात्रस्यैवोद्धारो भविष्यतीति सूचयन्सम्बोधयति— हे कुरूद्वह कुरुकुलनिर्वाहक सा देवी भगवद्व्रतानुष्ठानात्तेजसा द्योतमाना अदितिः प्रीत्या शनैर्गद्गदया स्खलिताक्षरया गिरा हरिं स्वदुःखहर्तारं भगवन्त तुष्टावेत्यन्वयः । भगवत्सौन्दर्यदर्शनेन समुद्रमथनोत्पन्नाया रमाया यदि मोहो जातो येन देवादिभिः सभामध्ये तद्वक्ष एव स्वस्थानं स्वीकृतवती तदा दर्शनेनादित्या वैवश्ये किमाश्चर्यमिति तद्वैवश्यं दर्शयति— उद्वीक्षतीति । सा अदिती रमापतिं चक्षुषा पिबतीव स्वान्तःप्रवेशयतीव उद्वीक्षमाणा जातेति क्रियाभेदात् सेत्यस्य द्विरुक्तिर्न दोषः । तस्या वैवश्ये हेत्वन्तरमप्यस्तीति सूचयन् भगवन्तं विशिनष्टि— यज्ञपतिमिति, स्वानुष्ठितसर्वयज्ञाख्यव्रतस्य पतिं फलदातारमित्यर्थः । यः सर्व जगत्पाति तस्य दर्शनमतिदुर्लभमित्याशयेन विशेषणान्तरमाह— जगत्पतिमिति ॥ ७ ॥ तत्कृतां स्तुतिमेव दर्शयति— यज्ञेशेति त्रयेण । तवाशक्यं किमपि नास्तीति बहुभिः सम्बोधनैः सूचयन्ती स्वसुखं प्रार्थयते । यज्ञेश हे अनेकविधयज्ञाना फलद । हे यज्ञपुरुष "यज्ञो वै विष्णुः" इति श्रुतेर्यज्ञस्वरूपतया उपासनीयपुरुष । हे अच्युत न च्यवन्ति भक्ता यस्य तथाभूत, भक्तरक्षकेत्यर्थः । हे तीर्थपाद तीर्थानि

**प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ॥ उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥ अदितिरुवाच ॥ यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय ॥ आपन्नलोकवृजिनोपशमोदयाऽऽद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ ८ ॥ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ॥ स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥**

गङ्गादीनि पादे यस्य । तीर्थरूपं सर्वपापनिवर्तकं श्रवः कीर्तिर्यस्य । श्रवणमात्रेण मङ्गलं शुभादृष्टं यस्मात्तथाभूतं नामधेयं यस्य । आपन्नाना शरणागतानां लोकाना वृजिनस्य दुःखस्योपशमाय निवृत्तये उदय आविर्भावो यस्य । उचितं च तवैतत् सर्वकारणत्वादित्याशयेनाह— आद्येति । तथापि सामर्थ्यमपेक्षितं तद्विना दुःखनिवर्तकत्वं कथं स्यादित्यत आह— ईशेति हे सर्वनियन्तरित्यर्थः । तत्रापि हेतुं सूचयन्त्याह— भगवन्निति । हे अचिन्त्यानन्तैश्वर्यादिमान्नित्यर्थः । यस्त्वं दीनानां मादृशानां नाथः पालकः स्वाम्यस्यतो नोऽस्माकं शं सुखं कृधि सम्पादयेत्यर्थः ॥ ८ ॥ अहं तु नमनव्यतिरेकेण न किमपि कर्तुं शक्तेत्याशयेन प्रणमति— विश्वायेति । भूम्ने महत्तमाय तुभ्यं नम इत्यन्वयः । तत्र हेतुमाह— विश्वायेति, उपादानकारणतया विश्वरूपायेत्यर्थः । न केवलमुपादानत्वं किन्तु निमित्तत्वमपीत्याह— विश्वेति । विश्वस्य भवनमुत्पत्तिः स्थितिः पालनं संयमः उपसंहारश्च यस्मात्तस्मै । नन्वेकेनैकस्वभावेन कथं परस्परविरुद्धमेतत्कार्यत्रयं कर्तु शक्यते इत्याशङ्क्याह— स्वैरमिति । स्वैरं स्वेच्छयैव

न तु जीववत्कर्मवश्यतया गृहीता पुरुशक्तेः प्रकृतेः गुणा येन तस्मै ब्रह्मविष्णुरुद्ररूपाय। एवं सति विकारित्वमाशङ्क्य तन्निराकरोति— स्वस्थायेति, अप्रच्युतस्वरूपायेत्यर्थः। कथमेतदपि सम्भवति लोके जडजीवयोस्तथादर्शनादित्याशङ्क्याह— शश्वदिति। शश्वदुपबृंहितो नित्योर्जितः निरन्तराविर्भूतो यः पूर्णबोधः सच्चिदानन्दात्मकस्वरूपविषयकं ज्ञानं तेन व्यापादितं निरस्तमात्मावरकं तमः अज्ञानं येन तस्मै। भवत्वेवं तथापि तव दुःखं कथ निवर्तयेत्तत्राह— हरये इति, भक्तदुःखहरणशीलायेत्यर्थः ॥ ९ ॥ अस्मदीयमनोरथपूरणं तवेषत्करमेवेति कैमुत्यन्यायेनाह— आयुरिति। हे अनन्त देशकालवस्तुपरिच्छेदरहित तुष्टात्प्रसन्नात् त्वत्तो नृणामायुरादयः पदार्थाः सुलभा भवन्ति सपत्नानां शत्रूणां जयादिराशीः सम्पत्सुलभा भवतीति किमु वक्तव्यमित्यन्वयः। परं द्विपरार्धकालपरिमितमायुः। अभीष्टं बलपराक्रमसौन्दर्यादियुक्तं वपुः शरीरम्। अतुल्या लक्ष्मीः धनादिसम्पत्। द्यौश्च स्वर्गः भूश्च रसा अधस्तना लोकाश्च। सकला योगगुणाः अणिमादय धर्मार्थकामरूपास्त्रिवर्गश्च। केवलं प्रकृतिविविक्तात्मपरमात्मविषयकं मोक्षसाधनीभूतं

आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौभूरसाः सकलयोगगुणास्त्रिवर्गः॥ ज्ञानं च केवलमनन्त भवन्ति तुष्टात्त्वत्तो नृणां किमु
सपत्नजयादिराशीः॥ १०॥ श्रीशुक उवाच॥ अदित्यैवं स्तुतो राजन् भगवान् पुष्करेक्षणः॥ क्षेत्रज्ञः सर्वभूतानामिति
होवाच भारत॥ ११॥ श्रीभगवानुवाच॥ देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम्॥ यत्सपत्नैर्हृतश्रीणां च्यावितानां
स्वधामतः॥ १२॥ तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान्॥ प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम्॥ १३॥

ज्ञानं च॥ १०॥ श्रेष्ठे भरतवंशे उत्पन्नस्य तव राज्यं हित्वा भगवन्माहात्म्यश्रवणपरत्वमुचितमेवेति सूचयति सम्बोधनद्वयेन— हे राजन्निति— हे भारतेति। एवमुक्तप्रकारेण अदित्या स्तुतो भगवानितीदं वक्ष्यमाणमुवाचेत्यन्वयः। हेति स्वयाऽपि भगवन्माहात्म्यकथने हर्षं सूचयति। प्रथमतस्तु कृपादृष्ट्यैव तत्सन्तापं दूरीकृतवानिति सूचयन्नाह— पुष्करेक्षण इति। अदित्याऽनुक्तमपि तदभिप्रायं ज्ञातवानित्याशयेनाह— सर्वेषां भूतानां प्राणिनां क्षेत्रज्ञः क्षेत्रान्तर्भूतमनोवृत्तिज्ञ इति॥ ११॥ भगवदुक्तिमेव दर्शयति— देवमातरित्यादिना। देवमातृत्वात्तव मनोरथो मयाऽवश्य पूरणीय इति सम्बोधनेन सूचितम्। सपत्नैः शत्रुभिर्दैत्यैर्हृता श्रीः सम्पद्येषां तेषा स्वधामतः स्वर्गात् च्यावितानां विवासितानां स्वपुत्राणां सम्बन्धि यदैश्वर्यं भवत्या चिरकाल काङ्क्षितं तन्मे मया विज्ञातम्॥ १२॥ काङ्क्षितमेवाह— तानिति त्रिभिः। दुष्टो मदो येषां तानसुरर्षभान् समरे युद्धे विनिर्जित्य प्रतिलब्धो जयः श्रीश्च यैस्तैः पुत्रैः सहोपासितुमेकत्र स्थातुमिच्छसीत्यन्वयः॥ १३॥

१ 'द्यौर्भू रसा' इति पाठे पदत्रयम्।

तथा इन्द्रो ज्येष्ठो येषु तैः स्वतनयैर्युधि हतानां विद्विषां स्वशत्रूणां स्त्रियः आसाद्य भर्तृसमीपमागत्य दुःखिता रुदन्तीश्च द्रष्टुमिच्छसि ॥ १४ ॥ तथा प्रत्याहृतं प्रत्यानीतं यशः श्रीश्च यैस्तान् अतएव सुसमृद्धान् नाकपृष्ठं स्वर्गमधिष्ठाय क्रीडतः आत्मजान् स्वतनयास्त्व द्रष्टुमिच्छसि ॥ १५ ॥ एवं तदभिप्रेतमाविष्कृत्य तत्र यत्तान्विनिर्जित्येत्याद्यभिप्रेतं तदधुना सर्वथा शक्यसम्पादनमित्याह— प्राय इति । स्ववचने विश्वासार्थं सम्बोधयति— देवीति । ते त्वच्छत्रवः अधुना प्रायो झटिति अपारणीयाः अजेया इति, मे मतिः एवमेवाहमध्यवस्यामीत्यर्थः । तत्र हेतुमाह— यदिति । यस्माच्चे अनुकूला ईश्वराः समर्था ये विप्रास्तैर्गुप्ता रक्षिताः । अतस्तत्र तेषु कुतो विक्रमः पराक्रमः सुखं न दास्यति सुखहेतुर्न भविष्यतीत्यर्थः । यद्यप्यहं सर्वथा सर्वं कर्तुं समर्थस्तथापि विप्राणां महिमा मया रक्षणीय इति सूचयितुं प्रायग्रहणम् ॥ १६ ॥ यद्यप्येवमथापि हे देवि मे मया उपाय-

इन्द्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ॥ स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४॥ आत्मजान् सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः॥ नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥१५॥ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः ॥ यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥ अथाप्युपायो मम देवि चिन्त्यः सन्तोषितस्य व्रतचर्यया ते ॥ ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १७ ॥ त्वयाऽर्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः ॥ स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्ताऽस्मि मारीचतपस्यधिष्ठितः ॥ १८ ॥ उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ॥ मां च भावयती पत्यावेवं रूपमवस्थितम् ॥१९॥ नैतत्परस्मा आख्येयं पृष्टयापि कथञ्चन ॥ सर्वं सम्पद्यते देवि देवगुह्यं सुसंवृतम् ॥ २० ॥

स्त्वैश्वर्यादिप्राप्त्युपायः कश्चिच्चिन्त्यो विचिन्तनीय एव । तत्र हेतुमाह— सन्तोषितस्येति । ते त्वया व्रतचर्यया सन्तोषितस्य । यतो ममार्चनं मदाराधनमन्यथा गन्तुं विफलीभवितुं नार्हति । तत्र हेतुमाह— श्रद्धेति । मदाराधनस्य श्रद्धानुरूपमिच्छानुसारेण फलहेतुकत्वात् ॥ १७ ॥ तर्हि क उपाय इत्यपेक्षायां चिन्तितमाह— त्वयेति । अहं च त्वया अपत्यगुप्तये स्वपुत्ररक्षणाय अनुगुणं यथोचितं पयोव्रतेन पयोभक्षणपूर्वकेण विधिना अर्चितः सम्यगीडितः स्तुतश्चातो मारीचस्य कश्यपस्य तपसि तपोजनिते तेजस्यवस्थितः स्वांशेन तव पुत्रत्वमुपेत्याङ्गीकृत्य ते तव सुतान् गोप्तास्मि गोपायिष्यामि ॥ १८ ॥ निर्दोषत्वेन मातृयोग्यत्वं सूचयन्सम्बोधयति— भद्रे इति। पत्यावेवं रूपमवस्थितं मा भावयती चिन्तयती सती पतिं कश्यपमुपधाव अनुवर्तस्व, ततो गर्भं धारयेत्यर्थः । तस्यापि स्वपितृयोग्यता सूचयन्नाह— प्रजापतिमिति । तथापि अकल्मषं तपसा निर्दोषमित्यर्थः ॥ १९ ॥ अन्येन पृष्टयापि त्वयैतन्मदुक्तं कथञ्चिदप्यन्यस्मै नाख्येय न कथनीयम् । तत्र हेतुमाह— हे देवि देवाना गुह्यं रहस्यं कार्यं सर्वं सुसंवृत गुप्त सदैव सम्पद्यते सिद्ध्यति ॥२०॥

एतावदेवोक्त्वा भगवांस्तत्र तस्मिन्नेव स्थाने अन्तरधीयत अन्तर्हितवान् । अदितिस्तु प्रभोः सकलस्वामिनो हरेर्दुर्लभमात्मनि स्वस्मिन् जन्म लब्ध्वा - भगवदुक्तावन्यथात्वसन्देहाभावाद्भूतनिर्देशः - आत्मानं कृतकृत्यवन्मन्यमाना परया भक्त्या परमेण प्रेम्णा पत्यौ भगवन्त ध्यायन्ती पतिमुपाधावत् अन्ववर्तत ॥ २१ ॥ स वै कश्यपस्तत् तदा समाधिलक्षणेन योगेनोपायेन आत्मनि स्वस्मिन्प्रविष्ट हरेरंशमबुद्ध्यत ज्ञातवान् । हि यस्मात् अवितथेक्षणः सर्वज्ञ इत्यर्थः ॥ २२ ॥ ततश्च स कश्यपस्तपसा निमित्तेनात्मनि चिरकालं सम्भृतं धृतं वीर्यं तस्यामदित्यामाधत्त निहितवान् । राजन्निति सम्बोधनं विश्वासार्थम् । न च कश्यपाददित्या गर्भे जीववद्वीर्येण सह भगवतः प्रवेशो मन्तव्यः किन्तु ध्यानेनैवेत्याह— समाहितमना इति । ननु कश्यपस्य पितृत्वेन देवासुरेषु समत्वात् सर्वज्ञत्वाच्च कथं दैत्यविनाशार्थं गर्भं धृतवानित्याशङ्क्य दृष्टान्तमाह— दारुणीति । अनिलो यथा सर्वत्र समोऽपि दारुणि सङ्घर्षेण वनदाहकमग्निं तत्प्रारब्धवशादाधत्ते तथा कश्यपः सर्वसमोपि दैत्यविनाशकं वीर्यं तत्प्रारब्धानुसारि भगवदभिप्रायवशादाधत्त

**श्रीशुक उवाच ॥ एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ॥ अदितिर्दुर्लभं लब्ध्वा हरेर्जन्माऽऽत्मनि प्रभोः ॥**
**उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् ॥ २१ ॥ स वै समाधियोगेन कश्यपस्तदबुद्ध्यत ॥ प्रविष्टमात्मनि हरेरंशं**
**ह्यवितथेक्षणः ॥ २२ ॥ सोऽदित्यां वीर्यमाधत्त तपसा चिरसम्भृतम् ॥ समाहितमना राजन् दारुण्यग्निं यथाऽनिलः**
**॥ २३ ॥ अदितेर्धिष्ठितं गर्भं भगवन्तं सनातनम् ॥ हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः ॥ २४ ॥ ब्रह्मोवाच ॥**
**जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ॥ नमो ब्रह्मण्यदेवाय त्रिगुणाय नमोनमः ॥ २५ ॥**

इत्यर्थः ॥ २३ ॥ ततश्चादितेर्गर्भे धिष्ठितं प्रविष्टं सनातनं स्वकारणभूतं भगवन्तं विज्ञाय हिरण्यगर्भो ब्रह्मा गुह्यनामभिस्तदसाधारणगुणप्रतिपादकैर्नामभिः समीडे तुष्टावेत्यर्थः ॥ २४ ॥ ब्रह्मकृतां स्तुतिमेव दर्शयति— जयेति । यावदध्यायसमाप्ति । हे भगवंस्त्वं जय स्वोत्कर्षं प्रकटय । वय तु सर्वगुणपरिपूर्णस्योपकारायाकिञ्चित्करा अतस्ते तुभ्यं नमोऽस्त्विति प्रार्थना । भगवत्त्वे ज्ञापकं सूचयन्सम्बोधयति—उरुगायेति, उरुधा गीयत इति तथा । तत्रापि हेतुं सूचयन् पुनः सम्बोधयति—उरुक्रमेति, उरवः क्रमाः पादविक्षेपा लीला यस्य तथाभूतेत्यर्थः । कुत एवं नमस्कारप्रार्थनेत्यत आह—ब्रह्मण्यदेवायेति । ब्राह्मणेष्वस्मासु साधुर्हितचिन्तको ब्रह्मण्यः स चासौ देवो विविधक्रीडापरश्च तस्मै नमः । तथा सर्वकरणसामर्थ्ये

---

१ श्रीशुकोक्तेः प्रागत्र ' अदितिरुवाच ॥ नाहं वोढुं क्षमा देव त्वामाद्य पुरुष परम् ॥ ब्रह्माण्डकोटिसाहस्र रोमकूपे तवाव्यय ॥ १ ॥ महापातकयुक्तोऽपि यन्नामस्मृतिमात्रत' ॥ प्रयाति मुक्तिं देवेश त कथं धारयाम्यहम् ॥ २ ॥ श्रीभगवानुवाच ॥ सत्यमुक्तं महाभागे त्वया नास्त्यत्र संशय ॥ पतिव्रता पतिप्राणा पतिभक्तिपरायणा ॥ ३ ॥ वहन्ति सतत बाले स्त्रियोऽपि त्यक्तमत्सराः ' । इति श्लोका सार्धास्त्रय प्राचीनतरपुस्तकान्तर्गता ' ग० कृ० ' इत्येषां श्री० भागवतपुस्तके टिप्पण्या सङ्गृहीता सन्ति ।

हेतुमाह— त्रिगुणायेति । त्रयो गुणा नियम्या यस्य तस्मै सत्त्वादिगुणत्रयनियन्त्रे नमोनमः, इति वीप्सादरार्थो ॥ २५ ॥ न केवलमिदानीमेवास्यास्त्वं पुत्रो जातः किन्तु पूर्वमपीत्याशयेन प्रणमति— नम इति । अदितेरेव पूर्वस्मिन् जन्मनि पृश्निरिति नाम तस्या गर्भाय पुत्राय नमः । तथाप्यज्ञत्वं वारयन्नाह— वेदगर्भायेति, वेदा गर्भे यस्य तस्मै नमः । वेधसे सर्वविधात्रे नमः । तत्र हेतुमाह— त्रिणाभायेति, त्रयो लोकाः प्रलये नाभ्यां यस्य तस्मै नमः । स्थानविशेषापेक्षायामाह— त्रिपृष्ठायेति, त्रयाणा लोकानां पृष्ठे उपरि वैकुण्ठे स्थिताय नमः । अन्तर्यामित्वेन प्रणमति— शिपीति । शिपयः पशुतुल्या जीवास्तेष्वन्तर्यामितया प्रविष्टाय नमः "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति श्रुतेः । वस्तुतस्तु विष्णवे व्यापिने नमः ॥ २६ ॥ एवं प्रणम्य कारणत्वमाह— त्वमिति । भुवनस्य विश्वस्य आदिरुपादानं अन्तः प्रलयावधिः मध्य वर्तमानं स्वरूपं च त्वमेव । ईश हे सर्वथा समर्थ कालरूपः सन् भवानेव विश्वमाक्षिपति प्रवर्तयति । तत्र दृष्टान्तमाह— स्रोत इति । गम्भीरं स्रोतो नदीप्रवाहो यथा स्वान्तःपतिततृणादिक-

**नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे ॥ त्रिणाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥ २६ ॥ त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः ॥ कालो भवानाक्षिपतीश विश्वं स्रोतो यथाऽन्तः पतितं गभीरम् ॥ २७ ॥ त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि सम्भविष्णुः ॥ दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे भगवत्प्रसादनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥**

माक्षिपति तथेत्यर्थः । नन्वेवं सति विकारित्वं स्यादित्याशङ्क्याह—अनन्तेति । यमपरिमितशक्तिं पुरुषमाहुः । "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्याद्यो वेदा वदन्तीत्यर्थः ॥ २७ ॥ एवमुपादानत्वमुक्त्वा निमित्तकारणत्वं च वदन् देवरक्षा प्रार्थयते— त्वमिति । वै अवधारणे । स्थिरजङ्गमाना प्रजानामस्मदादीना प्रजापतीना च त्वमेव सम्भविष्णुरुत्पादनशीलोऽसि । अतो हे देव दिवश्च्युतानां स्वर्गाद्भ्रष्टानां दिवौकसां देवाना परायणं परमाश्रयः त्वमेवासि । तत्र दृष्टान्तमाह— नौरिवेति, अप्सु मज्जतो जनस्य नौरिव । अतस्तान् स्वर्गे स्थापयेत्याशयः ॥ २८ ॥ इति श्रीवल्लभाचार्य-वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बाल-प्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ सप्तदशो गतो वृत्तिं हर्यनुग्रहरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥

अष्टादशो हरिः प्रादुर्भूतो देवादिसत्कृतः ॥ गतो वामनरूपेण बलिं चेति निरूप्यते॥ १ ॥ ॥ इत्थमुक्तप्रकारेण विरिञ्चेन ब्रह्मणा स्तुत कर्म जगत्सृष्ट्यादिलक्षणं वीर्यं प्रभावश्चानन्तशक्तित्वादि यस्य सः अमृतभूः मोक्षदाता भगवानदित्यां प्रादुर्बभूव । तं वर्णयति— सार्द्धाभ्याम् । चत्वारो भुजा यस्य सः। शङ्खगदाब्जचक्राणि सन्त्यस्येति तथा । पिशङ्गे वाससी यस्य सः । नलिनवत्सुन्दरे आयते दीर्घे चेक्षणे यस्य सः ॥ १ ॥ श्यामश्चासाववदातो निर्मलश्च सः । झषराजौ मकरस्तदाकारयोः कुण्डलयोस्त्विषा दीप्त्या उल्लसन्ती श्रीः शोभा वदनाम्बुजे यस्य सः । पुमान् पुरुषविग्रहः । श्रीवत्सो रोमाचिह्नविशेषो वक्षसि यस्य सः । वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य सः ॥ २ ॥ मधुव्रतानां भृङ्गाणां व्रातेन सङ्घेन विघुष्टया नादितया स्वया असाधारणया श्रीमत्या वनमालया विराजितः । कण्ठे निविष्टः धृतः कौस्तुभो मणिर्येन सः । स्वरोचिषा स्वकान्त्या प्रजापतेः कश्यपस्य वेश्मगत तमः विनाशयन् अपनुदन् हरिः प्रादुर्बभूवेति पूर्वेणैवान्वयः ॥ ३ ॥ तदा दिशः सलिलानि आशया जनानामन्तःकरणानि च प्रसेदुः, प्रसन्नानि निर्मलानि

**श्रीशुक उवाच ॥ इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ॥ चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः ॥ १ ॥ श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ॥ श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः ॥ प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन् कण्ठनिविष्टकौस्तुभः ॥ ३ ॥ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ॥ द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः सञ्जहृषुर्नगाश्च ॥ ४ ॥ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ॥ सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥**

जातानीत्यर्थः । तत्रान्तःकरणमलानि कामक्रोधादीनि । अतएव प्रजाः सर्वे प्राणिनः सदाचाराः प्रहृष्टा जाताः । ऋतवः प्रावृडादयः गुणान्विताः पुष्पफलादिस्वस्वगुणयुक्ता जाताः । ऋतव इति बहुवचनेन न केवलं तत्प्रादुर्भावसमय एवैते गुणाः किन्तु यावत्तस्यावस्थितिस्तत्पर्यन्तमिति सूचयति । तथा द्युप्रभृतयः सञ्जहृषुर्हर्षयुक्ता बभूवुः । तत्र द्युप्रभृतिलोकानां हर्षः तत्रत्यानां प्राणिनां हर्षेण समृद्ध्या वा उपचर्यते । अग्निजिह्वाः देवाः । नगाः पर्वताः ॥ ४ ॥ तत्प्रादुर्भावकालमाह— श्रोणायामिति । श्रवणद्वादशी भाद्रपदशुक्लद्वादशीति प्रसिद्धा तस्या तत्रापि श्रोणाया श्रवणनक्षत्रस्थे चन्द्रे सतीत्यर्थः । तत्रापि श्रवणस्य प्रथमांशे अभिजिन्नामके नक्षत्रे । तच्च श्रुत्या प्रदर्शितम्— " अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामधस्ताच्छ्रोणायाः " इति । एवं विशिष्टे मुहूर्ते प्रभुर्भगवान् प्रादुर्बभूवेत्यर्थः । किञ्च नक्षत्राणि अश्विन्यादीनि, ताराशब्देनान्याः प्रसिद्धाः, आद्यपदेन सूर्यादयो ग्रहाश्च, ते सर्वे तज्जन्म दक्षिणमुदारं चक्रुः । जन्ममुहूर्ते गुणावहा बभूवुरित्यर्थः ॥ ५ ॥

तत्र विशेषान्तरमाह— यस्या द्वादश्या हरेर्जन्म विदुः सा द्वादशी विजया नाम प्रोक्तेत्यन्वयः। तदप्यभिजिन्मुहूर्ते कस्मिन्समयेऽभूदित्यपेक्षायामाह— हे नृप यदा च सविता सूर्यो मध्यन्दिनगतः सन् अतिष्ठद्बभूवेति ॥ ६ ॥ तदा शङ्खादयो मृदङ्गादयश्च नेदुः दध्वनुः। तेषां चित्रवादित्राणां तूर्याणां च तुमुलो महान् निर्घोषः शब्दोऽभवत् ॥ ७ ॥ अप्सरसः प्रीता अनृत्यन्। गन्धर्वश्रेष्ठा जगुः। मुनिप्रभृतयो यथायोग्यं तुष्टुवुर्जगुः प्रशशंसुर्ननृतुश्च। एवं गायन्तो नृत्यन्तश्च प्रमुदिताः सन्तोऽदित्या आश्रमपदं कुसुमैरवाकिरंश्चेति त्रयाणामन्वयः॥ ८ ॥ ९ ॥ १० ॥ अदितिस्तं परं पुमासं पुरुषोत्तमं निजयोगमायया स्वाचिन्त्यशक्त्या गृहीतो देहो दिव्यविग्रहो येन तं निजगर्भसम्भूत दृष्ट्वा विस्मिता सती मुदमाप। प्रजापतिः कश्यपश्च तं

द्वादश्यां सविताऽतिष्ठन्मध्यन्दिनगतो नृप[1] ॥ विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥ शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः ॥ चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥ प्रीताश्चाप्सरसोऽनृत्यन् गन्धर्वप्रवरा जगुः ॥ तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥ ८ ॥ सिद्धविद्याधरगणाः सकिम्पुरुषकिन्नराः ॥ चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥ ९ ॥ गायन्तोऽतिप्रशंसन्तो[2] नृत्यन्तो विबुधानुगाः ॥ अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥ दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता ॥ गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥ यत्तद्वपुर्भातिविभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥ बभूव तेनैव स वामनो बटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः ॥ १२ ॥ तं बटुं वामनं दृष्ट्वा मोदमाना महर्षयः ॥ कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥ १३ ॥

दृष्ट्वा विस्मितः सन् जयेत्याहेत्यन्वयः॥ ११ ॥ विस्मयान्तरमाह— यत्तद्वपुर्हरिरधारयत् प्रकटितवास्तेनैव वपुषा मातापित्रोः सम्पश्यतोरेव वामनो ह्रस्वाङ्गो बटुर्ब्राह्मणो बभूवेत्यन्वयः। स्वयं कथम्भूतः? अव्यक्तचिद्रूपः। कथमधारयत्? भातिर्दीप्तिः विभूषणानि च आयुधानि च तैर्व्यक्तं यथा भवति तथेति। रूपान्तरधारणे दृष्टान्तमाह—यथा नट इति। तत्र सामर्थ्यमाह— दिव्यगतिरिति, अद्भुतप्रभाव इत्यर्थः॥ १२ ॥ तं भगवन्तं वामनं बटुं दृष्ट्वा मोदमानाः संहृष्टा महर्षयः प्रजापतिं कश्यपं पुरस्कृत्य कर्माणि जातकर्मादीनि कारयामासुः॥ १३ ॥ 

१ ‘ मध्यन्दिनगतोऽहनि ’ इति पाठान्तरम्। २ ‘ अभिप्रशसन्त ’ इति ‘ अतिप्रमुदिता ’ इति च पाठान्तरद्वयम्।

तस्य वामनस्योपनीयमानस्योपनयनेन संस्क्रियमाणस्य सविता सूर्यः सावित्रीमब्रवीत् उपदिष्टवान् । बृहस्पत्यादयश्च ब्रह्मसूत्रादीनि ददुः । ब्रह्मसूत्रं यज्ञोपवीतम् । मेखला कटिसूत्रम् ॥ १४ ॥ कृष्णाजिन मृगचर्म, भूमिस्तदभिमानिनी देवता । वनस्पतिर्वनाना वृक्षाणा पतिः सोमश्चन्द्रः । कौपीनं तदाच्छादनं च माता अदितिः । द्यौस्तदभिमानिनी देवता । जगतः पतेः पालकस्य वामनस्य ॥ १५॥ वेदगर्भो ब्रह्मा । हे महाराज । अव्ययात्मनः अपक्षयादिरहितस्वरूपस्य ॥ १६ ॥ इत्येवमुपनीताय तस्मै वामनाय यक्षराट् कुबेरः पात्रिका भिक्षापात्रमदात् । उमा भवानी भिक्षामदात् । तस्या भिक्षादाने योग्यतां सूचयन् विशिनष्टि— अम्बिका जगतो मातृत्वेनाभिमता, सती पतिव्रता, साक्षाद्भगवती ॥ १७ ॥ एवं सम्भावितः सत्कृतः स वामनो बटुः ब्रह्मवर्चसेन स्वतेजसा ब्रह्मर्षिगणसञ्जुष्टा सभामतिक्रम्यारोचतेत्यन्वयः । तत्र हेतुः— मारिष इति, भगवदवतारत्वेन सर्वश्रेष्ठ

तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥ १४ ॥ ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ॥ कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ १५ ॥ कमण्डलुं वेदगर्भः कुशान् सप्तर्षयो ददुः ॥ अक्षमालां महाराज सरस्वत्यव्ययात्मनः ॥ १६ ॥ तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥ भिक्षां भगवती साक्षादुमाऽदादम्बिका सती ॥ १७ ॥ स ब्रह्मवर्चसेनैवं सभां सम्भावितो बटुः ॥ ब्रह्मर्षिगणसञ्जुष्टामत्यरोचत मारिषः ॥ १८ ॥ समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ॥ परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः ॥ १९ ॥ श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ॥ जगाम तत्राखिलसारसम्भृतो भारेण गां सन्नमयन् पदे पदे ॥ २० ॥ तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसञ्ज्ञके ॥ प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविम् ॥ २१ ॥

इत्यर्थः ॥ १८ ॥ स द्विजो वामनः समिद्धं प्रज्वलन्तमाहितं स्थापितमुपनयनाग्निं परिसमूहनमूर्जुं कृत्वा परिस्तीर्य प्रसार्य सम्यगभ्यर्च्य समिद्भिर्हवनसाधनैरजुहोत् ॥ १९ ॥ ततश्च भगवान् वामनो भृगूणा भृगुभिरुपकल्पितैः कारितैरश्वमेधैर्यजन्तमूर्जित धनादिभिः समृद्ध बलिं श्रुत्वा तदा स्वस्थानात् स्वभारेण गां पृथिवीं पदे पदे सन्नमयन् नम्रा कुर्वंस्तत्र बलिसमीपं जगामेत्यन्वयः । वामनस्वरूपे एतादृग्भारः कुत आगत इत्यत आह— अखिलसारसम्भृत इति । अखिलस्य प्रपञ्चस्य सारेण भारेण सम्भृतः पूर्णः, विश्वरूपत्वात् ॥ २० ॥ नर्मदाया नद्या उत्तरे तटे भृगुकच्छसञ्ज्ञके क्षेत्रे क्रतूत्तमं यज्ञश्रेष्ठं प्रवर्तयन्तो ये बलेः ऋत्विजो भृगवो भृगुवंशीयाः शुक्रादयस्ते त वामनमारात् समीपे एव उदितं रविं सूर्यमिव अतितेजस्विनं व्यचक्षत अपश्यन् ॥ २१ ॥

हे नृप वामनस्य तेजसा हतत्विषः अपहृततेजस्कास्ते ऋत्विजो यजमानो बलिश्च सदस्याः सभास्थाश्च सर्वे क्रतोर्यज्ञस्य दिदृक्षया किल किं सूर्यः आयाति उतवा अथवा विभावसुरग्निरायाति अथवा सनत्कुमार आयातीति व्यतर्कयन्निति शेषः ॥ २२ ॥ इत्थं सशिष्यैः बलिसहितैर्भृगुभिरनेकधा वितर्क्यमाणः स भगवान् वामनः सदण्डं छत्रं जलपूर्णं कमण्डलुं च बिभ्रत् हयमेधवाटं यज्ञशालां विवेश ॥ २३ ॥ मौञ्ज्या मुञ्जनिर्मितया मेखलया वीतं निबद्धकटिम्, उपवीतवद्धृतमजिनमेवोत्तरीयं यस्य तम्, मायया स्वेच्छयैव माणवकं धृतब्रह्मचारिविग्रहं, वामनं ह्रस्वाङ्गं विप्रं हरिं यज्ञवाटे प्रविष्टं वीक्ष्य तस्य वामनस्य तेजसा सन्निक्षिप्ताः सङ्कुचितप्रकाशास्ते सशिष्या अग्निभिश्च सहिता भृगवः समुत्थाय प्रत्यगृह्णन् यथोचितविनय-

त ऋत्विजो यजमानः सदस्या हतत्विषो वामनतेजसा नृप ॥ सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥ इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान् स वामनः। छत्रं सदण्डं[1] सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम् ॥ २३ ॥ मौञ्ज्यामेखलया वीतमुपवीताजिनोत्तरम् ॥ जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥ प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः ॥ प्रत्यगृह्णन् समुत्थाय सङ्क्षिप्तास्तस्य तेजसा ॥ २५ ॥ यजमानः प्रमुदितो दर्शनीयं मनोरमम् ॥ रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥ स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः ॥ अवनिज्यार्चयामास मुक्तसङ्गमनोरमम् ॥ २७ ॥

नमस्कारासनार्घ्यादिना सत्कृतवन्त इति द्वयोरन्वयः ॥ २४ ॥ २५ ॥ तदेवाह— यजमान इति । यजमानो बलिस्तं दृष्ट्वा प्रमुदितः संस्तस्मा आसनं आहरत् समर्पितवान् । तद्दर्शनेन प्रमोदे हेतुमाह— दर्शनीयमिति । तत्र हेतुः— मनोरममिति, अतिसुन्दरमित्यर्थः । तत्र हेतुमाह— रूपेति, रूपानुरूपा अवयवाः करचरणादयो यस्य तमित्यर्थः ॥ २६ ॥ अथानन्तर बलिस्तं स्वागतेन स्वागतमिति वचनेनाभिनन्द्य तस्य भगवतः पादाववनिज्य प्रक्षाल्य तमर्चयामासेत्यन्वयः । एतत्तेन दुर्लभं लब्धमित्याशयेन विशिनष्टि— मुक्तसङ्गानां सर्वतो विरक्ताना योगिनां मनोरमं मनस्सु क्रीडतमित्यर्थः ॥ २७ ॥

१ 'सदण्डछत्र' इति पाठान्तर क–ख–पुस्तकयोर्दृश्यते ।

तस्य पादशौचं पादप्रक्षालनजलं स बलिर्मूर्ध्नि अदधात् । तस्य पादशौचस्य मूर्ध्नि धारणयोग्यतां सूचयन् विशिनष्टि— । सर्वस्य कुलस्य कल्मषं पापमपहन्तीति तथा तत् । न केवलं पापनिवर्तकं किन्तु पुण्योत्पत्तिद्वारा मनोरथप्रदं चेत्याह— सुमङ्गलमिति । तत्र ज्ञापकमाह— यदिति । यत्पादशौचं देवानां देवो ब्रह्मा चन्द्रमौलिर्गिरिशो महादेवश्च परया भक्त्या परमप्रेम्णा मूर्ध्ना दधार । बलेरपि तत्र तद्धारणमुचितमेवेत्याशयेन तं विशिनष्टि— धर्मविदिति । तमुवाच चेति शेषः ॥ २८ ॥ तदेवाह— स्वागतमिति । हे ब्रह्मन् ते तव स्वागत सुष्ठ्वागमन अतस्तुभ्यं नमः । तव किं कार्यं करवाम । तव दर्शनादिकं तावद्दुर्लभमित्याशयेनाह—आर्यवपुर्धरं श्रेष्ठवपुर्धरं त्वा त्वा साक्षात्प्रत्यक्षं ब्रह्मर्षीणां तपोऽहं मन्ये ॥ २९॥ अतो यत् यस्मात् भवानस्माकं गृहान् आगतस्तस्मात् अद्य नोऽस्माकं पितरस्तृप्ता उद्धृता जाताः । तथा नोऽस्माकं कुलं पुत्रपौत्रभृत्यादिवर्गः अद्य पावितं पवित्रं जातम् । तथा अयमनुष्ठीयमानः क्रतुश्चाद्यैव स्विष्टः यथावदनुष्ठितो जातः । नो गृहानिति बहुवचनं सर्वलोकस्वामित्वमहत्त्वसूचनार्थम् ॥ ३० ॥

तत्पादशौचं जनकल्मषापहं स धर्मविन्मूर्ध्न्यदधात्सुमङ्गलम् ॥ यद्देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥ बलिरुवाच ॥ स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते ॥ ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वाऽऽर्यवपुर्धरम् ॥ २९ ॥ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ॥ अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ॥३०॥ अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः ॥ हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव ॥ ३१ ॥ यद्यद्बटो वाञ्छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ॥ गां काञ्चनं गुणवद्धाम मृष्टं तथाऽन्नपेयमुत वा विप्रकन्याम् ॥ ग्रामान् समृद्धांस्तुरगान् गजान् वा रथांस्तथाऽर्हत्तम सम्प्रतीच्छ ॥३२॥ इत्यष्टादशोऽध्यायः ॥ १८ ॥ ॥

हे द्विजात्मज त्वच्चरणावनेजनैस्तव चरणप्रक्षालनावशिष्टैर्वार्भिर्जलैः हतमंहः पापं यस्य तस्य मे ममाग्नयोऽद्य यथाविधि शास्त्रविहितप्रकारेण सुष्ठु हुता जाताः । स्वभाग्यस्याश्चर्यं द्योतयति— अहो इति । तथा इयं प्रदृश्यमाना मम भूश्च तनुभिः सूक्ष्मैस्तव पदैः पुनीता पवित्रीकृता ॥ ३१ ॥ हे बटो हे विप्रसुतेति सम्बोधनद्वयेनार्थित्वे हेतु सूचयति । त्वामर्थिनं याचितारमनुतर्कये आलक्षये अतो यद्यद्वाञ्छसि कामयसे तन्मे मत्तः प्रतीच्छ प्रतिगृहाण । यच्छब्दाभिप्रेतानेवार्थान् प्रदर्शयन्नुक्तमेव स्पष्टयति— गामिति । गवादिषु यत्कामयसे तत्सम्प्रतीच्छेत्यन्वयः । गा धेनुम् । काञ्चन सुवर्णम् । गुणवत् यथेष्टभोगोपकरणवत् धाम गृहम् । मृष्टमन्नम् । उत अथवा । हे विप्रेति हे अर्हत्तमेति च सम्बोधनद्वयेन दानस्य सत्पात्रत्व सूचयति ॥३२॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ अष्टादशो गतो वामनाविर्भावनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥

---

१ 'गा काञ्चन गुणवद्धाऽथ वस्त्र मृष्ट तथाऽन्नमुत वा विप्रकन्याम्' इति पाठान्तरम् ।

हरिणा याचितं यत्तु बलिना तत्प्रतिश्रुतम् ॥ शुक्रेण वारितं चेति शूनविंशे निरूप्यते ॥ १॥ इत्युक्तविधं धर्मयुक्तं ससूनृतं यथार्थं मधुरं च वैरोचने-र्विरोचनपुत्रस्य बलेर्वाक्यं निशम्य श्रुत्वा प्रीतः सन् भगवांस्तं प्रतिनन्द्य श्लाघ्येद वक्ष्यमाणमब्रवीत् ॥ १ ॥ तदेवाह— वच इति षोडशभिः । हे जनदेव तवैतद्वचः सूनृतं सत्य धर्मयुक्तं च तव कुलस्योचितं योग्यं च तव यशस्करं यशोविस्तारकं च। उचितत्वे हेतुं सूचयंस्तं विशिनष्टि— यस्य तवैहिकव्यवहारे भृगवः शुक्रादयः प्रमाणम्। साम्पराये परलोकसाधने च पितामहः प्रह्लादः प्रमाणम् । तत्र हेतुमाह— कुलवृद्ध इति । वृद्धत्वेऽपि विषयासक्तश्च तत्कथं प्रमाणं स्यादत आह— प्रशान्त इति, कामक्रोधाद्युद्वेगरहितो भगवत्परत्वादित्यर्थः ॥ २ ॥ अस्मिन् त्वदीये कुले

श्रीशुक उवाच ॥ इति वैरोचनेर्वाक्यं धर्मयुक्तं ससूनृतम् ॥ निशम्य भगवान् प्रीतः प्रतिनन्द्येदमब्रवीत् ॥ १ ॥
श्रीभगवानुवाच ॥ वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ॥ यस्य प्रमाणं भृगवः साम्पराये
पितामहः कुलवृद्धः प्रशान्तः ॥ २ ॥ नह्येतस्मिन् कुले कश्चिन्निस्सत्त्वः कृपणः पुमान् ॥ प्रत्याख्याता प्रतिश्रुत्य यो
वाऽदाता द्विजातये ॥ ३ ॥ न सन्ति तीर्थे युधि वाऽर्थिनाऽर्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः ॥ युष्मत्कुले
यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ॥ प्रतिवीरं
दिग्विजये नाविन्दत गदायुधः ॥ ५ ॥

कश्चिदपि पुमान् निरसत्वः कृपणश्च नहि जातो न चाधुना वर्तते । एवं कालत्रयेऽपि तदभावज्ञापनाय क्रियापदप्रयोगः। तत्र निरसत्त्वस्य लक्षणमाह— यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्ता धैर्यादिरहितः। कृपणस्य लक्षणमाह— प्रथमं दास्यामीति प्रतिश्रुत्य प्रतिज्ञाय यो वा अदाता लोभाभिभूत इत्यर्थः ॥ ३ ॥ तीर्थे दानावसरे युधि वा अर्थिनाऽर्थिताः याचकेन याचिताः सन्तो ये तु पराङ्मुखाः प्रत्याख्यानकर्तारो भवेयुस्तथाभूता अमनस्विनः धैर्यरहिता नृपा युष्मत्कुले न सन्तीत्यन्वयः। यत् यस्मिन् कुले अमलेन शुद्धेन यशसा प्रह्लाद उद्भाति चकास्ति । तत्र दृष्टान्तमाह— खे आकाशे उडुपश्चन्द्रो यथा भाति तथेति ॥ ४ ॥ युधि पराङ्मुखा न सन्तीत्येतदेवोपपादयति— यत इत्यादिना । यतो यस्मिन् कुले जातो हिरण्याक्षः गदैवायुधं यस्य स एकः असहाय एव दिग्विजये निमित्ते कृत्स्नां महीं चरन् पर्यटन् प्रतिपक्षं वीरं न लेभे ॥ ५ ॥

१ ' तीर्थेऽर्थिना ब्राह्मणेन, युद्धेऽर्थिना क्षत्रियेणेत्यर्थं । २ तीर्थेऽमनस्विन कृपणचित्ता इत्यर्थोज्ज्ञेयम् ।

क्ष्मोद्धारे भूम्या उद्धरणसमये आगतं यं हिरण्याक्ष विष्णुर्धृतवराहरूपः कृच्छ्रेणातिप्रयासेन विनिर्जित्य हत्वाऽपि तस्य भूरि अधिकं वीर्यमनुस्मरन् आत्मानं जयिन न मेने इत्यन्वयः ॥ ६ ॥ तस्य हिरण्याक्षस्य वधं श्रुत्वा तस्य भ्राता हिरण्यकशिपुः पुरा क्रुद्धः सन् भ्रातृहणं भ्रातुर्हन्तारं विष्णुं हन्तुं हरेर्विष्णोर्निलयं स्थानं जगामेत्यन्वयः ॥ ७ ॥ शूलपाणिं कृतान्तवत् मृत्युमिव तं हिरण्यकशिपुमायान्तं समालोक्य मायाविनां वरः श्रेष्ठः कालज्ञः तत्कालकर्तव्याभिज्ञो विष्णुश्चिन्तयामास ॥ ८ ॥ तत्कृतां चिन्तामेव दर्शयति— अहं यतो यतो यत्र यत्र गमिष्यामि तत्र सर्वत्रासौ हिरण्यकशिपुरपि आगमिष्यत्येव। तत्र दृष्टान्तमाह— मृत्युरिति। प्राणिनो यत्र यत्र गच्छन्ति तत्र तेषां मृत्युरपि यथा गच्छति तद्वत्, अतोऽहमस्य हृदयमेव प्रवेक्ष्यामि। तर्हि सुतरा तेन गृहीतः स्यामित्याशङ्क्याह— पराग्दृश इति, बहिर्दृष्टित्वादन्तस्स्थं मा न द्रक्ष्यतीत्याशयः ॥ ९ ॥ असुरेन्द्र हे बले स विष्णुरेवं

यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ॥ नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥ निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ॥ हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥ तमायान्तं समालोक्य शूलपाणिं कृतान्तवत् ॥ चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥ यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ॥ अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र ॥ श्वासानिलान्तर्हितसूक्ष्मदेहस्तत्प्राणरन्ध्रेण विविग्नचेताः ॥ १० ॥ स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद ॥ क्ष्मां द्यां दिशः खं विवरान् समुद्रान् विष्णुं विचिन्वन्न ददर्श वीरः ॥ ११ ॥ अपश्यन्निति होवाच मयाऽन्विष्टमिदं जगत् ॥ भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥ १२ ॥

निश्चित्य विविग्नं भयेन कम्पितं चेतो यस्य सः। तच्छ्वासानिलस्यान्तर्हितः सूक्ष्मो देहो यस्य तथाभूतः सन् तस्य प्राणरन्ध्रेण नासिकामार्गेण आधावतो वेगेनागच्छतो रिपोः शरीरं निर्विविशे इत्यन्वयः ॥ १० ॥ ततश्च स हिरण्यकशिपुः शून्यं तद्रहितं तस्य विष्णोर्निकेतं स्थानं परिमृश्य सर्वतोऽन्विष्य तमपश्यमानः कुपितः सन् ननाद, जितं मयेत्युद्घोषितवानित्यर्थः। ततश्च पुनः क्ष्मां पृथिवीं गा दिव दिशः खमन्तरिक्ष विवरान् अतलादीन् समुद्रांश्च विचिन्वन्नपि स वीरो विष्णुं न ददर्श ॥ ११ ॥ तमपश्यंश्चेति वक्ष्यमाणं ह निश्चितमुवाच। तदेवाह— मयेदं सर्वमपि जगत् अन्विष्टमन्वेषितं तथापि यतो मे भ्रातृहा विष्णुः क्वापि न दृश्यते अतः पुमान् यतो यं प्राप्य पुनर्नावर्तते तं मृत्युमेवासौ नून गतः प्राप्त इत्यन्वयः ॥ १२ ॥

१ विविग्न अतिकम्पित चेतो यस्य। अविकम्पितचित्त इति वास्तवोऽर्थ इति श्रीधरीयव्याख्यानम्, विशब्दस्य निषेधार्थत्वात्।

अत्र भगवत्स्थानं श्वेतद्वीपादि ज्ञेयम्, शापवशाद्वैकुण्ठात्पतितस्य दैत्यत्वं प्राप्तस्य तत्र गमनासम्भवात्। तत्र भगवद्दर्शनं त्वन्तर्धानवशात् तदानीं सद्भावस्यानभिप्रेतत्वात्। तच्छरीरप्रवेशस्त्वन्तर्यामितया विद्यमानत्वात्। तस्य भयप्रदर्शनं स्तुत्यर्थम्। मृत्य्वादिकथनं त्वज्ञानादभिमानमात्रादिति ज्ञेयम्। एवं तदा तदन्वेषणान्निवृत्तोऽपि पुनः स्वमृत्युपर्यन्तं तद्वैरं कृतवानित्याशयेनाह— वैरानुबन्ध एतावानिति। देहिनां देहाभिमानिना कियानित्यपेक्षायामाह— आमृत्योरिति, मरणपर्यन्त इत्यर्थः। तत्र हेतुमाह— अज्ञानेति। यतो वैरं क्रोधाद्भवति क्रोधश्चात्मतत्त्वाज्ञानप्रभवः देहादावहमित्यभिमानेन उपबृंहितः प्रवृद्धश्च। अतः अज्ञाननिवृत्त्यभावान्मरणपर्यन्तं वैरमनुवर्तते इत्याशयः ॥ १३ ॥ एवं पूर्वजान् स्तुत्वा तत्पितरं स्तौति— पितेति। प्रह्लादस्य पुत्रस्ते तव पिता विरोचनस्तु तद्विद्वान् द्विजरूपधारिणो देवा एवैते न तु द्विजा इति जानन्नपि देवैर्याचितः सन् स द्विजलिङ्गेभ्यो ब्राह्मणवेषधारिभ्यो देवेभ्यः स्वकीयमायुरदादित्यन्वयः। तत्र हेतुमाह— द्विजवत्सल इति ॥ १४ ॥ साक्षात्तमेव प्रशंसति— भवानिति। गृहमेधिभिर्गृहस्थैर्ब्राह्मणैः शुक्रादिभिः पूर्वजैर्विरोचनादिभिः उद्दामा विपुला कीर्तिर्येषां तैरन्यैश्च शूरैराचरितानन्नुष्ठितान् धर्मान् भवानास्थितः, अनुष्ठितवानित्यर्थः ॥ १५ ॥ एवं प्रतिश्रुताप्रत्याख्यानाय पित्रादिसहितं दातारं स्तुत्वा याचते— तस्मादिति। तस्मात् एतादृशकुले प्रसूतत्वाद्धर्मिष्ठत्वाच्च वरदश्रेष्ठात् त्वत्तोऽहं ईषन्महीं पृथ्वीं वृणे याचे। कियतीत्यत्राह— पदानीति। प्रत्याख्यानं तव नोचितमिति सूचयन् सम्बोधयति— दैत्येन्द्रेति। मम पदा पादेन सम्मितानि परिच्छिन्नानि त्रीणि पदानि त्रिपदपरिमितामित्यर्थः। इदं च त्रिविक्रमपदाभिप्रायेण, नचानृतवादः, तत्रापि स्वपदत्वानपगमात् ॥ १६ ॥ हे राजन् जगदीश्वरात् बहुदाने समर्थादपि ते त्वत्तोऽन्यत् पादत्रयपरिमितभूमेरधिकं न कामये नेच्छामि। समृद्धोऽपि कृपणश्चेत्तर्हि ततो याचनं

वैरानुबन्ध एतावानामृत्योरिह देहिनाम् ॥ अज्ञानप्रभवो मन्युरहम्मानोपबृंहितः ॥ १३ ॥ पिता प्रह्लादपुत्रस्ते तद्विद्वान् द्विजवत्सलः ॥ स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात् स याचितः ॥ १४ ॥ भवानाचरितान् धर्मानास्थितो गृहमेधिभिः ॥ ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥ तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात् ॥ पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम ॥ १६ ॥ नान्यत्ते कामये राजन् वदान्याज्जगदीश्वरात् ॥ नैनः प्राप्नोति वै विद्वान् यावदर्थप्रतिग्रहः[2] ॥ १७ ॥

१ एव मृत्युपर्यन्तमखण्ड विष्णौ वैर यत्कृतवास्तदुचितमेव तस्याप्रतिद्वन्द्वमहाबलपराक्रमस्य शूराहम्मानविजृम्भितक्रोधानुबन्धस्य कथ नामासौ शूरशिरोमणिर्जीवन्नेव कातरवद्वैरमुपेक्षितवानित्याशङ्क्याऽऽह-वैरानुबन्ध एतावानामृत्योर्भवति। देहिना देहे निगूढाभिमानवता शूराणा तथाऽहम्मानेनोपबृंहितो मन्युश्च भवत्येव। यतोऽज्ञानप्रभव अज्ञाननिवृत्तेः प्राक् पौरुषत्यागो मान्द्यमेवेत्यर्थ इति श्रीधरस्वामिना विवृतम्। २ 'परिग्रह' इति सुबोधिनीपाठ।

व्यर्थमेवेत्यत आह— वदान्यादिति, अत्युदारचित्तादित्यर्थः । कुतोऽधिकं नेच्छसीत्यत आह— नेति । यावदर्थस्य उपयुक्तार्थस्यैव प्रतिग्रहो यस्य स एनः प्रतिग्रहनिमित्तं पापं नैव प्राप्नोति, अन्यस्तु तत्प्राप्नोतीत्यर्थः । वै अवधारणे । तर्हि कथं लोकोऽधिकं याचते इत्यपेक्षायामेतत्सिद्धान्ताज्ञानादित्याशयेनाह— विद्वानिति ॥ १७ ॥ एवं याचितस्तत्प्रभावानभिज्ञो बलिराह— अहो इति त्रिभिः । हे ब्राह्मणदायाद ब्राह्मणपुत्र तव वाचस्तु वृद्धानां सम्मताः प्रशस्ततयाऽभिमताः । अथापि त्वं बालः- हेतुगर्भविशेषणमिदम्- अतएव बालिशमतिः बालिशानामज्ञानामिव मतिर्यस्य सः । अतएव स्वार्थे स्वप्रयोजनं प्रति तु यथावत्त्वमबुधः अज्ञ एव । इत्याक्षेपहेतुर्गर्वातिरेक एव 'लुब्धार्थो कस्मात्तं बबन्ध' इति राज्ञा पृष्टो बलिबन्धने हेतुरिति ज्ञेयम् ॥ १८ ॥ अबुधत्वमेवाह— मामिति । लोकानां त्रयाणां एकमद्वितीयमीश्वरं स्वामिनं अतएव द्वीपदाशुषं जम्ब्वादेर्द्वीपस्य दातारं दातुं समर्थं मां वचोभिः समाराध्य प्रसाद्य यो भवान् पदत्रयं स्वपदत्रयपरिमितं भूभागं वृणीते स अबुद्धिमानित्यन्वयः ॥ १९ ॥ यस्मात्पुमान् मा

बलिरुवाच ॥ अहो ब्राह्मणदायाद वाचस्ते वृद्धसम्मताः ॥ त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥ १८ ॥
मां वचोभिः समाराध्य लोकानामेकमीश्वरम् ॥ पदत्रयं वृणीते योऽबुद्धिमान् द्वीपदाशुषम् ॥ १९ ॥ न पुमान् मामुपव्रज्य भूयो याचितुमर्हति ॥ तस्माद्वृत्तिकरीं भूमिं बटो कामं प्रतीच्छ मे ॥ २० ॥ श्रीभगवानुवाच ॥ यावन्तो विषयाः श्रेष्ठास्त्रिलोक्यामजितेन्द्रियम् ॥ न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥ २१ ॥ त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्यते ॥ नववर्षसमेतेन सप्तद्वीपवरेच्छया ॥ २२ ॥ सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः ॥ अर्थैः कामैर्गता नान्तं तृष्णाया इति नः श्रुतम् ॥ २३ ॥

उपव्रज्य याचित्वा भूयोऽन्यं याचितुं नार्हति तस्मात् हे बटो कामं यथेच्छं वृत्तिकरीं जीविकासम्पादनयोग्यां विपुलां भूमिं मे मत्तः प्रतीच्छ गृहाण । अतएव यथेच्छं पादप्रसारणेनाक्रमिष्यति ॥ २० ॥ एवमधिकयाचने प्रेरितोऽपि भगवान् स्वनिस्स्पृहत्वमेवाविष्कुर्वन्नाह— यावन्त इति सप्तभिः । दाने तु तव सङ्कोचो नास्त्येवेति सूचयन् सम्बोधयति— नृपेति । त्रिलोक्यां यावन्तः श्रेष्ठा विषया देशास्ते सर्वेऽपि प्रतिगृहीताः सन्तः अजितेन्द्रियं पुरुषं पूरयितुमलम्बुद्धिं कारयितुं न शक्नुवन्तीत्यन्वयः ॥ २१ ॥ यदुक्तं द्वीपदाशुषमिति तत्राह— त्रिभिः पदैः त्रिपदपरिमितभूभागेन यद्यसन्तुष्टस्तदा नववर्षसमेतेन द्वीपेनापि न पूर्यते । तत्र हेतुः— सप्तानां द्वीपवराणामिच्छयेति ॥ २२ ॥ तर्हि सप्तद्वीपां महीं प्रतीच्छेत्यत आह— सप्तेति । वैन्यः पृथुः गयश्चादिर्येषां ते नृपाः सप्तानां द्वीपानामधिपतयोऽपि अर्थैः कामैश्च तृष्णाया अन्तं न गताः अर्थकामतृष्णाया अवधिं न प्राप्ता इति नोऽस्माभिः श्रुतमित्यन्वयः ॥ २३ ॥

१ बट्युक्ते: प्राक् ' अधिक योऽभिकाङ्क्षेत स स्तेनो दण्डमर्हति ' इत्यर्धमधिकं क्वचित् । २ ' प्रेष्ठा ' इति श्रीधरस्वाम्यादिसम्मत पाठ: ।

अतो यो यदृच्छया प्रारब्धवशादुपपन्नेन प्राप्तेनान्नादिना सन्तुष्टः सन्सुखं यथा स्यात्तथा वर्तते । यस्त्वजितात्मा अवशीकृतेन्द्रियान्तःकरणादिः स उपसादितैः प्राप्तैस्त्रिभिर्लोकैरपि असन्तुष्टो न सुखं वर्तते ॥ २४ ॥ सन्तोषासन्तोषौ न केवलं सुखदुःखमात्रहेतू किन्तु संसृतिमुक्तिहेतू अपीत्याह— पुंस इति । अर्थकामयोः विषययोः योऽसन्तोषः स पुंसः संसृतेः जन्ममरणादिसंसारस्य हेतुः, यश्च यदृच्छयोपपन्नेन सन्तोषः स तस्य मुक्तये मुक्तिहेतुः स्मृतः ॥ २५ ॥ यदृच्छया लब्धेन तुष्टस्य विप्रस्य तेजो वर्धते । असन्तोषात्तु तत्तेजः प्रशाम्यति विनश्यति । तत्र दृष्टान्तमाह— यथाऽम्भसा आशुशुक्षणिरग्निः प्रशाम्यति तद्वदिति ॥ २६ ॥ तस्मात् सन्तोषस्यैव श्रेयस्करत्वात् वरदश्रेष्ठादपि त्वत्तः त्रीणि पदान्येव त्रिपदपरिमिता भूमिमेव वृणे । एतावतैव एतावद्भूमिलाभेनैव अहं सिद्धः कृतार्थः । तत्र हेत्वन्तरमाह— यावत्प्रयोजनमेव वित्तं सुखदं भवति । अधिकस्य चिन्ताशोकक्लेशा-

**यदृच्छयोपपन्नेन सन्तुष्टो वर्तते सुखम् ॥ नासन्तुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४ ॥ पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः ॥ यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ २५ ॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते ॥ तत्प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणिः ॥ २६ ॥ तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात् ॥ एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥ श्रीशुक उवाच ॥ इत्युक्तः स हसन्नाह वाञ्छितं प्रतिगृह्यताम् ॥ वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८ ॥ विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम् ॥ जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदांवरः ॥ २९ ॥ शुक्र उवाच ॥ एष वैरोचने साक्षाद्भगवान् विष्णुरव्ययः ॥ कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३० ॥**

दिहेतुत्वादित्याशयः ॥ २७ ॥ भगवतैवमुक्तः स बलिर्हसन् सन् वाञ्छितं प्रतिगृह्यतामित्याह— एवमुक्त्वा च वामनाय भूमिं दातुं जलभाजनं जग्राह सङ्कल्पार्थं जलपात्रं गृहीतवान् ॥ २८ ॥ तदा विष्णवे वामनाय क्ष्मा भूमिं दास्यन्तं दातुमुद्यतं असुरेन्द्रं बलिं विष्णोश्चिकीर्षितं सर्वस्वापहारलक्षणं जानन्नुशनाः शुक्रः प्राहेत्यन्वयः । हठाद्वारणे हेतुमाह— शिष्यमिति । तच्चिकीर्षितज्ञाने हेतुमाह— विदा ज्ञानिनां वरः श्रेष्ठः सर्वज्ञ इत्यर्थः ॥ २९ ॥ तदुक्तिमेवाह— एष इति यावदध्यायसमाप्ति । हे वैरोचने इति सम्बोधयन् यथा देवैस्तव पितुश्छलो जातस्तथैवानेन तवापीति सूचयति । एष वामनरूपः देवाना कार्यसाधकः सन् कश्यपादितिभ्या जातः साक्षाद्विष्णुरेव । नचायं जेतुं शक्य इत्याशयेनाह— अव्यय इति । तत्र हेतुमाह— भगवानिति ॥ ३० ॥



१ 'वाञ्छात' इति पाठान्तरम् ।

स्वानर्थमजानता त्वया यदेतस्मै प्रतिश्रुतं भूमिदानं प्रतिज्ञात तदहं साधु समीचीनं न मन्ये। तत्र हेतुमाह— दैत्यानां महाननयः क्लेशः उपगतो भूमिदानात्प्राप्त इत्यर्थः ॥ ३१ ॥ तदेव स्पष्टयति— एष इति। मायया स्वेच्छया माणवकः ब्राह्मणरूप एष हरिस्ते तव स्थानादिक आच्छिद्यापहृत्य शक्राय दास्यतीत्यन्वयः। ऐश्वर्यं स्वर्गराज्यादिकम्। श्रियं धनादिसम्पत्तिम्। ततं व्याप्तं यशः ॥ ३२ ॥ ननु मया पदत्रयमेव प्रतिश्रुतं न ततोऽधिकमिति कथं सर्वस्वहानिरित्यत आह— त्रिभिरिति। विश्वकायो विश्वरूपो भूत्वा त्रिभिः क्रमैः पादविन्यासैरिमान् त्रीन् लोकान् क्रमिष्यति परिच्छिद्य ग्रहीष्यतीत्यर्थः। गृह्णात्विति चेत्तत्राह— सर्वमिति। एवं निश्चयस्तव मूर्खत्वादेव देहनिर्वाहस्यापि दुष्करत्वादिति क्रोधेन सम्बोधयति— मूढेति ॥ ३३ ॥ तथापि प्रतिश्रुतं सम्पादनीयमेवेत्यत्राह— क्रमत इति। एकेन पदा पादन्यासेन गां भूमिं क्रमतो द्वितीयेन पादन्यासेन दिव स्वर्गं क्रमतः कायेन

प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ॥ न साधु मन्ये दैत्यानां महानुपगतोऽनयः ॥ ३१ ॥ एष ते स्थानमैश्वर्यं श्रियं तेजो यशस्ततम् ॥ दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥ त्रिभिः क्रमैरिमॉंल्लोकान् विश्वकायः क्रमिष्यति ॥ सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम् ॥ ३३ ॥ क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ॥ खं च कायेन महता तार्तीयस्य कुतो गतिः ॥ ३४ ॥ निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम् ॥ प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥ ३५ ॥ न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ॥ दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥ ३६ ॥ धर्माय यशसेऽर्थाय कामाय स्वजनाय च ॥ पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ॥ ३७ ॥

खमन्तरिक्षं च क्रमतः क्रममाणस्य विभोर्विश्वरूपस्य भगवतः तार्तीयस्य तृतीयपादन्यासस्य कुतः क्व गतिः स्थानम्[1]। एवमपि प्रतिश्रुतं न सम्पादितं भवतीत्याशयः ॥ ३४ ॥ अशक्यत्वात्तन्मा भूत् तथा सति परलोकहानिस्तु तावन्न स्यादित्या शङ्क्याह— निष्ठामिति। हि अवधारणे। ते तव निष्ठां स्थितिं नरके एव मन्ये। तत्र हेतुमाह—प्रतिश्रुतस्याप्रदातुरिति। उक्तमेव स्पष्टयति— यो भवान् प्रतिश्रुतं प्रतिपादयितु पूरयितुमनीशः असमर्थस्तस्येत्यर्थः ॥ ३५ ॥ तथापि सर्वस्वदानाल्लोके कीर्तिस्तावद्भविष्यत्येवेत्यत आह— न तद्दानमिति। येन दानेन वृत्तिर्जीविका विपद्यते विनश्यति तद्दानं आर्या न प्रशंसन्तीत्यन्वयः। तत्र हेतुमाह— दानमिति। यतो लोके वृत्तिमतः जीविकावत एव पुंसः सम्बन्धीनि दानादीनि भवन्ति, नान्यस्येत्यर्थः। तपश्चित्तैकाग्र्यम्। कर्म पूर्तम् ॥ ३६ ॥ अतो विद्वान् धर्माय पुण्योत्पत्तये, यशसे सत्कीर्तिलाभाय, अर्थाय धनादि-

१ क्रमिष्यति मापयिष्यतीति सुबोधिन्याम्। २ ' यशः श्रुतम् ' इति पाठः।

वृद्ध्युपयोगिव्यापाराय, कामाय स्वभोगाय, स्वजनाय स्वजनपरितोषाय चेत्येवं पञ्चधा वित्तं धनं विभजन्निहास्मिन् लोके अमुत्र परलोके च मोदते, सुखमनुभवतीत्यर्थः ॥ ३७ ॥ ननु तर्हि प्रतिश्रुत्य नेति कथं वाच्यमित्यत्राह— अत्रेति सार्धैः षड्भिः । अत्रापि सत्यानृतव्यवस्थायामपि बह्वृचैर्यद्गीतं तन्मे मत्तः कथयतो हे असुरसत्तम त्वं शृणु । बह्वृचश्रुत्या हि प्रथमं "ॐमिति सत्यं नेत्यनृतम्" इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितं अनृतं च निषिद्धम् । तदनन्तरं च "पराग्वा एतद्रिक्तमक्षरम्" इत्यादिना सत्ये दोषान् अनृते च गुणानुक्त्वा "तस्मात्काल एव दद्यात्काले न दद्यात् तत्सत्यानृते मिथुनीकरोति" इत्युपसंहारेण वृत्तिसङ्कटादिष्वनृतमप्यनुज्ञातं तामिमं श्रुत्यर्थं दर्शयन्नाह—ओमित्यङ्गीकारेण यत्प्रोक्तं तत्सत्यम् । नेति यदाह तद्धि तदेवानृतम् ॥ ३८ ॥ तत्सत्यं त्वीषदनृतं विना नैव सिद्ध्यतीत्याशयेनाह— सत्यमिति ।

अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम ॥ सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत् ॥ ३८ ॥ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य जीवतः ॥ वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥ तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात् ॥ एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥

आत्मवृक्षस्य देहरूपवृक्षस्य जीवतः सत्यं पुष्पफलं विद्यात् जानीयात् । जीवत इत्यत्र गीयत इति पाठे तु श्रुतिकर्तृकं गानं ज्ञेयम् । यद्यपि श्रुत्या "वाचः सत्यं पुष्प फलं च" इत्युक्तं तथापि वाचो देहनिर्वाहाधीनत्वादात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तम् । भवतु पुष्पफलस्थानीयं सत्यं ततः किमत आह— वृक्षे देहे अजीवति तत् पुष्पफलं न स्यात् । अतो देहोऽनृतेन रक्षणीय इत्याह— अनृतं त्वात्मनो देहस्य मूलमिति । तथाच श्रुतिः— "दयेत त्वेतेन" इति । एतेन त्वनृतेन दयेत सङ्कटेष्वात्मानं रक्षेदित्यर्थः ॥ ३९ ॥ एतदेव दृष्टान्तेन स्पष्टयति— तत् तत्र यथा उत्पाटितमूलो वृक्षः शुष्यति अचिरादेवोद्वर्तते पतति च, एवमेव नष्टमनृतं यस्य स आत्मा देहः सर्वस्वदानात् सद्य एव शुष्येदत्र संशयो नास्ति ॥ ४० ॥

१ आत्मवृक्षस्य गीयत इति पाठान्तरम् । २ यद्यपि च श्रुत्या "एवमेवानृत वदन्नात्मानमाविर्मूल करोति इत्येव निन्दयाऽनृत निषिद्ध तथाप्युपसहारानुसारेण तत्केवलानृतविषयमित्यभिप्रेत्यैव" व्याख्यातम् । दयेत त्वेतेनेति च तथैवोक्ते । तथा च श्रुति "ओमिति सत्य नेत्यनृत तदेतत्पुष्प फल वाचो यत्सत्य स हेश्वरो यशस्वी कल्याणकीर्तिर्भविता पुष्प हि फल वाच सत्य वदत्यथैतन्मूल वाचो यदनृत तद्यथा वृक्ष आविर्मूल शुष्यति स उद्वर्तत एवमेवानृत वदन्नाविर्मूलमात्मान करोति स शुष्यति स उद्वर्तते तस्मादनृत न वदेद्दयेत त्वेतेन" इति एतेनानेन त्वनृतेन दयेत सङ्कटेष्वात्मान रक्षेदिति श्रुत्यर्थ इति श्रीधरस्वामिनाऽधिक व्याख्यातम् ।

सर्वथा सत्यवचने देहोऽपि न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषाननृतस्य गुणांश्चाह— परागिति द्वाभ्याम्। ॐ दास्यामीत्यङ्गीकारार्थक यदक्षर तत् पराक् अर्थं गृहीत्वा परा दूरमञ्चतीति पराक् अतएव रिक्तं अर्थशून्यम्। तत् स्पष्टयति— अपूर्णमिति। यद्वा परान् अञ्चति वशीकरोतीति पराक्, धनं रिच्यतेऽनेनेति पराग्रिक्तं अतएवापूर्णमपूर्तिकरमेव। नचैतद्युक्तं दृश्यमानत्वादित्याशयेनाह— यदिति। अर्थिने पुमान् यदा यत्किञ्चिदपि ओमिति दास्यामीति ब्रूयात् तदा तेनार्थेन रिच्येत न्यूनो रहितो भवेदेव। वै अवधारणे ॥ ४१ ॥ किञ्च भिक्षवे सर्वं ओं कुर्वन् दास्यामीत्यङ्गीकुर्वन् आत्मने स्वस्मै कामेन भोगेन अलं पर्याप्तो न भवति। अथ तस्मात् यत् नेत्यनृतं वचस्तदेतत् पूर्णं, अर्थव्ययाभावात्। अभ्यात्मं चेति चकारान्वयः। आत्मनोऽभिमुखं अन्यस्यार्थमाकर्षतीत्यभ्यात्मम्। यो हि नित्यं मम किञ्चिदपि नास्ति सीदामीति ब्रूते स हि तेनानृतेन परेषामर्थानाकर्षतीति प्रसिद्धम् ॥ ४२ ॥ तर्हि किं सर्वदा सर्वत्र नेत्येव वक्तव्यमित्यपेक्षायामाह— सर्वमिति। यः सर्वं न किञ्चिदपि न दास्यामीत्यनृतं ब्रूयात् स दुष्टा कीर्तिर्यस्य तादृशः सन्

पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति ॥ यत्किञ्चिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ॥ ४१ ॥ भिक्षवे सर्वमोङ्कुर्वन्नालं कामेन चात्मने ॥ अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ॥ ४२ ॥ सर्वं नेत्यनृतं ब्रूयात् स दुष्कीर्तिः श्वसन् मृतः ॥ ४३ ॥ स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे ॥ गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे वामनयाच्ञा निरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥

श्वसन् जीवन्नपि मृत एव। तथा च 'तस्मात्काल एव दद्यात् काले न दद्यात्' इत्यादिशास्त्रानुसारेण कदाचित्किञ्चिद्देयं कदाचित्किञ्चिन्न देयं सर्वस्वं तु नैव देयमिति सिद्धम् ॥ ४३ ॥ ननु तर्हि प्रतिश्रुतस्यादाने सर्वथाऽनृतमेवेत्याशङ्क्य वृत्तिसङ्कटादिष्वनृतं न दोषायेत्युपसंहरति— स्त्रीष्विति। स्त्रीषु प्रोत्साहनेन वशीकारार्थम्, नर्मणि परिहासे, विवाहे वरादिस्तुतौ, वृत्त्यर्थे जीविकार्थे, स्वस्य प्राणसङ्कटे प्राप्ते तत्परिहारार्थम्, गवा ब्राह्मणाना च हितार्थे, हिंसाया यस्य कस्यचिदपि प्राप्ताया च अनृतं मिथ्याभाषणं जुगुप्सितं निन्दितं न स्यात्। तथाचाह याज्ञवल्क्यः— 'वर्णानां हि वधो यत्र तत्र साक्ष्यनृत वदेत्' इति ॥ ४४ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ ऊनविंशो गतो वृत्तिं हरियाच्ञानिरूपकः ॥ ॥ ७ ॥ ॥

१ तथाच श्रुतिः—"अथैतत्पूर्णमभ्यात्म यन्नेति स यत्सर्वं नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्" इति। २ तथाच श्रुति "तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति" इति।

गुरुवाक्यमनादृत्य भूदान बलिना कृतम् ॥ वामनो विश्वरूपोऽभूदिति विंशे निरूप्यते ॥ १ ॥ ॥ हे राजन् कुलाचार्येण शुक्रेणैवं भाषितः उक्तो गृहपतिर्यजमानो बलिः क्षणं तूष्णीमवहितः विचारपरो भूत्वा तं गुरुमुवाचेत्यन्वयः ॥ १ ॥ कर्हिंचिदपि योऽर्थादिकं न बाधेत सोऽयं गृहमेधिना धर्म इति भगवता ज्ञानिना त्वया सत्यं प्रोक्तमित्यन्वयः ॥ २ ॥ तथापि स च सर्वलोकेऽत्युदारतया प्रसिद्धोऽहं ददामीति प्रतिश्रुत्य वृत्तिलोभेन कितवो यथा वञ्चक इव द्विजं कथं प्रत्याचक्षे न दास्यामीति वदामीत्यन्वयः । मम कुलस्यापि अनुचितमेतदित्याशयेनाह— प्राह्लादिरिति ॥ ३ ॥ नन्वप्रत्याख्याने दोषा उक्ता एव तत्राह— नहीति । असत्यात् अनृतभाषणात् पर उत्कृष्टोऽन्यः अधर्मो नह्यस्ति अतः अलीकपरमनृतवादिनं नरमृते विना सर्वं मेरुमन्दरादिकं वोढुं धर्तुमलं समर्थमात्मानं मन्ये इतीयं भूः ह स्फुटमुवाचेत्यन्वयः ॥ ४ ॥ तर्हि तव नरकप्राप्त्याद्यनर्थो भवेदेवेत्यत्राह— नेति । विप्रप्रलम्भनात् अनृतभाषणेन विप्रवञ्चनात् यथाऽहं बिभेमि तथा निरयादिभ्यो न बिभेमीत्यन्वयः । अधन्यात् दारिद्र्यात् । असुखार्णवात् दुःखसमूहात् ॥ ५ ॥ किञ्च यद्यत् धनादिकं तत्सर्वं सम्परेतं मृत पुरुषमस्मिन्नेव लोके हास्यति त्यक्ष्यति तत्किमिति जीवता स्वयमेव न देयमिति शेषः । तथापि तावद्वृत्तिसङ्कटपरिहारार्थं किञ्चिदीयतामित्यत्राह— तस्येति । येन दत्तेनार्थेन चेत् यदि विप्रो न तुष्येत्तर्हि तस्यार्थस्य त्यागे दाने किं निमित्तं किं फलम् ? न किञ्चित्, याचितादल्पस्य दाने विप्रस्य सन्तोषाभावात् । तद्दानं व्यर्थमेव स्यादतस्तद्याचितं सर्वमेव देयं न च किञ्चिदिति भावः ॥ ६ ॥ ननु यदि किञ्चिद्दत्तेनासन्तोषः सर्वस्वदाने च वृत्तिसङ्कटस्तदा तत्परिहाराय किमपि न देयमित्यत आह— श्रेय इति । साधवः स्वपरकार्यसाधनस्वभावा विवेकिनो दध्यङ्शिबिप्रभृतयो दुस्त्यजैरसुभिः प्राणैरपि भूताना श्रेय उपकार कुर्वन्ति तर्हि धरादिषु को विकल्पः धरादिप्रदाने कः संशय इत्यर्थः ॥ ७

श्रीशुक उवाच ॥ बलिरेवं गृहपतिः कुलाचार्येण भाषितः ॥ तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥ १ ॥
बलिरुवाच ॥ सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ॥ अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥ २ ॥ स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ॥ प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥ ३ ॥ नह्यसत्यात् परोऽधर्म इति होवाच भूरियम् ॥ सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् ॥ न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलम्भनात् ॥ ५ ॥ यद्यद्धास्यति लोकेऽस्मिन् सम्परेतं धनादिकम् ॥ तस्य त्यागे निमित्तं किं विप्रस्तुष्येन्न तेन चेत् ॥ ६ ॥ श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ॥ दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥

हे ब्रह्मन् इति सम्बोधनेन तव दानशूरता नास्तीति सूचयाति— यैर्दैत्येन्द्रैर्युद्धेष्वनिवर्तिभिरियं भूमिर्बुभुजे उपभुक्ता तेषां लोकान् भोगान् कालोऽग्रसीत् विनाशितवान्, भुव्यधिगतं प्राप्तं विस्तारितं वा यशः सत्कीर्तिं तु नाग्रसीत्, तच्छ्रवणात्, अतो धरादिदानेन कीर्तिरेव सम्पादनीयेत्याशयः ॥ ८॥ देहत्यागादपि धनत्यागो दुष्करस्तेनाधिका कीर्तिर्भवत्यतो मया स एव कर्तव्य इत्याशयेनाह— सुलभा इति । हे विप्रर्षे युधि अनिवृत्ताः सन्तो ये तनुं देहं त्यजन्तीति तथा ते हि लोके सुलभा बहवः । ये तु तीर्थे सत्पात्रे आयाते श्रद्धया धनं त्यजन्तीति तथा ते सुलभा न सन्ति ॥ ९॥ तर्हि निर्धनत्वेन दैन्यं स्यादित्याह— मनस्विन इति । अर्थिनां यादृशतादृशानामपि कामोपनयेन कामपूरणेन यत् दुर्गतिर्दारिद्र्येण दैन्य तन्मनस्विनो दानशूरस्य कारुणिकस्य शोभनं यशो धर्मादिहेतुत्वाद्भद्रमेव ब्रह्मविदां भवादृशां कामपूरणेन प्राप्तं दैन्यं शोभनं भवतीति कुतः किं पुनर्वक्तव्यमित्यन्वयः । ततस्तस्माद्धेतोरस्य बटोर्ब्राह्मणस्य वाञ्छितं ददामि ॥ १० ॥ ननु नायं बटुः किन्तु तव शत्रुर्देवपक्षपाती विष्णुरेवेति

**यैरियं बुभुजे ब्रह्मन् दैत्येन्द्रैरनिवर्तिभिः ॥ तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं भुवि ॥ ८ ॥ सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ॥ न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥ मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोपनयेन दुर्गतिः ॥ कुतः पुनर्ब्रह्मविदां भवादृशां ततो बटोरस्य ददामि वाञ्छितम् ॥ १० ॥ यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ॥ स एव विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥ ११ ॥ यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ॥ तथाऽप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥**

चेत्तर्हि सुतरामेव दास्यामीत्याह— यजन्तीति । आम्नायविधानकोविदाः वेदोक्तयज्ञाद्यनुष्ठानकुशला भवन्तः आदृताः सादराः सन्तः यज्ञैः क्रतुभिश्च ससोमकैश्च यागैर्यं विष्णुं यजन्ति आराधयन्ति स एष विष्णुर्मम वरदो वा परः शत्रुर्वाऽस्तु सर्वथा एतदीप्सिता क्षितिममुष्मै दास्याम्येव। अत्र त्वयाऽपि मननं कर्तव्यमित्याशयेन सम्बोधयति— मुने इति ॥ ११ ॥ तर्हि तृतीयपादस्य गत्यभावात्त्वा बध्नीयादित्याशङ्क्याह— यदिति । अनागसं निष्कपटं सर्वस्वसमर्पणेन निरपराधिनं मां यद्यप्यसौ अधर्मेण वामनं रूप प्रदर्श्य तत्परिमितपादत्रयभूमिं याचित्वा पुनर्विश्वरूपमाविष्कृत्य तत्पदा भूमिक्रमणलक्षणच्छलेन बध्नीयात्तथाप्येनं रिपुं शत्रुमपि न हिंसिष्ये न हनिष्यामि । तत्र हेतुमाह— भीतमिति, भीतवधस्यानुचितत्वात् । भीतौ ज्ञापकमाह— ब्रह्मतनुमिति ॥ १२ ॥

१ मूलगतं यदित्यव्ययम् । या दुर्गतिरित्यर्थः ।

किञ्च यत् यद्येष उत्तमश्लोकः सत्कीर्तिर्विष्णुरेव तर्हि स्वयशः स्वकीर्तिं न जिहासति त्यक्तुं नेच्छति, न विनाशयिष्यतीत्यर्थः। उत्तमश्लोकत्वात् सर्वस्वदत्तवन्त मां मत्सत्कीर्तिवितानाय बध्वापि स्वसत्कीर्तिसरक्षणाय मह्यमैश्वर्यं दास्यत्येव अन्यथा तत्सत्कीर्तिर्विनश्येदेवेति भावः। एवं दाने गुणानुक्त्वा अप्रदाने दोषमाह— हत्वेति। प्रत्याख्याने युद्धे मा मां हत्वा एना भूमिं हरेत्। तथाच धर्महानिः प्राणहानिर्यशोहानिश्चाधिका स्यात्। यदि मां हन्तुमसमर्थो विष्णोरन्यो वा तदा मया निहतो युद्धे शयीत वा। एवमपि प्रतिश्रुतादानात्तु ब्राह्मणवधाच्च नरकपातो लोकेऽसत्कीर्तिश्चेति सर्वथा प्रतिश्रुतमेव सम्पादनीयमिति भावः ॥ १३ ॥ एवमुक्तप्रकारेण अनादेशकरं स्वाज्ञोल्लङ्घिनं शिष्य गुरुरुशनाः शशापेत्यन्वयः। आज्ञोल्लङ्घने हेतुमाह— अश्रद्धितमिति, स्ववचने अजातश्रद्धमित्यर्थः। तथापि तस्य शापानर्हत्वं सूचयन् विशिनष्टि— सत्यसन्धमिति, सत्ये सन्धा अभिसन्धिः यस्य तम्। तत्र हेतुमाह— मनस्विनमिति, उदारमनस्कमित्यर्थः। तर्हि कुतः शशाप तत्राह— दैवप्रहित इति, देवकार्यसाधकभगवत्प्रेरित

एष वा उत्तमश्लोको न जिहासति यद्यशः ॥ हत्वा मैनां हरेद्युद्धे शयीत निहतो मया ॥ १३ ॥ श्रीशुक उवाच ॥
एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ॥ शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥ दृढं पण्डितमान्यज्ञः
स्तब्धोऽस्यस्मदुपेक्षया ॥ मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः ॥ १५ ॥ एवं शप्तः स्वगुरुणा सत्यान्न चलितो
महान् ॥ वामनाय ददावेनामर्चित्वोदकपूर्वकम् ॥ १६ ॥ विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी ॥
आनिन्ये कलशं हैममवनेजन्यपाम्भृतम् ॥ १७ ॥

इत्यर्थः ॥ १४ ॥ शापमेव दर्शयति— दृढमिति। दृढं यथा स्यात्तथाऽऽत्मानं पण्डितं मन्यते इति तथा। वस्तुतस्तु अज्ञ एव। अतएव स्तब्धः अनम्रः। अतएव मच्छासनातिगः ममाज्ञामतिक्रान्तवानसि। यस्त्वमेवम्भूतः स अस्माकं गुरूणामुपेक्षया अचिरात् शीघ्रमेव श्रियः त्रैलोक्याधिपत्याद्भ्रश्यसे भ्रष्टो भविष्यसीति ॥ १५ ॥ एवं स्वगुरुणा शुक्रेण शप्तोऽपि बलिः सत्यात् स्वप्रतिश्रुतात् न चलितः किन्तु वामनमर्चित्वा उदकदानपूर्वकं तस्मै एनां भूमिं ददावेवेत्यन्वयः। तत्र हेतुं सूचयन् विशिनष्टि— महानिति, यतो विवेकधैर्यौदार्यादिगुणवानित्यर्थः ॥ १६ ॥ तदेव प्रपञ्चयति— विन्ध्यावलिरिति। बलेः पत्नी विन्ध्यावलिस्तदा आगत्य अवनेजनीनां पादप्रक्षालनार्थानां अपामद्भिः भृतं पूर्णं हैमं कलशं आनिन्ये आनीतवती। तस्या अपि महाराज्ञ्याः सकलजनसमक्षे स्वयं जलकलशानयनं भक्तिवशादिति सूचयन्नाह— जालकमालिनीति। जालकं मुक्तादिरत्नविशेषस्तन्मालावती ॥ १७ ॥

ततो यजमानो बलिस्तस्य श्रीवामनस्य श्रीमत्पादयुगं मुदा हर्षेण अवनिज्य प्रक्षाल्य विश्वस्य पावनीः पापनिवर्तनेन पवित्रकर्त्रीस्तदपः पादप्रक्षालन-जलानि मूर्ध्नि अवहत् दधार ॥ १८ ॥ तदा दिवि स्थिता निर्भया देवगणा गन्धर्वादयश्च सर्वे-अपिशब्दात् शत्रुभूता-अपि मुदान्विताः हर्षपूर्णाः सन्तस्तस्य बलेः कर्म भूमिदानमार्जवमकौटिल्यं सत्येऽवस्थानं च गृणन्तः प्रशंसन्तः असुरेन्द्रं बलिं प्रसूनवर्षैर्ववृषुः आच्छादितवन्तः ॥ १९ ॥ तदा च तैर्वादिताः सहस्रशो दुन्दुभयो मुहुर्नेदुः । गन्धर्वादयो जगुश्च । किं जगुस्तदाह— मनस्विना विवेकधैर्यादिपूर्णमनस्केनानेन बलिना अन्यै-र्दुष्करं कर्तुमशक्यं कर्म कृतम् । तदेवाहुः— यत् विद्वान् देवपक्षपाती त्रिपदव्याजेन जगत्त्रयं ग्रहीष्यतीति जानन्नपि रिपवे जगत्त्रयमदादिति ॥ २० ॥ वाञ्छितं प्रतिगृह्यतामिति बलिनोक्तत्वाल्लोकत्रयस्य वाञ्छितत्वात्तत्प्रतिगृहीतुं हरेस्तद्वामनं रूपमद्भुतमाश्चर्यं यथा स्यात्तथा अवर्द्धतेत्यन्वयः। तत्र तस्य सामर्थ्यमाह— अनन्तस्येति, अनन्तशक्तिमत इत्यर्थः । अद्भुतत्वमेव स्पष्टयति— गुणत्रयात्मकमिति, गुणत्रयं गुणत्रयकार्यं जगत् आत्मनि

यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा ॥ अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥ १८ ॥ तदाऽसुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः ॥ तत्कर्म सर्वेऽपि गृणन्त आर्जवं प्रसूनवर्षैर्ववृषुर्मुदान्विताः ॥१९॥ नेदुर्मुहु-र्दुन्दुभयः सहस्रशो गन्धर्वकिम्पूरुषकिन्नरा जगुः ॥ मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम् ॥२०॥ तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम् ॥ भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत ॥ २१ ॥ काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ॥ ददर्श विश्वं त्रिगुणं गुणात्मके भूते-न्द्रियार्थाशयजीवयुक्तम् ॥ २२ ॥ रसामचष्टाङ्घ्रितलेऽथ पादयोर्महीं महीध्रान् पुरुषस्य जङ्घयोः ॥ पतत्त्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिन्द्रसेनः ॥ २३ ॥

स्वस्मिन् यस्य तत् । अतएव भूरादयो यत् यस्मिन् आसत स्थिताः ॥ २१ ॥ तदा ऋत्विगादिसहितो बलिर्महत्यो विभूतयः ऐश्वर्यादयः शक्तयो यस्य तस्य भगवतः काये शरीरे त्रिगुणं गुणत्रयकार्यभूतमेतद्विश्वं ददर्शेत्यन्वयः । तत्र तद्दर्शने तदाश्रयत्वं हेतुमभिप्रेत्याह— गुणात्मके इति । गुणत्रयपरिणामात्मकजगदाश्रयभूते इत्यर्थः । विश्वस्य त्रिगुणत्वमेव स्पष्टयति— भूतानि पृथिव्यादीनि, इन्द्रियाणि वागादीनि, अर्थाः शब्दादयः, आशयश्चतुर्विधान्तःकरणम्, जीवश्च, तैर्युक्तम् ॥ २२ ॥ तदेव प्रपञ्चयति— रसामिति पादोनैः सप्तभिः । इन्द्रस्य सेना इव सेना यस्य स इन्द्रपदे स्थितो बलिः पुरुषस्य विश्वरूपस्य भगवतः अङ्घ्रितले रसां रसातलादिलोकसप्तकं अचष्ट अपश्यत्, इति सर्वत्र द्वितीयान्तेन सम्बन्धः । अथ तथा पादयोर्महीम् । जङ्घयोर्महीध्रान् पर्वतान् । जानुनि-इत्येकवचनं जात्यभिप्रायकम्-पतत्त्रिणः पक्षिणः । ऊर्वोर्मारुतं गणं वायुसङ्घम् ॥ २३ ॥

विभोर्महतस्तस्य वाससी वस्त्रे सन्ध्यामैक्षत । गुह्ये गुदे आत्मा स्वयं मुख्यो येषां तानसुरानैक्षत । जघने प्रजापतीन् मरीच्यादीन् । नाभ्या नभः अन्तरिक्षलोकम् । कुक्षिषु इति बहुवचनं तत्र स्थानभेदसूचनार्थम्, तदधिष्ठेयानां समुद्राणां पृथक्स्थितित्वात् । उरुक्रमस्य विश्वरूपस्य उरसि च ऋक्षमालां नक्षत्रसमूहम् ॥ २४ ॥ अङ्गेति स्नेहेन सम्बोधनमाश्चर्यरूपश्रवणे तद्विश्वासार्थम् । मुरारेर्हृदि धर्मम् । स्तनयोः ऋतं च सत्यं च 'ऋतं च सूनृता वाणी सत्यं च समदर्शनम्' इत्येकादशस्कन्धीयवाक्यात्ते ज्ञेये । अथ मनसि इन्दुं चन्द्रमसम् । वक्षसि अरविन्दं कमलं हस्ते यस्यास्तां श्रियं लक्ष्मीम् । कण्ठे सामानि समस्तान् रेफान् रेफोपलक्षितान् अकारादिवर्णांश्च ॥ २५ ॥ भुजेषु इन्द्रः प्रधानो येषां तान् अमरान् देवान् । कर्णयोः ककुभो दिशः । मूर्ध्नि द्यौः धाम् । केशेषु मेघान् । नासिकाया नासिकयोः श्वसनं प्राणवायुम् । बाह्यवायोर्मारुतमित्युक्तत्वात् । स्पष्टमन्यत् ॥ २६ ॥

**सन्ध्यां विभोर्वाससि गुह्य ऐक्षत् प्रजापतीन् जघने आत्ममुख्यान् ॥ नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि चर्क्षमालाम् ॥ २४ ॥ हृद्यङ्ग धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं च मनस्यथेन्दुम् ॥ श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्तरेफान् ॥ २५ ॥ इन्द्रप्रधानानमरान् भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि ॥ केशेषु मेघान् श्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम् ॥ २६ ॥ वाण्यां च छंदांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ॥ अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥ २७ ॥ स्पर्शे च कामं नृप रेतसोऽम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ॥ छायासु मृत्युं हसिते च माया तनूरुहेष्वोषधिजातयश्च ॥ २८ ॥ नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ॥ प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि भूतानि ददर्श वीरः ॥ २९ ॥**

वाण्यां च च्छन्दांसि वेदान् । रसे रसने जलेशं वरुणम् । भ्रुवोर्निषेधं निवर्तकं शास्त्रम्, विधिं प्रवर्तकं शास्त्रं च । परस्य पुंसः भगवतः पक्ष्मसु अहः दिनं रात्रिं च । ललाटे मन्युं क्रोधम् । अधरे अधरोष्ठे एव लोभम् ॥ २७ ॥ हे नृप स्पर्शे त्वगिन्द्रिये कामम् । रेतसो रेतसि अम्भो जलम् । पृष्ठे त्वधर्मं पापम् । क्रमणेषु पादन्यासेषु यज्ञम् । छायासु मृत्युम् । हसिते च मायां मोहकशक्तिम् । तनूरुहेषु लोमसु ओषधिजातीः ॥ २८ ॥ नाडीषु नदीश्च । नखेषु शिलाः स्थूलपाषाणान् । बुद्धौ अजं ब्रह्माणम् । प्राणेषु इन्द्रियेषु देवगणान् पूर्वोक्तेभ्योऽन्यान् इन्द्रियाधिष्ठातॄनादित्यादीन् ऋषींश्च । गात्रे इत्यादि स्पष्टम् ॥ २९ ॥

अङ्ग हे राजन् । सर्वात्मनि सर्वाधारभूते भगवतीद भुवन निरीक्ष्य सर्वे असुराः कश्मल भयमापुः प्रापुः । तथा मूर्तिमन्तः सुदर्शनादयः ईश तं भगवन्तं उपतस्थुरिति तृतीयेनान्वयः । असह्यं तेजो यस्य तत्सुदर्शननामक चक्रम् । स्तनयित्नुवद्घोषो यस्य तच्छार्ङ्गनामकं धनुः ॥३०॥ पर्जन्यवद्घोषो यस्य स पाञ्चजन्याख्यो जलजः शङ्खः । तरस्विनी वेगवती कौमोदकी नाम्नी विष्णोर्गदा । शत चन्द्राकाराणि यस्य तेन चर्मणा युक्तो विद्याधराख्यः असिः खड्गः, अस्यैव नन्दक इति नामान्तरम् । अक्षयाः सायका ययोस्तौ तूणोत्तमौ च ॥ ३१ ॥ सुनन्दो मुख्यो येषां ते सहलोकपाला लोकपालैः सहितास्तत्पार्षदमुख्या ईशमुपतस्थुः, तत्समीपे स्वस्वयोग्ये स्थाने स्थितवन्त इत्यर्थः । तदा च हे राजन् स्फुरन्ति किरीटादीनि यस्य स श्रीवत्सादिभिः मधुव्रतानां भ्रमराणा स्रक् पङ्क्तिर्यस्यां तया वनमालया चावृतो यो भगवान् उरुक्रमो रराजेत्यन्वयः । तत्र मीनकुण्डले मकराकृती

सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग ॥ सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥ पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी ॥ विद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ॥ ३१ ॥ सुनन्दमुख्या उपतस्थुरीशं पार्षदमुख्याः सहलोकपालाः ॥ स्फुरत्किरीटाङ्गदमीनकुण्डलः श्रीवत्सरत्नोत्तममेखलाम्बरैः ॥ ३२ ॥ मधुव्रतस्रग्वनमालया वृतो रराज राजन् भगवानुरुक्रमः ॥ क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ॥ ३३ ॥ पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि ॥ उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे भूमिदाननिरूपणं नाम विंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

कुण्डले । श्रीवत्सो रोमावर्त्तविशेषः । रत्नोत्तमः कौस्तुभः । उरुक्रमत्वमेवाह—क्षितिमिति । बलेः सम्बन्धिनीं क्षितिमेकेन पदा नभोऽन्तरिक्ष शरीरेण दिशश्च सर्वा बाहुभिर्विचक्रमे आक्रान्तवान् ॥ ३२ ॥ ३३ ॥ द्वितीयं पदं क्रमतो विक्षिपतस्त्रिविष्टपं स्वर्गं किञ्चिन्मात्रं जातम् । तृतीयाय तु तदीयं अणु अणुमात्रं किञ्चिदपि नवै नैवावशिष्टमित्यर्थः । तत्र हेतुमाह—उरुक्रमस्याङ्घ्रिः त्रिविष्टपादुपर्युपरि गच्छन् महर्जनाभ्या तपसश्च परं सत्यं लोक गत इति ॥ ३४ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ विंशोऽपि विवृतोऽध्यायो भूमिदाननिरूपकः ॥ ३ ॥ ॥ छ ॥

एकविंशे तु सर्वस्वं दत्तवन्तं बलिं हरिः ॥ तत्सत्कीर्तिवितानाय बबन्धेति निरूप्यते ॥ १ ॥ ॥ ततः किं वृत्तमित्यत्राह— सत्यमिति । भगवतो नखा एवेन्दवस्तैर्हता स्वधाम्नो द्युतिर्यस्य सः । अब्जभवो ब्रह्मा सत्यं सत्यलोकं प्राप्तं भगवदङ्घ्रिं समीक्ष्य मरीच्यादिस्वगणैर्वृतोऽभ्यगात् सम्मुखमाजगामेत्यन्वयः ॥ १ ॥ नरदेवं प्रजा इवेति सूचयन् सम्बोधयति— नरदेवेति । मरीच्यादयश्चाभ्यगुः । ततश्च सर्वे तमङ्घ्रिं ववन्दिरे इति द्वयोरन्वयः । मरीच्यादय ऋषयः । बृहद्व्रताः नैष्ठिकब्रह्मचारिणो नारदादयः । योगिनो ज्ञानयोगनिष्ठाः सनन्दनादयः । वेदादयोऽपि मूर्तिमन्तस्तदभिमानिनो देवा ज्ञेयाः । तत्र वेदा ऋगादयः । उपवेदा आयुर्वेदादयः । तदङ्गानि शिक्षादीनि । यमा अहिंसादयस्तदन्विता नियमाः स्नानादयः । तर्को न्यायशास्त्रम् । इतिहासा महाभारतादयः । पुराणानि भागवतादीनि । संहिताः पञ्चरात्रादयः ॥ २ ॥ ये चापरे योग एव समीरो वायुस्तेन दीपितेन ज्ञानाग्निना रन्धितं दग्धं कर्म पापरूपं कल्मषं प्रतिबन्धो येषां ते तथाभूताः सन्तः यस्य भगवच्चरणारविन्दस्य स्मरणानुभावतः अकर्मकं काम्यकर्मभिरप्राप्यं स्वायम्भुवं

श्रीशुक उवाच ॥ सत्यं समीक्ष्याब्जभवो नखेन्दुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ॥ १ ॥ मरीचिमिश्रा ऋषयो बृहद्व्रताः
सनन्दनाद्या नरदेव योगिनः ॥ वेदोपवेदा नियमान्विता यमास्तर्केतिहासाङ्गपुराणसंहिताः ॥ २ ॥ ये चापरे योग-
समीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः ॥ ववन्दिरे यत्स्मरणानुभावतः स्वायम्भुवं धाम गता अकर्मकम् ॥ ३ ॥
अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत् पद्मभवोऽर्हणोदकम् ॥ समर्च्य भक्त्याऽभ्यगृणाच्छुचिश्रवा यन्नाभिपङ्केरुहसम्भवः
स्वयम् ॥ ४ ॥ धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र ॥ स्वर्धुन्यभून्नभसि सा पतती
निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ५ ॥

धाम ब्रह्मलोकं गताः ॥ ३ ॥ अथानन्तरं शुचिश्रवा विमलकीर्तिः पद्मभवो ब्रह्मा स्वयं यस्य नाभिकमलसम्भवस्तस्य विष्णोः प्रोन्नमिताय प्रकर्षेण ऊर्ध्वं स्थितायाङ्घ्रये अर्हणोदकमर्घ्यं उपाहरत् समर्पितवान् । ततश्चाङ्घ्रिं सम्यगभ्यर्च्य भक्त्याऽभ्यगृणात् अस्तौषीत् ॥ ४ ॥ हे नरेन्द्र तत् अर्हणतया समर्पितं धातुर्ब्रह्मणः कमण्डलुजलमुरुक्रमस्य पादयोरवनेजनेन प्रक्षालनेन निमित्तेन पवित्रतया स्वर्धुनी गङ्गाऽभूत् । या नभसि आकाशमार्गे पतती पतन्ती सती ध्रुवमण्डलमेर्वादिक्रमेण अधःस्रवन्ती लोकत्रयं निमार्ष्टि पवित्रीकरोति । नच पञ्चमे स्कन्धे वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहजलं गङ्गेत्युक्तिविरोधः शङ्कनीयः, जलद्वयमिलितं गङ्गेत्यङ्गीकारे विरोधाभावात् । चरणसम्बन्धमात्रेण पावित्र्यहेतुत्वे दृष्टान्तमाह— भगवतो विशदा विमला कीर्तिरिवेति ॥ ५ ॥

ततश्च सङ्क्षिप्ता उपसहृता आत्मविभूतिः स्वदेहविस्तारो येन तस्मै यथापूर्वं वामनरूपेण स्थिताय स्वनाथाय स्वामिने लोकनाथा ब्रह्मादयः सम्यगादृताः सादराः सानुगाश्च तत्रागत्य बलिमाजह्रुः पूजां कृतवन्तः ॥ ६ ॥ पूजासाधनान्याह— तोयैरित्यादिना । सुरभिभिरिति जलादीना यथायोग्य सर्वेषा विशेषणम् । तोयैः स्नानाचमनादिजलैः । समर्हणैरर्घ्यजलैः । दिव्यो गन्धो येषा तैरनुलेपनैश्चन्दनादिभिः । लाजा भ्रष्टधानाः अङ्कुरा यवदूर्वाद्यङ्कुरास्तैः ॥ ७ ॥ तस्य वीर्यं पराक्रमः महिमा विभूतिस्ताभ्यामङ्कितैः स्तवनैः स्तोत्रैः । स्पष्टमन्यत् ॥ ८ ॥ मनोवज्जवो वेगो यस्य स ऋक्षाणा राजा जाम्बवांस्तु भेरीशब्दैः सह सर्वासु दिक्षु महान् उत्सवो यथा भवति तथा वामनस्य विजयमघोषयत् ॥ ९ ॥ त्रिपदानीति व्याजमात्रं यस्यास्तया याच्ञया स्वभर्तुर्बलेः सर्वां महीं हृतां दृष्ट्वा अत्यमर्षिणस्तदसहमाना असुराः परस्परमूचुः । ननु भर्त्राज्ञां विना कथं तेषामयमुद्योगस्तत्राह—

ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ॥ सानुगा बलिमाजह्रुः सङ्क्षिप्तात्मविभूतये ॥ ६ ॥ तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः ॥ धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः ॥ ७ ॥ स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमाङ्कितैः ॥ नृत्यवादित्रगीतैश्च शङ्खदुन्दुभिनिस्स्वनैः ॥ ८ ॥ जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः ॥ विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥ ९ ॥ महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया ॥ ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिणः[1] ॥ १० ॥ न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः ॥ द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ ११ ॥ अनेन याचमानेन शत्रुणा बटुरूपिणा ॥ सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि ॥ १२ ॥ सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ॥ नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ १३ ॥

दीक्षितस्येति । अय च यज्ञे कृतसङ्कल्पः अतो दण्डेन वृतो भविष्यत्यस्माक तु स्वाम्युपकारे प्रवृत्तिरुचितैवेत्याशयः ॥ १० ॥ तदुक्तिमेवाह— न वा इति । वै अवधारणे । अय वामनो ब्रह्मबन्धुः ब्राह्मणविशेषो नैव भवति किन्तु मायाविनां वरः श्रेष्ठः विष्णुरेव द्विजरूपेण प्रतिच्छन्नः तिरोधापितरूपः सन् देवाना कार्यं कर्तुमिच्छति ॥ ११ ॥ अतएव याचमानेन बटुरूपिणाऽनेन विष्णुना बर्हिषि यज्ञे निमित्ते न्यस्तः त्यक्तो दण्डो दुष्टविषयो येन तस्य नोऽस्माकं भर्तुः सर्वस्वमपहृतमित्यन्वयः ॥ १२ ॥ तर्हि गुरुणा प्रतिबोधितोऽप्यय प्रत्याख्यानं कुतो न कृतवानित्यत आहुः— सततं सर्वदा सत्यं व्रतं सङ्कल्पो यस्य तस्य तत्रापि विशेषतो दीक्षितस्य यज्ञदीक्षाया स्थितस्य ब्रह्मण्यस्य ब्राह्मणभक्तस्य सर्वप्राणिषु दयावतः । षष्ठी तृतीयार्थे । एवम्भूतेनानेन अनृतं भाषितुं न शक्यम् ॥ १३ ॥

[1] ‘ अत्यमर्षिता. ’ इति पाठान्तरं श्रीधरसम्मतं अन्यसम्मत च ।

तस्मादनुचितकारित्वादस्य वामनस्य वध एव नोऽस्माकं धर्मः। हि यस्माद्भर्तुः शुश्रूषणं सेवनमयं इत्येवं वदन्तो बलेरनुचराश्च ते असुराश्च ते आयुधानि तं हन्तुं जगृहुः ॥ १४ ॥ हे राजन् शूलादयः पाणिषु येषां ते सर्वे असुरा बलेरनिच्छत एव वामनं हन्तुं प्राद्रवन् प्रदुद्रुवुः। तत्र हेतुः—जातो मन्युः क्रोधो येषां ते इति ॥ १५ ॥ हे नृप तान् दितिजानां दैत्यानामनीकपान् सेनापतीन् अभिद्रवतो वामनस्याभिमुखमागच्छतो दृष्ट्वा उद्यतानि आयुधानि यैस्ते विष्णोः पार्षदाः प्रहस्य तुच्छीकृत्य प्रत्यषेधन् निवारयामासुः ॥ १६ ॥ के ते इत्यतस्तन्नामान्याह— नन्द इति ॥ १७ ॥ तेषा बलातिशयमाह— सर्वे इति। नागायुतस्य हस्तिदशसहस्रस्य प्राणो बलं येषां ते सर्वे आसुरीं चमूं सेना जघ्नुः ॥ १८॥ पुरुषानुचरैः भगवत्पार्षदैः स्वकान् दैत्यान् हन्यमानान् दृष्ट्वा तान् संरब्धान् अतिक्रुद्धान् 'अचिराद्भ्रश्यसे श्रियः' इति काव्यस्य शुक्रस्य शापमनुस्मरन् वारयामास ॥ १९ ॥

तस्मादस्य वधो धर्मो[1] भर्तुः शुश्रूषणं च नः ॥ इत्यायुधानि जगृहुर्बलेरनुचरासुराः ॥ १४ ॥ ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः ॥ अनिच्छतो बले राजन् प्राद्रवञ्जातमन्यवः ॥ १५ ॥ तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप ॥ प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १६ ॥ नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः ॥ कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १७ ॥ जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ॥ सर्वे नागायुतप्राणाश्चमूं ते जघ्नुरासुरीम् ॥ १८ ॥ हन्यमानान् स्वकान् दृष्ट्वा पुरुषानुचरैर्बलिः ॥ वारयामास संरब्धान् काव्यशापमनुस्मरन् ॥ १९ ॥ हे विप्रचित्ते हे राहो हे नेमे श्रूयतां वचः ॥ मा युद्ध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ २० ॥ यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ॥ तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २१ ॥ यो नो भवाय प्रागासीदभवाय दिवौकसाम् ॥ स एव भगवानद्य वर्तते तद्विपर्ययम् ॥ २२ ॥

वारणप्रकारमाह— षड्भिः। हे विप्रचित्त्यादयो युष्माभिर्मे वचः श्रूयताम्। किं तत्राह— मा युद्ध्यत किन्तु ततो निवर्तध्वं यतोऽयं कालो नोऽस्माकमर्थकृदनुकूलो जयप्रदो न भवति ॥ २० ॥ प्रतिकूलत्वे पौरुषैस्तिरस्करणीय इत्यत आह— य इति। हे दैत्याः यः कालः सर्वेषा भूताना प्राणिना सुखदुःखयोरुपपत्तये प्रदानाय प्रभुः समर्थस्तं पुमान् पौरुषैः स्वकीयबलपराक्रमादिभिः अतिवर्तितुमीशः समर्थो न भवति ॥ २१ ॥ कोऽसौ महापराक्रमी कालः कथं तस्य प्रतिकूलतेत्यत आह— य इति। यः कालरूपो भगवान् प्राक् पूर्वं नोऽस्माकं भवाय उद्भवाय दिवौकसामभवाय चासीत् स एवाद्य ततो विपर्ययमस्माकमभवाय देवानां भवाय च वर्तते ॥ २२ ॥

१ 'तस्मादस्य वधे धर्म' इति पाठान्तर कुत्रचित्।

अतो भगवद्रूपत्वाज्जनो बलादिभिरुपायैः काल वै नात्येति नैवातिक्रामति । सचिवैर्मन्त्रिभिः ॥ २३ ॥ कालप्रभावो न गुप्त' किन्तु प्रत्यक्ष एवेत्याह— भवद्भिरिति । दैवेन कालेन ऋद्धैः समृद्धैर्भवद्भिरेते हरेरनुचरा देवा बहुशो निर्जिताः त एवाद्य युधि नोऽस्मान् जित्वा नदन्ति । एतत्सर्वं युष्माक प्रत्यक्षमेवेत्याशयेनाह— हीति ॥ २४ ॥ पुनश्च यदि दैवं कालः प्रसीदति अस्मदनुकूलं भविष्यति तदा वयमप्येतान् विजेष्यामः । तस्मात् जयपराजययोः कालाधीनत्वात् यः कालो नोऽस्माकमर्थत्वाय कल्पते अर्थसाधनायानुकूलो भवति तं कालं प्रतीक्षध्व तावत्पराभवं सहध्वम् ॥ २५ ॥ हे राजन् एवं पत्युः स्वामिनो बलेर्निगदितं वाक्यं श्रुत्वा ते दैत्यदानवयूथपा रसा रसातले निविविशुः । यतो विष्णुपार्षदैस्ताडितास्तत्र स्थातुमशक्ता इत्यर्थः ॥ २६ ॥ अथानन्तरं विषु पक्षिषु राजते इति विराट् पक्षिराजः तार्क्ष्यसुतो गरुडो वारुणैः वरुणदेवताकमन्त्राभिमन्त्रितैः पाशैर्बलिं

बलेन सचिवैर्बुद्ध्या दुर्गैर्मन्त्रौषधादिभिः ॥ सामादिभिरुपायैश्च कालं नात्येति वै जनः ॥ २३ ॥ भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ॥ दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति नः ॥ २४ ॥ एतान् वयं विजेष्यामो यदि दैवं प्रसीदति ॥ तस्मात् कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते ॥ २५ ॥ श्रीशुक उवाच ॥ पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ॥ रसां निविविशू राजन् विष्णुपार्षदताडिताः ॥ २६ ॥ अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम् ॥ बबन्ध वारुणैः पाशैर्बलिं सौत्येऽहनि क्रतौ ॥ २७ ॥ हाहाकारो महानासीद्रोदस्योः सर्वतोदिशम् ॥ गृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २८ ॥ तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ॥ नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २९ ॥

बबन्धेत्यन्वयः । ननु भगवदाज्ञां विना कथं बबन्धेत्यत आह— प्रभुचिकीर्षितं ज्ञात्वेति । अस्य सर्वस्वापहारेण ममेदमित्याभिमान सन्त्याज नीं देहस्वीकारेण तत्राहमित्यभिमानमपि त्याजयित्वा परमानुग्रहः कर्तव्यस्तथा नचानेन तुल्योऽन्यः कोऽपि सत्यसन्धो धीरो वाऽस्तीति सत्कीर्तिख्यापनायास्य बन्धनं च कर्तव्यमिति प्रभोर्भगवतः चिकीर्षितमभिप्राय ज्ञात्वेत्यर्थः । तद्बन्धनं कस्मिन् दिने तत्राह— क्रतोर्यज्ञस्य सौत्येऽहनि सोमाभिषवदिने इत्यर्थः ॥ २७ ॥ प्रभविष्णुना सर्वशक्तिमता विष्णुना दैत्यपतौ बलौ निगृह्यमाणे बध्यमाने सति रोदस्योर्द्यावापृथिव्योः सर्वतोदिशं सर्वदिक्षु महान् हाहाकारशब्दः आसीत् ॥ २८ ॥ धीराणां भगवद्भक्तानां न किञ्चिदुःसहमिति तवापि सम्मतमिति सूचयन् सम्बोधयति— नृपेति । नष्टा श्रीः शोभा यस्य तम् । तत्र हेतुः— वारुणैः पाशैर्बद्धम् । तथापि स्थिरा प्रज्ञा बुद्धिर्यस्य तम् । अतएव उदारयशसं विपुलकीर्तिं तं बलिं भगवान् वामन आह ॥ २९ ॥

१ ' निगृह्यमाणे ' इति पाठान्तर एतट्टीकाकारसम्मतमिति प्रतिभाति तथा व्याख्यानदर्शनात् । तत्राक्षराधिक्यमार्षम् । क्वचित् ' बध्यमाने ' इत्यपि पाठ ।

तदुक्तिमाह— पदानीत्यादिना । जातिदुष्टत्वं सूचयन् सम्बोधयति— असुरेति । भूमेस्त्रीणि पदानि त्वया मह्यं दत्तानि दास्यामीति प्रतिश्रुतानि । तत्र द्वाभ्यां पद्भ्यां तत्र सर्वा मही मया क्रान्ता परिच्छिद्य परिगृहीता । इदानीं तृतीयं तृतीयपदस्थानं उपकल्पय देहि ॥ ३० ॥ क्रमणमेव स्पष्टयति— असौ सूर्यो गोभिः किरणैर्यावत्तपति, उडुभिर्नक्षत्रैः सह इन्दुश्चन्द्रो यावत्प्रकाशते, पर्जन्यो मेघो यावद्वर्षति तावत्येवेयं तव सम्बन्धिनी भूः ॥ ३१ ॥ एव सत्येकेन पदा मया भूर्लोकः क्रान्तः । तथा खमन्तरिक्षं दिशश्च तनोः तन्वा क्रान्ताः । द्वितीयेन पदा तु स्वर्लोकः क्रान्तः । एवं ते तव पश्यत एव आत्मना व्यापकेन मया ते स्व सर्वस्वं गृहीतम् । तृतीयपदन्यासार्था त्वदीया भूमिर्नास्तीत्यर्थः ॥ ३२ ॥ अतः प्रतिश्रुतं तृतीयपदस्थानमदातु-

पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर ॥ द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ॥ ३० ॥ यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः ॥ यावद्वर्षति पर्जन्यस्तावती भूरियं तव ॥ ३१ ॥ पदैकेन मया क्रान्तो भूर्लोकः खं दिशस्तनोः ॥ स्वर्लोकस्तु द्वितीयेन पश्यतस्ते स्वमात्मना ॥ ३२ ॥ प्रतिश्रुतमदातुस्ते निरये वास इष्यते ॥ विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ॥ ३३ ॥ वृथा मनोरथस्तस्य दूरे स्वर्गः पतत्यधः ॥ प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते ॥ ३४ ॥ विप्रलब्धो ददामीति त्वयाऽहं चाढ्यमानिना ॥ तद्व्यलीकफलं भुंक्ष्व निरयं कतिचित्समाः ॥ ३५ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे बलिबन्धनिरूपणं नामैकविंशोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥

स्ते तव निरये नरके वास इष्यते इष्टो भवति । तस्मात् प्रतिश्रुतादानात् गुरुणा शुक्रेण चानुमोदितः तेनाप्येतत्कथनात् त्व निरयं नरकं विश ॥ ३३ ॥ इदानीं तवैतद्दोषेण स्वर्गमनोरथो वृथैवेति सामान्यत आह— वृथेति । यः प्रतिश्रुतस्यादानेन अर्थिनं याचक विप्रलम्भते वञ्चयति तस्य सुखविषयको मनोरथो वृथैव, स्वर्गश्च दूर एव, यतः सोऽध एव पतति ॥ ३४ ॥ आढ्यमानिना आढ्यः त्रैलोक्यैश्वर्यवानहमित्यभिमानवता अतो यथेष्ट गृहाणाहं ददामीति वदता त्वयाऽहं विप्रलब्धो वञ्चितः । अतस्तस्य व्यलीकस्य वचनस्य फलं निरयं नरकदुःखं कतिचित् समाः संवत्सरान् भुंक्ष्व ॥ ३५ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ एकविंशो गतो वृत्तिं बलिबन्धनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

दत्त्वा वरांस्ततो तुष्यन्द्वारपोऽभूत्स्वयं हरिः ॥ छलतश्छलितस्तेनैतद्द्वाविंशे निरूप्यते ॥ १ ॥ हे राजन् एवं विप्रकृतः बन्धनेन वचसा च तिरस्कृतः। किमर्थमत आह—भिद्यमानः सत्याच्चाल्यमानोऽसुरोऽपि अभिन्नः सत्यादप्रचलित आत्मा मनो यस्य स बलिरविक्लवमदीन वचस्त प्रत्याह ॥ १ ॥ तद्दर्शयति—यदिति दशभिः। महायशसो भवतो यद्यप्येवं व्यवहारो न घटते तथापि देवपक्षपातवशादेवैवं व्यवहरतीति सूचयन् सम्बोधनद्वयमाह—उत्तमश्लोकेति सुरवर्येति च। यद्यपि ममेरितं प्रतिश्रुतं वचो व्यलीकमनृतं तावन्न भवति त्वया कपटेन वामनतया भिक्षित्वा ग्रहणसमये रूपान्तरस्याविष्कृतत्वात्, तथापि यदि भवान् व्यलीकं मन्यते तदा तद्वचनं प्रलम्भनं वञ्चनपरं यथा न भवेत्तथा ऋतं सत्यमेव करोमि। कथं तत्राह— निजं तृतीयं पदं मे शीर्ष्णि कुर्विति। न च द्वाभ्यां पद्भ्यां विश्वं क्रान्तवतो मे तव शिरः पदपर्याप्तं कथं स्यादिति मन्तव्यं, वित्तेन चेत्पदद्वयपूर्तिर्जाता तर्हीदमधिकमेव स्यात्, वित्तापेक्षयाऽपि वित्तवतोऽधिकत्वादिति भावः ॥ २ ॥ ननु 'आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि ॥ आत्मानं सततं रक्षेद्दारैरपि धनैरपि' इत्यादि वचनादात्मभयपरिहाराय सर्वस्वं त्यज्यते त्वं तु कुतो भीतः सन्नात्मानमप्यर्थयसीत्यत आह—बिभेमीति। असाधुवादादनृतवचनादिनाऽपकीर्तेः-

**श्रीशुक उवाच ॥ एवं विप्रकृतो राजन् बलिर्भगवताऽसुरः ॥ भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ १ ॥**
**बलिरुवाच ॥ यद्युत्तमश्लोक भवान् ममेरितं वचो व्यलीकं सुरवर्य मन्यते ॥ करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ २ ॥ बिभेमि नाहं निरयात् पदच्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा ॥ ३ ॥ पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् ॥ यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ ४ ॥ त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः ॥ यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत् ॥ ५ ॥**

र्यथाऽहं भृशमुद्विजे बिभेमि तथा निरयादिभ्यो न बिभेमीत्यन्वयः। निरयान्नरकदुःखात्। पदच्युतः स्थानभ्रंशात्। पाशैर्बन्धात्। दुरत्ययात् दुरतिक्रमणीयात् व्यसनात् दुःखात्। अर्थकृच्छ्रात् धनादिव्ययजनितकष्टात्। भवतो विनिग्रहात् अन्यस्मादपि दण्डात् ॥ ३ ॥ ननु मम निग्रहात्तवापकीर्तिर्जातैवेति चेन्नेत्याह—पुंसामिति। अर्हत्तमेन योग्यतमेन भवता अर्पितं कृतं दण्डं पुंसां श्लाघ्यतममहं मन्ये पापनिवर्तकत्वात्सत्कीर्तिहेतुत्वाच्च। तर्ह्यन्यकृतस्य दण्डस्य कथमपकीर्तिहेतुत्वमित्यत आह—यमिति। हि यस्मात् यमेवम्भूतं दण्डं मात्रादयो न चादिशन्ति नैवार्पयन्ति तत्कृतदण्डस्य स्वार्थत्वेन शोधकत्वाभावादपकीर्तिहेतुत्वमिति भावः ॥ ४ ॥ नन्वहं देवानामेव हितैषी नासुराणां तत्राह—त्वमिति। त्वं नोऽस्माकमसुराणां पारोक्ष्यः परमो गुरुः शत्रुतया प्रतीयमानोऽपि परमहितकारी। कथमेवं तत्राह—य इति। यो भवान् अनेकैः शौर्यवीर्यधनाभिजनादियुक्तैर्मदैः अन्धानामस्माकं ऐश्वर्यविभ्रंशात्मकं चक्षुरादिशत् दत्तवान् ॥ ५ ॥

१ 'परोक्ष.' इति पाठः क्वचित्। २ भगवतस्त्वत्त त्वेत्यर्थ। ३ विशेषेण निग्रहात् बन्धनात्।

असमक्षं हितकारित्वादेव यां मोक्षलक्षणां सिद्धिं फलमेकान्तयोगिनः अनन्यभक्तियोगनिष्ठा लेभिरे तां सिद्धिं बह्वो विबुधेतराः असुराः रूढेन दृढेन यस्मिंस्त्वयि वैरानुबन्धेनैव लेभिरे इत्यन्वयः । भगवच्चरितस्याश्चर्यं सूचयति—उ- हेति ॥ ६ ॥ तेन भूरिकर्मणा अचिन्त्यानन्तविचेष्टितेन भवताऽह निगृहीतो वशीकृतो वारुणैः पाशैर्बद्धश्च नातिव्रीडे लज्जा न प्राप्नोमि, न च व्यथे व्यथामपि न प्राप्नोमि । त्वत्कृतनिग्रहादेर्भुक्तिमुक्तिकीर्तिहेतुत्वा-दित्याशयः ॥ ७ ॥ किञ्च योऽयं दण्डरूपो ममानुग्रहस्त्वया कृतः स त्वद्भक्तपौत्रत्वेन, न त्वहमनुग्रहस्य पात्रमित्याशयेनाह—पितामह इति चतुर्भिः । मे मम पितामहः प्रह्लादो भवदीयत्वेन सम्मतः । तत्र हेतुमाह—त्वत्परम इति । त्वमेव परमः सेव्यः आश्रयश्च यस्य सः । अतएवाविष्कृतः साधुवादः सत्कीर्तिर्यस्य सः । अतएव भवद्विपक्षेण भवच्छत्रुणा स्वपित्रा हिरण्यकशिपुना विचित्रवैशस नानाविधदुःखं प्रापितोऽपि ॥ ८ ॥ मर्त्यस्य मरणशीलस्य पुंसः यः अन्ततो देहिनं जहाति तेनानेनात्मना देहेन किं प्रयोजनं ? तथा रिक्थहारैर्दायादैः पुत्रैः स्वजन इत्याख्या व्यवहारमात्रं

यस्मिन् वैरानुबन्धेन रूढेन विबुधेतराः ॥ बहवो लेभिरे सिद्धिं यामु हैकान्तयोगिनः ॥ ६ ॥ तेनाहं निगृहीतोऽस्मि
भवता भूरिकर्मण ।॥ बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे ॥ ७ ॥ पितामहो मे भवदीयसम्मतः प्रह्लाद आविष्कृत-
साधुवादः ॥ भवद्विपक्षेण विचित्रवैशसं सम्प्रापितस्त्वत्परमः स्वपित्रा ॥ ८ ॥ किमात्मनाऽने न जहाति योऽन्ततः
किं रिक्थहारैः स्वजनाख्यदस्युभिः ॥ किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ ९ ॥ इत्थं स
निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम् ॥ ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तमः ॥ १० ॥

येषा ते वस्तुतस्तु धनधर्मादिक्षयहेतुतया दस्यव एव, तैः किम् ? जन्ममरणादिसंसृतिहेतुभूतया जायया भार्ययाऽपि किम् ? गेहैरपि किम् ? न किमपि प्रयोजनं सिद्ध्यति। किन्त्विह प्रवृत्तिमार्गे एतैः केवलमायुषो व्ययः क्षय एव भवतीति निश्चितवानिति शेषेणान्वयः । अन्यथा पुनः स पितामहस्या-नन्वयापत्तेः ॥ ९ ॥ सोऽस्मत्पितामह इत्थं निश्चित्य जनात् संसारहेतुभूतसंसारिजनसङ्गाद्भीतः सन् स्वपक्षं दैत्यकुल क्षपयतीति तथाभूतस्यापि भवतः पादपद्मं प्रपेदे शरणं जगामेत्यन्वयः । तच्छरणगमने हेतुमाह—ध्रुवमिति, नित्यपुरुषार्थरूपम् । हि यस्मात् अकुतोभय नास्ति कुतोऽपि भयं यस्मा-त्तथाभूतम् । तथानिश्चये हेतुमाह—महानिति, सर्वसद्गुणसम्पन्न इत्यर्थः । अगाधबोधः अपरिमितज्ञानसम्पन्नः । महत्त्वे ज्ञानित्वे च हेतुमाह—सत्तम इति, सन्तो भगवद्भक्तास्तेषु श्रेष्ठ इत्यर्थः ॥ १० ॥

अथ तस्मात्तत्पौत्रत्वादहमपि दैवेन तस्यैव भजनप्रभावेण तवान्तिकं त्वत्समीपं नीतः त्वया च कृपया प्रसभ बलात् त्याजिता श्रीर्यस्य तथाभूतो जातः तस्यैव प्रभावेणेति । कुतस्तत्राह— आत्मरिपोरिति । तत्सम्बन्धं विना शत्रुभाववति मयि तवैवं कृपा न स्यादित्याशयः । ननु अपहारस्य कथमनुग्रहत्वमित्याशङ्क्य तस्य अनर्थहेतुत्वमाह— इदमिति । यया श्रिया स्तब्धमतिः कुण्ठितविवेकः पुमान् इदं जीवितमध्रुवमस्थिरमिति बुद्ध्यते । अध्रुवत्वे हेतुमाह— कृतान्तस्य मृत्योरन्तिकवर्तीति ॥ ११ ॥ हे कुरुश्रेष्ठ तस्य बलेरित्थं भाषमाणस्य सतः उत्थितः उदितो राकापतिः पूर्णचन्द्र इव प्रकाशमानः प्रह्लादः आजगाम । तथाप्रकाशे हेतुः— भगवत्प्रिय इति ॥ १२ ॥ तमागतं स्वपितामहं प्रह्लादमिन्द्रसेनः प्राप्तेन्द्रराज्यो बलिः सम्यगैक्षत । न केवलं स एव तमैक्षत किन्तु सर्वेऽपीत्याशयेन तं वर्णयति— सुभगं सुन्दरम् । श्रिया कान्त्या विराजमानम् । नलिनवदायते ईक्षणे यस्य तम् । प्रांशु

**अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः ॥ इदं कृतान्तान्तिकवर्ति जीवितं ययाऽध्रुवं स्तब्धमतिर्न बुद्ध्यते ॥ ११ ॥ श्रीशुक उवाच ॥ तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ॥ आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥ तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ॥ प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत ॥ १३ ॥ तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ॥ ननाम मूर्ध्नाऽश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥ स तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम् ॥ उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविक्लवः ॥ १५ ॥ प्रह्लाद उवाच ॥ त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम् ॥ मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥**

उन्नतम् । पिशङ्गे अम्बरे यस्य तम् । अञ्जनात्विषं श्यामलम् । प्रलम्बावाजानुलम्बौ बाहू यस्य तम् ॥ १३ ॥ तस्मै प्रह्लादाय बलिः पूर्ववत् समर्हणमर्घ्यादिपूर्वक पूजनं नोपजहार न कृतवान् । तत्र हेतुः— वारुणैः पाशैर्यन्त्रितः बद्ध इति किन्तु केवलं मूर्ध्ना ननाम । ततश्च प्रह्लादेन सर्वदा शिक्ष्यमाणनिरहङ्कारित्वं विहाय 'त्वं बालो बालिशमतिः' इत्यादि यद्भगवन्तं प्रति साहङ्कारमुक्तं तत्स्मरणेनाश्रुभिर्विलोले चञ्चले लोचने यस्य सः सव्रीड नीचीनमधःकृत मुखं यस्य तादृशश्च बभूव ॥ १४ ॥ स महामनाः प्रसन्नमनाः प्रह्लादः सतां भागवतानां पतिं पालकं सुनन्दादिभिः अनुगैः पार्षदैरुपासित सेव्यमान तत्रासीनमुपविष्ट वामनरूपं हरिमुदीक्ष्य पुलकैरुत्थितरोमाभिरश्रुभिश्च विह्वलः शिरसा नमन्नेवोपेत्य मूर्ध्ना भूमौ ननामेत्यन्वयः ॥ १५ ॥ किञ्चिदुवाच च तदाह— त्वयेति द्वाभ्याम् । ऊर्जितं समृद्धमैन्द्रं पदमस्मै त्वयैव पूर्वं दत्तं तदद्य त्वयैव हृतं तथैव शोभनं, तच्चातिशोभनमेव कृतमित्यर्थः । शोभनत्वमेव व्यनक्ति—

---

१ 'हरिं सुनन्दनन्दाद्यनुगैः' इति पाठः ।

मन्ये इति । हीत्यवधारणे । अस्य बलेर्भवता महानेवानुग्रहः कृत इत्यहं मन्ये । कुतस्तत्राह– यत् यस्मात् श्रीरेवात्ममोहनमात्मज्ञानप्रतिबन्धकं तस्मादयं विभ्रंशितः । अन्यथा विवेकरहितोऽयं विनश्येदिति भावः ॥ १६ ॥ श्रियो मोहकत्वमेवाह– यया श्रिया विद्वान् विवेकी यतः संयतोऽपि मुह्यते ज्ञातमप्यात्मतत्त्वं विस्मरति तत्तस्यां सत्यां को वाऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति ? तस्मै महोपकारिणे ते तुभ्यं नमः । तत्र वयं न किञ्चित्कर्तुं समर्था इत्याशयेन विशिनष्टि– जगदीश्वरायेति । तत्र हेतुमाह– नारायणायेति । तथात्वे विकारित्वमाशङ्क्य निराचष्टे–अखिललोकसाक्षिण इति । हि इति सन्देहवारणाय ॥ १७ ॥ हे राजन् कृताञ्जलेर्बद्धाञ्जलेस्तस्य प्रह्लादस्य शृण्वत एव सतो भगवान् हिरण्यगर्भो ब्रह्मा मधुसूदनं वामनमुवाच, किञ्चिद्वक्तुमुद्यत इत्यर्थः ॥ १८ ॥ तथैव विन्ध्यावलिरपि किञ्चिद्विज्ञापयितुं प्रवृत्ता तां च सन्मानयन् हिरण्यगर्भः क्षणं तूष्णीं

**यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा ॥ तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे ॥ १७ ॥ श्रीशुक उवाच ॥ तस्यानुशृण्वतो राजन् प्रह्लादस्य कृताञ्जलेः ॥ हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ १८ ॥ बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ॥ प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप ॥ १९ ॥ विन्ध्यावलिरुवाच ॥ क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः ॥ कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ २० ॥**

अवस्थितः अतस्तस्या एव वचनं प्रथममवतारयति– बद्धमिति। हे नृप तस्य बलेः पत्नी विन्ध्यावलिः प्रणता दण्डवद्भूमौ पतनेन कृतनमस्कारा पुनश्च प्राञ्जलिः संयोजिताञ्जलिः सती उपेन्द्रं वामनं प्रति इद वक्ष्यमाणं बभाषे इत्यन्वयः । तत्र हेतुमाह– पतिं बद्धं वीक्ष्य भयेन विह्वला । तत्र हेतुमाह– साध्वी पतिव्रता, बलेरभिमानोक्तिं स्मृत्वा लज्जयाऽवाङ्मुखी च ॥ १९ ॥ तदेवाह– क्रीडार्थमिति । सर्वसामर्थ्यं सूचयन्ती सम्बोधयति– ईशेति । ते त्वया आत्मनः स्वस्य क्रीडार्थमिदं त्रिजगत् लोकत्रयात्मकं कृत्स्नं जगत् कृतं सृष्टम् । तत्र त्वत्क्रीडोपकरणभूते जगति अपरे केचित्स्वाम्यं स्वत्वबुद्धिं कुर्युः कुर्वन्ति, तथाबुद्धिं कृत्वा वय दातार इति मन्यन्ते इत्यर्थः । तन्न घटते इत्याह– कर्तुरिति । कर्तुः जगत्स्रष्टुः प्रभोः पालकस्य अस्यतः संहर्तुश्च तव ते किमावहन्ति किं समर्पयन्ति ? न किमपि, स्वत्वस्यैवाभावात् । तर्हि कुत एवमभिमानस्तत्राह– कुधिय इति । लोकलज्जापि तैस्त्यक्तेत्याह– त्यक्तह्रिय इति।

वस्तुतस्तु त्वयैव मायाप्रेरणया अवरोपितः कर्तृवादो वयं स्वतन्त्राः कर्तार इति वादमात्रं येषां ते । अय भावः— त्वदीयमेव सर्वं यथेच्छं गृहाणेति वक्तव्येऽहं त्रिलोकेशो मामुपेत्य जनः पुनरन्यत्र याचितुं नार्हति, त्वं तु बालिशमतिः स्वल्पमेव याचसे इत्युक्त्वा पुनर्लोकत्रयं मयाऽर्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण ब्रुवन्नयं त्वन्मायामोहितः कुबुद्धिर्निर्लज्जश्च यतस्त्वमेव देहादिसर्वस्यापि स्वामी । अतो मन्दबुद्धिमेनं केवलं कृपयैव विमुच्य पालयेति ॥ २० ॥ इदानीं लब्धावसरो ब्रह्मा विज्ञापयति— भूतेति । जगत्सृष्ट्यादिकर्तुस्तव सर्वत्र कृपैव युक्ता स्वतन्त्रत्वात्, अन्यस्य परतन्त्रत्वादित्याशयेन बहुधा सम्बोधयति— हे भूतभावन भूतस्रष्टः । हे भूतानामीश नियन्तः पालक । हे देवदेव देवानामप्यस्मदादीनां देव समाराध्यचरण । हे जगन्मय सर्वजगदुपादानभूत हृतं स्वीकृतं सर्वस्वं यस्मात्तमेनं बलिं मुञ्च अयं निग्रहं दण्डं नार्हति ॥ २१ ॥ तत्र हेतुमाह— अविक्लवया अदीनया धिया अनेन बलिना ते तुभ्यं सर्वस्वं निवेदितामिति । तदेव स्पष्टयति— कृत्स्ना भूर्दत्ता, ये च कर्मभिः

**ब्रह्मोवाच ॥ भूतभावन भूतेश देवदेव जगन्मय ॥ मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम्[1] ॥ २१ ॥ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ॥ निवेदितं च सर्वस्वमात्मा ऽविक्लवया धिया ॥ २२ ॥ यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ॥ अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् ॥ २३ ॥ श्रीभगवानुवाच ॥ ब्रह्मन् यमनुगृह्णामि तद्विशो विधुनोम्यहम् ॥ यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २४ ॥**

अर्जिताः सम्पादिताः स्वर्गादिलोकास्ते दत्ताः, आत्मा आत्मवत् प्रियो देहश्च दत्त इति ॥ २२ ॥ एतदेव कैमुत्यन्यायेनाह— यदिति । अशठधीः अमोहितबुद्धिः यस्य तव पादयोः सलिलं प्रदाय अर्घ्यजलं समर्प्य दूर्वाङ्कुरैरपि सतीं सपर्यां पूजा विधायापि उत्तमा वैकुण्ठादिप्राप्तिलक्षणा गतिं भजते जनः प्राप्नोति । असौ बलिस्तु अविक्लवमनाः स्थिरचित्त एव तुभ्यं त्रिलोकीं दाश्वान् दत्तवान् अतः कथमार्तिं दण्डमृच्छेत् प्राप्नुयात् ? तस्मादेनं विमुञ्चेत्यर्थः ॥ २३ ॥ प्रह्लादादिभिरेवं विज्ञापितो भगवानिममनुगृहीतुमेव मयेदं बन्धनादि कृतमित्याह— ब्रह्मन्निति सार्द्धैर्नवभिः । मद्वचने विश्वासः कर्तव्य इत्याशयेन सम्बोधयति— ब्रह्मन्निति । अहं तावत् यमनुगृह्णामि अनुग्रहीतुमिच्छामि तस्य विशो धनैश्वर्यादि विधुनोमि ततो वियोजयामि । कुत इत्यतस्तस्यानर्थहेतुत्वमाह— यन्मद इति, यैर्धनादिभिर्मदो यस्य सः । अतएव स्तब्धः अनम्रः सन् पुरुषो लोकं मां चावमन्यते तिरस्करोति ॥ २४ ॥

---

१ निग्रहं पाशैर्बन्धनामित्यर्थ, इत्यन्यत्र ।

तत्र मनुष्यजन्मानि स्तम्भो न युक्त इत्याह— यदेति द्वयेन । अनीशः कर्मवशो ऽयं जीवात्मा निजकर्मभिः नानायोनिषु कीटपतङ्गादिषु संसरन् यदा कदाचित् सुकृतवशात् पौरुषीं गतिं पुरुषार्थसाधकं मनुष्यजन्म आव्रजेत् प्राप्नुयात् ॥ २५ ॥ तत्र यद्यस्य जीवस्य जन्मादिभिः स्तम्भो गर्वो न भवेत् तदाऽयं स्तम्भाभावो मदनुग्रहः ॥२६॥ तर्हि कथं ध्रुवप्रह्लादादिभ्यः सम्पदो ददासीत्यत्राह— मानेति । मानो गर्वः स्तम्भः अनम्रता तयोर्निमित्तानां समन्ततः सर्वतः सर्वेषां श्रेयसां पुरुषार्थानां प्रतीपानां विनाशकानां जन्मादीनाम्। तृतीयार्थे षष्ठी। हन्तेत्यवधारणे। जन्मादिभिर्मत्परः मम भक्तो न मुह्येत् गर्ववान् नैव भवति । अतो भक्तेच्छया सम्पदोऽपि ददामीति भावः ॥ २७ ॥ एवं सर्वस्वापहारेण गर्वस्य दूरीकृतत्वात् मत्परत्वाच्च इदानीमन्यैर्दुष्प्रापमप्यस्य दास्यामीत्याशयेन तस्य मोहाभावमाह— एष इति । एष बलिर्दानवाना दैत्याना च अग्रणीः अधिपतिः कीर्तिवर्धनश्च यस्मिन् कुले एकोऽपि गुणवान् भवति तत्प्रसङ्गेन तत्कुलस्यापि कीर्तिर्भवत्येव। तत्र हेतुमाह—अजया दुर्जयामपि मन्मायामयमजैषीत

**यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ २५ ॥ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ॥ यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः ॥ २६ ॥ मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ॥ सर्वश्रेयप्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७॥ एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः ॥ अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥२८॥ क्षीणरिक्थश्च्युतः स्थानात् क्षिप्तो बद्धश्च शत्रुभिः ॥ ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥२९॥ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ॥ छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३० ॥ एष मे प्रापितः स्थानं दुष्प्रापममरैरपि ॥ सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥**

जितवान् । तत्र ज्ञापकमाह— सीदन्नपीति सर्वस्वापहारेणापकारमनुभवन्नपि न मुह्यति ॥ २८ ॥ एतदेव प्रपञ्चयति— क्षीणं रिक्थं धनं यस्य सः स्थानाच्च्युत ऐन्द्राधिपत्याद्भ्रष्टः शत्रुभिरस्माभिः क्षिप्तो वचनैस्तिरस्कृतो बद्धश्च, ज्ञातिभिः परित्यक्तश्च तेषा रसातलप्रवेशस्योक्तत्वात् । यातना पीडा अनुयापितः ॥ २९ ॥ गुरुणा शुक्रेण भर्त्सितः तिरस्कृतः शप्तश्च तथापि सुव्रतः दृढसङ्कल्पः सत्यं न जहौ प्रतिश्रुतं नान्यथा कृतवान् । मया च 'श्रुतमप्रतिदातुस्ते निरये वास इष्यते' इत्यादिवाक्यच्छलैर्धर्म उक्तस्तथाप्ययं तं धर्मं न त्यजति तृतीयं पद मे शिरसि कुर्वित्युक्तेः, अतोऽयं सत्यवाक् ॥ ३० ॥ एष बलिर्मे मया अमरैरपि दुष्प्रापं स्थानं प्रापितः प्रापितप्रायः इन्द्रपदाभिलाषित्वात्ततः पूर्वं सावर्णेर्मनोरन्तरस्यायमिन्द्रो भविता । तदर्थं चास्य प्रयासो न विधेयः स्यान्मत्प्रसादेन सुलभत्वादित्याशयेनाह— मदाश्रय इति, अहमाश्रयो यस्य सः ॥ ३१ ॥

तावत्तु विश्वकर्मणा देवशिल्पिना विनिर्मितं स्वर्गादपि चमत्कृतं सुतलमध्यास्ताम्, अधिपतिर्भूत्वा निवसत्वित्यर्थः । सुतलं विशिनष्टि— यत् यत्र निवसतां ममेक्षया मम कृपावलोकनेन आध्यादयो न सम्भवन्ति । आधयो मनःपीडाः । व्याधयो देहपीडाः । क्लमः ग्लानिः । तन्द्रा आलस्यम् । पराभवः शीतोष्णादिभिः । उपसर्गाः अन्येऽप्युपद्रवाः ॥ ३२ ॥ एवं ब्रह्माणं प्रत्युक्त्वा कृपापरवशो भगवान् साक्षाद्बलिं प्रत्याह— इन्द्रसेनेति सम्बोधनेनेन्द्रराज्येऽपि त्वया संशयो न कर्तव्य इति सूचयति । भो महाराजेति सम्बोधनेन च सुतलेऽपि तव राज्यं निष्कण्टकमेवेति सूचयति । ज्ञातिभिः परिवारितः परिवृतस्त्वं स्वर्गिभिरपि प्रार्थ्यं सुतलं लोक याहि तत्र ते तव भद्रमेवास्तु ॥ ३३ ॥ तदेव स्पष्टयति— तत्र वसन्तं त्वां लोकेशा इन्द्रादयोऽपि नाभिभविष्यन्ति, अपरे नाभिभविष्यन्तीति किमु वक्तव्यम् ? । ये च तत्र त्वच्छासनातिगा आज्ञोल्लङ्घिनो दैत्यास्तान्मम चक्रं सुदर्शनं

**तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ॥ यन्नाधयो व्याधयश्च क्लमस्तन्द्रा पराभवः ॥ नोपसर्गानिव सतां सम्भवन्ति ममेक्षया ॥ ३२ ॥ इन्द्रसेन महाराज याहि भो भद्रमस्तु ते ॥ सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥ न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे ॥ त्वच्छासनातिगान् दैत्यांश्चक्रं मे सूदयिष्यति ॥ ३४ ॥ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ॥ सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥ तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः ॥ दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनङ्क्ष्यति ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे वरदाननिरूपणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ७९ ॥ ॥**

सूदयिष्यति हनिष्यति ॥ ३४ ॥ सर्वतः सर्वेभ्योऽप्युपद्रवेभ्यः सानुगं भृत्यादिसहितं सहपरिच्छदं भोगोपकरणसहितं च त्वामहं रक्षिष्ये । वीरत्वं तु तव सर्वथा सफलं जातमित्याशयेन सम्बोधयति— वीरेति । तत्र सुतले सदा सन्निहितं द्वार्यवस्थितं मां भवान् द्रक्ष्यति ॥ ३५ ॥ स्वदर्शनफलमाह— तत्रेति । दानवदैत्यानां सङ्गाद्धेतोर्यस्तवासुरो भावः स तत्र मदनुभावं स्वरूपं प्रभावं वा दृष्ट्वा कुण्ठः प्रतिहतः सन् सद्यो विनङ्क्ष्यत्येव ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र स्वोक्तनिर्वाहरूपणे ॥ द्वाविंशो विवृतोऽध्यायो वरदाननिरूपकः ॥ ३ ॥ ॥ ७९ ॥ ॥

त्रयोविंशे बलिर्यातः सुतलं सपितामहः ॥ उपेन्द्रसहितश्चेन्द्रः स्वर्गमिति निरूप्यते ॥ १ ॥ इत्येवमुक्तवन्तं पुरातनं पुरुषं श्रीवामनं बद्धोऽञ्जलिर्येन स बलिर्गद्गदया स्खलिताक्षरया गिराऽब्रवीत् । तथोक्तिस्तस्योचितैवेत्याशयेन तं विशिनष्टि— महाननुभावः ज्ञानभक्तिविरक्त्यादिप्रकर्षो यस्य सः। अतएवाखिलेषु साधुतया सम्मतः अतएव भक्त्या बाष्पस्य कलाभिर्बिन्दुभिराकुले नेत्रे यस्य सः। अतएव भक्त्योद्गलः उद्गतं बाष्पं गले यस्य सः, बाष्पनिरुद्धगल इत्यर्थः । अतो गद्गदयेति ॥ १ ॥ तदेवाह— अहो इति । 'रक्षिष्ये सर्वतोऽहं त्वाम्' इत्याद्यप्रार्थितमपि यद्दुर्लभं भगवता स्वयमेव दत्तं तन्न त्रिलोकीदानस्य फलं परमानन्दस्वरूपस्य पूर्णकामस्य तेन प्रयोजनाभावेन तथा प्रसन्नतासम्भवात्, किन्तु दैन्येन कृतप्रणामोघमस्येति मन्वान आश्चर्यं च कुर्वन्नाह— अहो त्वत्प्रणामस्य प्रभावो यदर्थं कृतः समुद्यम एव प्रपन्नानां शरणमागतानां भक्तानां योऽर्थोऽभिमतः

श्रीशुक उवाच ॥ इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः ॥ बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युद्गलो गद्गदया गिराऽब्रवीत् ॥ १ ॥ बलिरुवाच ॥ अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः ॥ यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा हरिमानम्य ब्रह्माणं सभ्भवं ततः ॥ विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥ एवमिन्द्राय भगवान् प्रत्यानीय त्रिविष्टपम् ॥ पूरयित्वाऽदितेः काममशासत् सकलं जगत् ॥ ४ ॥ लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम् ॥ निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥

पुरुषार्थस्तस्य विधौ सम्पादने समाहितः सावधानतया स्थितः । तत्र ज्ञापकमाह— यदिति । येन प्रणामोद्यमेन लोकपालैरिन्द्रादिभिरमरैर्देवैः सत्त्वप्रधानैरप्यलब्धपूर्वो योऽनुग्रहः सोऽपसदे नीचे असुरे मय्यर्पितः ॥ २ ॥ इत्येवमुक्त्वा हरिमानम्य प्रणम्य तथा ब्रह्माणं प्रणम्य ततो ब्रह्मणः सकाशात् सम्भवो यस्य तं श्रीरुद्रं च प्रणम्य पाशेभ्यो मुक्तः प्रीतश्च सन् असुरैः सह बलिः सुतलं विवेश, सुतललोकं प्रवेष्टुमुद्युक्तो बभूवेत्यर्थः ॥ ३ ॥ एवं बलेर्गृहीतं त्रिविष्टपं स्वर्गमिन्द्राय प्रत्यानीय समर्प्य अदितेः कामं पूरयित्वा भगवान् सकलं जगदशासत् स्वयमुपेन्द्रः सन् पालयामास ॥ ४ ॥ लब्धो भगवत्प्रसादो येन तं पाशेभ्यो निर्मुक्तं वंशधरं वंशवर्धनं पौत्रं बलिं निशाम्य दृष्ट्वा भक्तिप्रवणः भक्तितत्परः प्रह्लाद इदं वक्ष्यमाणमब्रवीत् ॥ ५ ॥

१ 'सभवम्' इति पाठान्तरे श्रीरुद्रेण सहित ब्रह्माणमित्यर्थः । २ अतएवाग्रे बलिसाहित्येन प्रह्लादस्य सुतलप्रवेशकथन सङ्गच्छते ।

तदेवाह— नेति त्रिभिः । विश्वाभिवन्द्यैः सकलजगत्पूज्यैः ब्रह्मादिभिरप्यभिवन्दितावङ्घ्री यस्य स त्वं नोऽस्माकमसुराणा दुर्गपालो जातोऽसीति यत् यः प्रसादस्तमिमं प्रसादं विरिञ्चो ब्रह्मा श्रीर्लक्ष्मीः शर्वो रुद्रश्च न लभते न लेभे, अपरे ते इन्द्रादयो न लेभिरे इति किमु वक्तव्यमित्यन्वयः ॥ ६ ॥ एवं अस्मासु तव प्रसादो न सद्गुणदर्शनेन प्रवृत्तः किन्तु केवलं कृपयैवेति सूचितं तदेव व्यञ्जयन्नाह— यत्पादेति । हे शरणद आश्रयप्रद ब्रह्मादयो यस्य तव पादपद्मयोर्यो मकरन्दस्तस्य नितरां सेवनेन साधनेन विभूतीः सृष्ट्यादिसामर्थ्यादैश्वर्याणि अश्नुवते प्राप्नुवन्ति तस्य भवतो ये वयं कुसृतयः दुर्वृत्ताः खलयोनयः उग्रजातयस्ते दाक्षिण्यदृष्टिपदवीं कृपादृष्टिविषयतां कस्माद्धेतोः प्रणीताः ? अन्यस्य हेतोरदर्शनात् । केवलं कृपयैवेत्याशयः ॥ ७ ॥ तवेहितं चेष्टितमहो चित्रमत्याश्चर्यम् । किं तत् तत्राह— स्वभावो विषम इति । अहो इत्यत्र सन्धिरार्षः । युक्तं चैतदित्याशयेनाह— समदृश इति ।

प्रह्लाद उवाच ॥ नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते ॥ यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः ॥ ६ ॥ यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः ॥ कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥ चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य ॥ सर्वात्मनः समदृशो विषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥ श्रीभगवानुवाच ॥ वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम् ॥ मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥

समदृक्त्वे हेतुमाह— सर्वात्मन इति, सर्वोपादानभूतस्येत्यर्थः । निमित्तत्वेनापि समदृक्त्वं युक्तमित्याशयेनाह— अमितेति । अमिता अचिन्त्या योगमाया सङ्कल्परूपा तया या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य । कथमेवं सङ्कल्पमात्रेण भुवनसृष्टिस्तत्राह— विशारदस्येति, सर्वथा सर्वं कर्तुं समर्थस्यातिनिपुणस्येत्यर्थः । ननु निग्रहानुग्रहादि कुर्वतः कुतो न वैषम्यं तत्राह— यदिति । यस्मात् कल्पतरुवत् स्वभावो यस्य तथाभूतः सन्नेव भक्ताः प्रिया यस्य तथाभूतोऽसीति, नहि कल्पतरुराश्रितानामेव कामान् पूरयन्नन्येषामपूरयन्नपि विषमो भवतीत्यर्थः ॥ ८ ॥ हे वत्सेति हे प्रह्लादेति सम्बोधनद्वयेन स्नेहं सूचयति । तव भद्रमस्तु । त्वं सुतलाख्यमालयं स्थानं प्रयाहि गच्छ । तत्र पौत्रेण बलिना सह मोदमानो ज्ञातीनां सुखमावह प्रापय ॥ ९ ॥

---

१ ओदन्तनिपातस्य प्रगृह्यत्वात्प्रकृतिभावमनुशास्ति भगवान्पाणिनिः ।

तत्र सुतले गदा पाणौ यस्य तथाभूतं द्वार्यवस्थितं मां नित्यं द्रष्टासि द्रक्ष्यसि । तस्य दर्शनस्य फलमाह— मद्दर्शनेन यो महानाह्लाद आनन्दस्तेन ध्वस्तं कर्मरूपं निबन्धनं संसारहेतुर्यस्य तादृशो भविष्यसीति ॥ १० ॥ एवंविधां भगवत आज्ञा मूर्ध्ना नमस्कारपूर्वकं बाढं तथास्त्विति वचसाऽप्याधायाङ्गीकृत्य कृताञ्जलिः संस्तमादिपुरुषं परिक्रम्य प्रदक्षिणीकृत्य प्रणतः पुनश्च कृतप्रणामस्तेन भगवताऽनुज्ञातश्च सन् बलिना सह प्रह्लादो महाबिलं सुतलं प्रविवेशेति द्वयोरन्वयः । एवं भगवदनुवर्तित्वे हेतुं सूचयन्विशिनष्टि—अमला रागलोभादिमलरहिता प्रज्ञा यस्य स इति । भगवदाज्ञानुवर्तित्वं तथापि सम्मतमेवेत्याशयेन सम्बोधयति—हे राजन्निति । असुरसेनासहितः प्रविष्ट इत्याशयेनाह— सर्वासुरचमूपतिरिति ॥ ११ ॥ १२ ॥ अथ तत्प्रवेशानन्तरं हे राजन् ब्रह्मवादिना सदसि सभायां तत्रापि ऋत्विजां मध्ये अन्तिके स्वसमीपे आसीनमुपविष्टमुशनसं शुक्रं हरिराहेत्यन्वयः।

नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ॥ मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥ श्रीशुक उवाच ॥
आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ॥ बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥ परिक्रम्यादिपुरुषं
सर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥ अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके ॥
आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥ ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ॥ यत्तत्कर्मसु
वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥ शुक्र उवाच ॥ कुतस्तत्कर्म वैषम्यं यस्य कर्मेश्वरो भवान् ॥ यज्ञेशो यज्ञपुरुषः
सर्वभावेन पूजितः ॥ १५ ॥

ननु कार्यस्य जातत्वात्पुनस्तदुक्तेः किं प्रयोजनमिति शङ्कानिरासायेति ज्ञेयम् । स हि सर्वदुःखहरणशीलः अतस्तेन वेदमर्यादाऽपि सर्वदुःखनिवृत्त्यर्थं रक्षणीया अन्यथा यज्ञासमाप्तौ सा लुप्येत हरित्वेऽपि हेतुमाह—नारायण इति, सर्वकारणभूत इत्यर्थः ॥ १३ ॥ हे ब्रह्मन्निति सम्बोधनं सम्मत्यर्थम्। कर्म वितन्वतः यज्ञं प्रकुर्वतः स्वशिष्यस्य यत् छिद्रं तत्र न्यूनं तत्सन्तनु विस्तारय पूरयेत्यर्थः। ननु यजमानं विना कथं तत्पूर्तिः कर्तव्येत्यत्राह—यत्तदिति । कर्मसु यद्वैषम्यं वैगुण्यं तद्ब्राह्मणैर्दृष्टमेव समं पूरितं भवेत्, किं पुनरनुष्ठितमित्यर्थः ॥ १४ ॥ तस्य बलेः कर्मणो वैषम्यं वैगुण्यं कुतः ? न कस्मादपि तत्र न्यूनता सम्भवतीत्यर्थः । तत्र हेतुमाह— यस्येति । कर्तरि षष्ठी। येन बलिना सर्वभावेन सर्वस्वार्पणेन परमया भक्त्या कर्मेश्वरः कर्मप्रवर्तकः शास्त्रकर्ता यज्ञेशो यज्ञफलदाता यज्ञपुरुषः यज्ञरूपेणोपास्यो भवान् पूजित इत्यन्वयः ॥ १५ ॥

किं वक्तव्यं तव पूजनं वैगुण्यनिवर्तकमिति यतः मन्त्रतः स्वरादिभ्रंशेन, तन्त्रतः अनुष्ठानव्युत्क्रमादिना, देशतः कालतश्च यथोक्तदेशकालोल्लङ्घनेन, अर्हतः पात्रतः यथोक्तसम्प्रदानाभावेन वस्तुतः दक्षिणादिवैषम्येण कर्मसु यच्छिद्रं वैगुण्यं तत्सर्वं तव नामसङ्कीर्तनमात्रमेव निश्छिद्रं सम्पूर्णं करोति ॥ १६ ॥ यद्यप्यस्मिन् कर्मणि वैषम्यं नास्त्येव तथापि वदतस्तवानुशासनमाज्ञां करिष्यामि यतो यत्तवाज्ञानुपालनं तदेतत् पुंसां परं श्रेयः परमपुरुषार्थसाधनमित्यर्थः । तत्र हेतुं सूचयन् सम्बोधयति— भूमन्निति ॥ १७ ॥ इत्येव हरेराज्ञामभिनन्द्य अङ्गीकृत्य भगवान् शास्त्रतात्पर्यज्ञ उशनाः शुक्रः बलेर्यज्ञस्य च्छिद्रमवशिष्टं विप्रर्षिभिः सह समाधत्त समादधे, अनुष्ठितवानित्यर्थः ॥ १८ ॥ एवं वर्णितं वामनचरित्रमुपसंहरति— एव-

**मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति निश्छिद्रं नामसङ्कीर्तनं तव ॥ १६॥ तथापि वदतो भूमन् करिष्याम्यनुशासनम् ॥ एतच्छ्रेयः परं पुंसां यत्तवाज्ञानुपालनम् ॥ १७ ॥ श्रीशुक उवाच ॥ अभिनन्द्य हरेराज्ञामुशना भगवानिति ॥ यज्ञच्छिद्रं समाधत्त[2] बलेर्विप्रर्षिभिः सह ॥ १८ ॥ एवं बलेर्महीं राजन् भिक्षित्वा वामनो हरिः ॥ ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम् ॥ १९ ॥ प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ॥ दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥ कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च ॥ लोकानां लोकपालानामकरोद्वामनं पतिम् ॥ २१ ॥ वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ॥ मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥ उपेन्द्रं[3] कल्पयाञ्चक्रे पतिं सर्वविभूतये ॥ तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥**

मिति । हे राजन् वामनरूपो हरिरेवं महीं बलेः सकाशात् भिक्षित्वा याचित्वा परैः शत्रुभिरसुरैर्यत् हृतं तत् त्रिदिवं स्वर्गं भ्रात्रे महेन्द्राय ददावित्यन्वयः ॥ १९ ॥ तदा प्रजापतिर्ब्रह्मा देवैः ऋषिभिः पितृभिः भूमिपैर्मनुतत्पुत्रैः दक्षादिभिश्च सह कश्यपस्यादितेश्च प्रीत्यै सर्वभूताना भवाय योगक्षेमनिर्वाहाय च लोकानां तत्पालाना च वामनं पतिमकरोदिति द्वयोरन्वयः ॥ २० ॥ २१ ॥ तदाधिपत्ये कथं सर्वेषां भद्रं तत्राह— वेदादीना कल्पं रक्षायां प्रदाने च समर्थमित्यर्थः । मङ्गलाना पुत्रजन्माद्युत्सवानाम् । व्रतानां सदाचाराणाम् ॥ २२ ॥ ननु लोकादीनां पतिरिन्द्रोऽस्त्येव, सत्यं, तथापि सर्वथा समर्थत्वात् सर्वेषां विभूतये वामनमुपेन्द्रं पतिं कल्पयाञ्चक्रे, यौवराज्यपदे स्थापयामासेत्यर्थः । तदेति स्पष्टम् ॥ २३ ॥

१ 'भवसः' इति पाठान्तरम् । २ 'समाधात्त' इति पाठान्तरम् । ३ 'वामन' इत्यपि पाठ ।

ततस्तु ब्रह्मणानुमोदितो लोकपालैः सहित इन्द्रो देववाह्येन यानेन वामनं पुरस्कृत्य दिवं स्वर्गं निन्ये प्रापयामास ॥ २४ ॥ इन्द्रश्च उपेन्द्रभुजाभ्यां पालितं त्रिभुवनं प्राप्य गतसाध्वसः निर्भयः परमया श्रिया जुष्टः सम्पन्नः मुमुदे ॥ २५ ॥ ततश्च हे नृप ब्रह्मादयः ये वैमानिकाः अन्येऽपि विमानारूढास्ते च ॥ २६ ॥ तत्र भूमियाचनमारभ्य बलिद्वारपालकत्वपर्यन्तं विष्णोः परमाद्भुतमत्याश्चर्यकरम् । तत्र हेतुः— सुमहत् इतरासाधारणं कर्म गायन्तः स्वानि धिष्ण्यानि स्थानानि जग्मुः । अदितिं च प्रशशंसिरे तुष्टुवुः ॥ २७ ॥ हे कुलनन्दनेति सम्बोधनेन त्वयैतच्छ्रवणेन स्वकुलमपि पवित्रीकृतमिति सूचयति । श्रोतृपदं वक्त्रादीनामुपलक्षणम् । श्रोत्रादीनामघमोचनं दोषनिवर्तकमुरुक्रमस्य वामनस्यैतत्सर्वं मया भवत आख्यातमित्यन्वयः ॥ २८ ॥ एतच्चरितं सर्वमाख्यातमिति विशेषोक्त्या अन्यान्यपि तच्चरितानि सन्तीति सूचितम्, तर्हि तानि निश्शेषाणि वर्णनीयानीत्यपेक्षाया-

ततरिन्द्रः पुरस्कृत्य देवयानेन वामनम् ॥ लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥ प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितम्[1] ॥ श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥ ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ॥ पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥ सुमहत्कर्म तद्विष्णोर्गायन्तः परमाद्भुतम् ॥ धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥ सर्वमेतन्मयाऽऽख्यातं भवतः कुलनन्दन ॥ उरुक्रमस्य चरितं श्रोतृणामघमोचनम् ॥ २८ ॥ पारं महिम्न उरुविक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः ॥ किं जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥ य इदं देवदेवस्य हरेरद्भुतकर्मणः ॥ अवतारानुचरितं शृण्वन्याति परां गतिम् ॥ ३० ॥

माह— पारमिति । उरुधा बहुधा विक्रमतोर्महिम्नः पारं निश्शेषं यो गृणानो ब्रुवाणो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् । यथा पार्थिवपरमाणुगणनमशक्यं तथा विष्णोर्गुणगणनमप्यशक्यमित्यर्थः । तथाच मन्त्रः " विष्णोर्नु कं वीर्याणि प्रवोचम् " इत्यादि । एतदेव मन्त्रान्तरार्थं सूचयन्नाह— किमिति । उतेति वाऽर्थे । जायमानो जातो वा मर्त्यः मनुष्यः यस्य पुरुषस्य पूर्णस्य भगवतो महिम्नः पारं किमुपैति प्राप्नोति ? नैव प्राप्नोतीत्येवं मन्त्रदृक् ऋषिर्वसिष्ठ आहेत्यन्वयः । तथाच मन्त्रः— " न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप " इति ॥ २९ ॥ शृण्वन्नपि कीर्तनस्मरणादेरप्युपलक्षणम् । यः पुमान् इदं हरेर्वामनावतारानुचरितं शृण्वन् कीर्तयन् स्मरन् वा भवति स परां सर्वोत्कृष्टां भगवत्सम्बन्धिनीं गतिं याति । तत्र हेतुमाह— देवदेवस्येति । श्रवणादिदशायामपि परमानन्दजनकं सूचयन्नाह— अद्भुतकर्मण इति ॥ ३० ॥

[1] ' उपेन्द्रभुजपालित ' इति पाठे इन्द्रविशेषणम् ।

एतत्कीर्तनादेः कर्मवैगुण्यनिवर्तकत्वमपीत्याह—क्रियमाण इति । अथशब्दो वाकारार्थे । दैवे पित्र्ये मानुषे वा कर्मणि क्रियमाणे यत्र यत्र इदं श्रीवामनचरितं कीर्त्येत तेषां कर्तॄणा तत्कर्मवृद्धाः शास्त्ररहस्यज्ञाः सुकृतं यथावत्कृत विदुः । तत्र दैवकर्म यज्ञादि । पितृकर्म श्राद्धादि । मानुषं कर्म गुर्वर्चनादि ॥ ३१ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे स्वोक्तनिर्वाहे विवृतिं गतः॥ त्रयोविंशो बलेस्तस्य सुतलस्थितिरूपकः ॥ ३ ॥ ॥ छ ॥ चतुर्विंशे प्रसङ्गेन राज्ञा पृष्टो महामुनिः ॥ मत्स्यावतारचारित्रमुवाचेति निरूप्यते ॥ १ ॥ ॥ एवं वामनचरितश्रवणनिर्वृतो राजा यथा वामनेनादौ सूक्ष्मं रूपं प्रदर्श्य ततो महद्रूपमाविष्कृतं तथा मत्स्येनापीति साम्येनोपस्थितत्वात् मत्स्यावतारचरितं पृच्छति— । भगवन्निति सम्बोधनं सर्वज्ञता ज्ञापनार्थम् । मायया यत् मत्स्यविडम्बनं मत्स्यरूपानुकरणं तत् यस्यां निरूप्यते तामाद्यां हरेरवतारकथामहं श्रोतुमिच्छामीत्यन्वयः । श्रवणे-

**क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ॥ यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे स्वोक्तनिर्वाहप्रकरणे बलेः सुतलप्रवेशादिनिरूपणं नाम त्रयोविंशतितमोऽध्यायः॥ २३ ॥ ॥ छ ॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ॥ अवतारकथामाद्यां मायामत्स्यविडम्बनम् ॥ १ ॥ यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ॥ तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥ एतन्नो भगवन् सर्वं यथावद्वक्तुमर्हसि ॥ उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥**

च्छायां चरितस्यालौकिकत्वं हेतुं सूचयन्नाह—अद्भुतकर्मण इति ॥ १ ॥ तस्या कथाया को वांऽशस्तव जिज्ञासितस्तत्राह— यदर्थमिति । स्वयमीश्वरः कालकर्मादिनियन्ताऽपि कर्मग्रस्तः कर्मपरवश इव यदर्थं मात्स्यं रूपमदधात्तदेतत्सर्वं हे भगवन्नोऽस्माकं यथावद्वक्तुमर्हसीति द्वयोरन्वयः । कर्मग्रस्तसादृश्ये हेतुमाह— दुर्मर्षमिति । नहि स्वतन्त्रो दुस्सहं रूपमङ्गीकरोतीत्याशयः । दुस्सहत्वे हेतुमाह—लोकेति । लोके जुगुप्सितं निन्दितमित्यर्थः । तत्रापि हेतुमाह— तम इति। तमः प्रकृतिः कारणं स्वभावो वा यस्य तत् । न केवलं मनोहरत्वमात्रं श्रवणेच्छायां हेतुः किन्तु परमपुरुषार्थहेतुत्वमपीत्याशयेनाह— सर्वेति । सर्वेषां लोकानां श्रोतृवक्तृस्मर्तृजनानां सुखमावहतीति तथा तत् । तत्र हेतुमाह— उत्तमेति । उद्गच्छति तमो ज्ञानं यस्मात्स उत्तमः, उत्तमः श्लोको यशो यस्य स उत्तमश्लोको भगवान् तस्य चरितमित्यर्थः । सर्वदुःखकारणपरमसुखरूपात्मावरकाज्ञाननिवर्तकत्वादित्याशयः ॥ २ ॥ ३ ॥

विष्णुरातेन परीक्षितेत्येवमुक्तः पृष्टो भगवान् सर्वज्ञो बादरायणिः शुकः मत्स्यरूपेण यत्कृतं तद्विष्णोश्चरितमुवाच ॥ ४ ॥ तत्र तावत्सर्वावतारसाधारणं प्रयोजनमाह—गोविप्रेति । ईश्वरः स्वतन्त्रोऽपि गवादीना रक्षामिच्छन्नेव तदनुकूलास्तनूर्धत्ते मत्स्यादिमूर्तीर्बिभर्ति ॥ ५ ॥ यदा शङ्कित जुगुप्सितत्वं तत्परिहरति—उच्चावचेष्विति । उत्कृष्टापकृष्टेषु भूतेषु देवमनुष्यतिर्यगादिषु ईश्वरश्चरन् तत्तदवतारैर्विहरन्नपि धियः प्रकृतेः गुणैर्नोच्चावचत्वं भजते तत्र दृष्टान्तमाह—वायुरिवेति । यथा वायुरुच्चावचेषु विचरन्नपि नोच्चावचत्व भजते तथेत्यर्थः । तत्र हेतुमाह—निर्गुणत्त्वादिति, जीववत्सत्वादिगुणपारवश्याभावादित्यर्थः ॥ ६ ॥ एव सामान्यप्रयोजनमभिधाय मत्स्यावतारप्रयोजनं तत्काल चाह—आसीदिति त्रिभिः । अतीतस्यातिक्रान्तस्य कल्पस्यान्ते ब्रह्मणो निद्रायां भवो ब्राह्मः तेनैव निमित्तेन जातो नैमित्तिकः लय आसीत् । तत्र तदा भूरादयस्त्रयो लोकाः समुद्रे उपप्लुता निमग्नाः

सूत उवाच ॥ इत्युक्तो विष्णुरातेन भगवान् बादरायणिः ॥ उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम् ॥ ४ ॥
श्रीशुक उवाच ॥ गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥ उच्चावचेषु
भूतेषु चरन् वायुरिवेश्वरः ॥ नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥ ६ ॥ आसीदतीव कल्पान्ते ब्राह्मो नैमित्तिको
लयः ॥ समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ ७ ॥ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ॥ मुखतो निस्सृतान्
वेदान् हयग्रीवोऽन्तिकेऽहरत् ॥ ८ ॥ ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ॥ दधार शफरीरूपं भगवान्
हरिरीश्वरः ॥ ९ ॥ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ॥ नारायणपरोऽतप्यत्तपः स सलिलाशनः ॥ १० ॥

आसन् ॥ ७ ॥ कालेन दिनावसानकालेन निमित्तेन आगता निद्रा यस्य तस्य अतएव शिशयिषोः शयनं कर्तुमिच्छोर्धातुर्ब्रह्मणो मुखतो निस्सृतान् आलस्येनावर्त्यमानान् वेदान् अन्तिके तत्समीपे आगत्य हयग्रीवाख्यो दानवः अहरत् ॥ ८ ॥ तदा दानवेन्द्रस्य हयग्रीवस्य तत् वेदहरणरूप चेष्टितं ज्ञात्वा हरिः शफरीरूपं मत्स्यरूपं दधार । ततस्तं हत्वा वेदानादाय समुद्रे विजहार । द्वितीये तथोक्तेरग्रे वक्ष्यमाणत्वाच्च । तथाकरणे हेतुमाह—ईश्वर इति । तत्र सामर्थ्यमाह— भगवानिति ॥ ९ ॥ तदवतारप्रयोजनान्तरं लीलां चाह— तत्रेत्यादिना । तत्र तस्मिन्नेवातीते कल्पे नाम्ना सत्यव्रतः कश्चित् राजर्षिरासीत् । स च सलिलमेवाशनं यस्य तथाभूतः संस्तपोऽतप्यत् । तत्र हेतुमाह— विवेकधैर्यादिगुणैर्महानिति । तत्र हेतुः— नारायणपर इति । भगवदेकशरण इत्यर्थः ॥ १० ॥

सपः परत्माह— य इति । योऽतीते कल्पे सत्यव्रताख्यस्तपोऽतप्यत्स एवासावस्मिन् महाकल्पे विवस्वतः सूर्यस्य तनयः श्राद्धदेव इति ख्यातः प्रसिद्धः हरिणा मनुत्वे मनोरधिकारे अर्पितः स्थापितः ॥ ११ ॥ तस्य सत्यव्रतस्य एकदा पूर्वस्मिन्नेव कल्पे कदाचित् कृतमालाया नद्या जलतर्पण कुर्वतोऽञ्जल्युदके काचिदेका शफरी अभ्यपद्यत प्राप्ता अदृश्यत ॥ १२ ॥ ततश्च हे भारत द्रविडेश्वरः द्रविडदेशाधिपतिः सत्यव्रतः तामञ्जलिगता शफरीं अञ्जलिगततोयेन सह नदीतोये उत्ससर्ज तत्याज, त्यक्तुमुद्यत इत्यर्थः ॥ १३ ॥ तमात्मानं त्यजन्तं महाकारुणिक नृपमतिकरुण यथा भवति तथा सा शफरी आह । किमाहेत्यपेक्षायां तदाह— हे राजन् यादोभ्यो जलचरेभ्यो भीतां अतएव दीनां मामस्मिन् तद्यासे सरिज्जले कथं विसृजसे त्यजसि । दीनाया मम रक्षैव ते युक्ता नोपेक्षेत्यत्र हेतुं सूचयन् सम्बोधयति— दीनवत्सलेति । कथं सजातिभ्यो भयं तत्राह— ज्ञातीनेव घातयन्तीति तथा तेभ्य

योऽसावस्मिन् महाकल्पे तनयः स विवस्वतः ॥ श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥ ११ ॥ एकदा
कृतमालायां कुर्वतो जलतर्पणम् ॥ तस्याञ्जल्युदके काचिच्छफर्येकाऽभ्यपद्यत ॥ १२ ॥ सत्यव्रतोऽञ्जलिगतां सह
तोयेन भारत ॥ उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥ तमाह साऽतिकरुणं महाकारुणिकं नृपम् ॥
यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ॥ कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥ १४ ॥
तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ॥ अजानन्रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥ तस्या दीनतरं वाक्य-
माश्रुत्य स महीपतिः ॥ कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥ सा तु तत्रैकरात्रेण वर्धमाना
कमण्डलौ ॥ अलब्ध्वात्मावकाशं[1] सा इदमाह महीपतिम् ॥ १७ ॥ नाहं कमण्डलावस्मिन् कृच्छ्रं वस्तुमिहोत्सहे ॥
कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १८ ॥

इति ॥ १४ ॥ स एवमुक्तः सत्यव्रतः शफर्या रक्षार्थं मनो दधे । ननु तस्या वस्तुतो भगवत्त्वात्तद्रक्षायां कथं मनो दधे तत्राह— आत्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरं तं भगवन्तमजानन्निति ॥ १५ ॥ तद्रक्षाप्रकारमाह— तस्या इति । तस्याः शफर्याः दीनतरं वाक्यमाश्रुत्य स दयालुर्महीपतिः एनां शफरीं कलशाप्सु कमण्डलुजले निधाय स्वाश्रमं प्रति निन्ये ॥ १६ ॥ सा तु शफरी एकरात्रेणैव तत्र कमण्डलौ अलब्धात्मावकाशं यथा भवति तथा वर्धमाना सती महीपतिं सत्यव्रतमिदं वक्ष्यमाणमाहेत्यन्वयः ॥ १७ ॥ तदेवाह— नेति । अस्मिन् कमण्डलावहं कृच्छ्र कष्टं यथा भवति तथा वस्तु वासं कर्तुं नोत्सहे । इह इदं सति यत्राहं सुखं यथा तथा निवसामि तादृशमोकः स्थानं कल्पय ॥ १८ ॥

१ 'अलब्धात्मावकाशा वा इदं' इति श्रीधरस्वाम्यादिसम्मतं पाठान्तरम् । तत्र 'वा' इत्यस्य 'वै' इति पदच्छेद । अत्र तु 'सा' इति पाठे सन्ध्यभाव ऐच्छिक, तेन सेत्यस्य पीनत्वस्य च । अत्र अलब्ध्वेति क्रियाविशेषणम् । अलब्ध्वेति पाठे तु क्त्वान्तं पदम् ।

स एवमुक्तः सत्यव्रतः कमण्डलोः सकाशादेनां शफरीमादाय निष्काश्य औदञ्चनोदके विपुलकटाहोदके न्यधात् निहितवान् । तत्रौदञ्चनोदके क्षिप्ता सा मुहूर्तमात्रेण कालेन हस्तत्रयमवर्धत ॥ १९ ॥ ततश्च पुनराह— न म इति । हे राजन् मे मम सुखं यथा तथा वस्तुमेतदुदञ्चनमलं पर्याप्तं न भवति अतो मह्यं पृथु विपुलं पदं स्थानं देहि, यस्मादहं त्वां शरणं गता ॥ २० ॥ एवमुक्तेन राज्ञा तत उदञ्चनात् आदाय निष्काश्य सा शफरी सरोवरे क्षिप्ता । ततोऽपि हे राजन् परीक्षित् सोऽयं महामीनः आत्मना स्वदेहेन तत् सरोवरमावृत्य अभिव्याप्यान्ववर्धतेत्यन्वयः ॥ २१ ॥ पुनश्चाह— राजन्निति, पुनः पुनः सम्बोधनेन रक्षासमर्थस्त्वमिति सूचयति । सलिलमेवौकः विहारस्थानं यस्य तस्य मे मम एतत् सरोवरोदकमपि स्वस्तये

स एनां तत आदाय न्यधादौदञ्चनोदके ॥ तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥ न म एतदलं राजन् सुखं वस्तुमुदञ्चनम् ॥ पृथु देहि पदं मह्यं यत्त्वाऽहं शरणं गता ॥ २० ॥ तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ॥ तदावृत्त्याऽऽत्मना सोऽयं महामीनोऽन्ववर्धत ॥ २१ ॥ नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ॥ निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ २२ ॥ इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ॥ जलाशये सम्मितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥ क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ॥ अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥ एवं विमोहितस्तेन वदता वल्गुभारतीम् ॥ तमाह को भवानस्मान् मत्स्यरूपेण मोहयन् ॥ २५ ॥

सुखाय न भवति । अतो रक्षायोगेन रक्षोपायेन अन्येऽविदासिनि अनुपक्षयजले महाह्रदे मां निधेहि स्थापय ॥ २२ ॥ इत्युक्तः स सत्यव्रतस्तं मत्स्यमविदासिनि उत्तरोत्तरविपुलजले तत्र तत्र जलाशये अनयत् । ततश्च तज्जलाशये सम्मितं तं झषं मत्स्यं समुद्रे प्राक्षिपत् ॥ २३ ॥ समुद्रे च क्षिप्यमाणो झषस्तं सत्यव्रतमिदमाह । हे वीर इह समुद्रे प्राक्षिप्तं मामतिबला मकरादयः अदन्ति अत्स्यन्ति अतो मामिह उत्स्रष्टुं प्रक्षेप्तुं त्वं नार्हसि ॥ २४ ॥ एवं वल्गुभारतीं सुन्दरवाचं वदता तेन मत्स्यरूपेण भगवता विमोहितः सत्यव्रतस्तमाह । तदेव दर्शयति— 'को भवान्' इत्यादिना 'इति ब्रुवाणम्' इत्यतः प्राक्तनेन ग्रन्थेन । मत्स्यरूपेणास्मान् मोहयन् क इति प्रश्नः ॥ २५ ॥

[illegible] । २ 'सोय' इति पाठः । ३ विपर्वकस्य दस उपक्षये इत्यस्य रूपं विदास उपक्षयस्तदभावोऽनुपक्षयस्तद्वतीत्यर्थः । ४ एतदग्रे त्रिंशच्छ्लोकपर्यन्तेन

कश्चिन्मत्स्यविशेष इति चेत्तत्राह— नेति। एवंवीर्यः एवम्प्रभाववान् कश्चिदपि जलचरोऽस्माभिर्न दृष्टो न वो श्रुतः। वीर्यमेव दर्शयन् विशिनष्टि— य इति। यो भवान् अह्ना एकदिवसमात्रेण कालेन योजनशतं सरोऽभिव्यानशे अभितो व्याप्तवान् ॥ २६ ॥ तर्हि त्वमेव तर्कय कोऽहमित्यत आह— नूनमिति। नूनं निश्चितमेवैतत् साक्षाद्भगवानेव त्वं भूतानां भक्तानामस्माकमनुग्रहाय जलौकसा मत्स्याना रूपं धत्से। तत्र हेतुमाह— हरिरिति, दुःखहरणशीलः। तत्र हेतुः— नारायणः, सर्वकारणत्वादित्यर्थः। एवं चेत्तर्हि विकारित्वं स्यादित्याशङ्क्याह— अव्यय इति ॥ २७ ॥ एवं परमोपकारिणस्तव प्रत्युपकारे त्वहं न समर्थ इत्याशयेन नमस्करोति नम इति। हे पुरुषश्रेष्ठ पुरुषोत्तम ते तुभ्यं नमोऽस्त्विति। स्वस्य तत्प्रत्युपकारसामर्थ्याभावे हेतुं सूचयंस्तं विशिनष्टि— हे विभो सर्वथासमर्थ हि यस्मात् स्थित्युत्पत्त्यप्ययानामीश्वरः कर्ता निमित्तम्। आत्मा सर्वात्मा उपादान च, तस्मादेव प्रपन्नानां शरणमागतानां भक्तानां नोऽस्माकं मुख्यः परमफलरूपा गतिस्तत्प्राप्तिसाधनं च भवानेव ॥ २८ ॥ एवं भगवन्तं प्रणम्यावतारप्रयोजनं पृच्छति— सर्वे

नैवं वीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि च ॥ यो भवान् योजनशतमह्नाऽभिव्यानशे सरः ॥ २६ ॥ नूनं त्वं भगवान् साक्षाद्धरिर्नारायणोऽव्ययः ॥ अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २८ ॥ सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ॥ ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥ न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत् सर्वसुहृत्प्रियात्मनः ॥ यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ३० ॥

इति। यद्यपि ते तव लीलावताराः सर्वे एव भूतानां भूतिहेतवः विभवप्रयोजनका इति सामान्यतस्तावज्जानामि तथापि यदर्थं भवता अदो मात्स्यरूपं धृतं तत्प्रयोजनविशेषं ज्ञातुमिच्छामीत्यन्वयः ॥ २९ ॥ तव कृपाकटाक्षेणैव संसारतापनिवृत्तिर्नान्यथेत्याशयेन सम्बोधयति— अरविन्दाक्षेति। पृथगात्मनां देहाद्यात्माभिमानवतां त्वदितरेषां पदोपसर्पणं शरणगमनं यथा मृषा व्यर्थं भवेत् तथा तव पदोपसर्पणं मृषा न भवेत्। तत्र हेतुमाह— सर्वसुहृत्प्रियात्मन इति। सर्वेषां सुहृदः हितकारिणः प्रियस्य प्रीतिविषयस्य आत्मनश्च। इतरेषामेतद्विपरीतत्त्वात्तत्पदोपसर्पणं निरर्थकमित्याशयः। एतदपि कथं ज्ञातं तत्राह— यत् यस्मात् हि सतां स्वभक्तानां नोऽस्माकमेतदद्भुतं वपुरदीदृशो दर्शितवानसि। पृथगात्मनोऽसतामिति पाठे तु पृथगात्मनो देहाद्यात्मदर्शिनः पुरुषस्य असतां विषयाविष्टचित्तानां पादोपसर्पणं यथा मृषा भवेत्तथेत्यर्थः ॥ ३० ॥

१ अपिद्वयमस्य पर्यायौ वेति। २ 'ह्यात्मा गतिर्विभो' इत्येवैतट्टीकाकारसम्मत, पाठ इति भाति। टीकासम्भिन्नमेतत्। ३ 'पृथगात्मनोऽसताम्' इतिपाठान्तरमर्थस्तु टीकायामेव दर्शित'।

इत्येवं ब्रुवाणं नृपतिं सत्यव्रतं प्रति मत्स्यवपुर्धरो जगत्पतिर्भगवानब्रवीदित्यन्वयः । तद्वपुः किमर्थं धृतमित्यपेक्षायामाह— युगक्षये कल्पक्षये प्रलयार्णवे विहर्तुकाम इति । आप्तकामस्य तथाविहारोऽपि कथं तत्राह— सत्यव्रतस्य प्रियं चिकीर्षुरिति । तत्रापि हेतुमाह— एकान्ताः स्वैकाश्रया जनाः प्रिया यस्य सः ॥ ३१ ॥ यदेतदवतारधारणप्रयोजनं पृष्टं तदाह— सप्तम इति । तस्मिन् स्वप्रीतिं सूचयन् सम्बोधयति— अरिन्दमेति । अद्यतनादह्न आरभ्य सप्तमेऽहनि एतत् भूर्भुवादिकं त्रैलोक्यमप्ययाम्भोधौ प्रलयसमुद्रे निमङ्क्ष्यति निमग्नं भविष्यति ॥ ३२ ॥ संवर्ताम्भसि प्रलयोदके त्रिलोक्यां लीयमानायां सत्यां तदैव काचिन्मयेरिता प्रेरिता विशाला नौर्नौका त्वां प्रत्युपस्थास्यति उपस्थिता भविष्यति ॥ ३३ ॥ त्वं च तावत्तदा सर्वा ओषधीः उच्चावचानि विविधानि बीजानि च- आदायेति शेषः- सप्तर्षिभिः परिवृतः सहितः सर्वैः सत्त्वैर्जन्तुभिश्चोपबृंहितः संवर्धितमहत्त्वः ॥ ३४ ॥ बृहतीं विपुलां नावमारुह्य

श्रीशुक उवाच ॥ इति ब्रुवाणं नृपतिं जगतातिः सत्यव्रतं मत्स्यवपुर्युगक्षये ॥ विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षुरेकान्तजनप्रियः प्रियम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम ॥ निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥ त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ॥ उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता ॥ ३३ ॥ त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ॥ सप्तर्षिभिः परिवृतः सर्वसत्वोपबृंहितः ॥ ३४ ॥ आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ॥ एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥ दोधूयमानां तां नावं समीरेण बलीयसा ॥ उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥ ३६ ॥ अहं त्वामृषिभिः साकं सहनावमुदन्वति ॥ विकर्षन् विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ॥ ३७ ॥ मदीयं महिमानं च परम्ब्रह्मेति शब्दितम् ॥ वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि ॥ ३८ ॥

अविक्लवो दैन्यरहितो विचरिष्यसि । तथापि सूर्याद्यालोकाभावादन्धकारे कथं यथासुखं स्थितिरित्याशङ्क्याह— एकार्णवे निरालोके सूर्याद्यालोकरहितेऽपि ऋषीणां वर्चसा प्रकाशेनैव विचरिष्यसि ॥ ३५ ॥ बलीयसा प्रचण्डेन समीरेण प्रबलवायुना दोधूयमानामतिशयेन कम्पमानां नावमुपस्थितां सन्निहितस्य मम शृङ्गे महाहिना उपस्थितेन वासुकिना निबन्धीहि ॥ ३६ ॥ अहं च ऋषिभिः सहितं सहनावं नौसहितं च त्वामुदन्वति प्रलयार्णवे विकर्षन् यावद्ब्राह्मी ब्रह्मसम्बन्धिनी निशा तावद्विचरिष्यामीत्यन्वयः ॥ ३७ ॥ परम्ब्रह्मेति शब्दितं कथितं मदीयं महिमानं स्वरूपं तत्कृतैः सम्प्रश्नैर्मया हृदि विवृतमुपदेशेन प्रकाशितमनुगृहीतमनुग्रहेण दत्तमिवापरोक्षं वेत्स्यसि ॥ ३८ ॥

१ निमङ्क्ष्यतीति पाठान्तरं मूले टीकायां च कुत्रचिद्दृश्यते ।

राजानं सत्यव्रतमेवमादिश्य हरिर्मत्स्यमूर्तिस्तत्रैवान्तर्हितवान् । ततः स सत्यव्रतो यं कालं ' सप्तमेऽद्यतनात् ' इति हृषीकेशः सर्वेन्द्रियानियन्ता मत्स्यरूपो भगवानादिशत्तं कालमन्ववैक्षत प्रतीक्षितवान् ॥ ३९ ॥ तत्प्रकारमाह—आस्तीर्येति । प्राक् स्वाग्रभागे मूलमग्रभागो येषां तथाभूतान् दर्भान् कुशानास्तीर्य तेषु प्रागुदङ्मुखः ईशानीदिगभिमुखो राजर्षिः सत्यव्रतः मत्स्यरूपिणो हरेः पादौ चिन्तयन् निषसाद उपविष्टवान् ॥ ४० ॥ ततश्च वर्षद्भिर्महामेघैर्वर्धमानः अतएवोद्वेलः उल्लङ्घितमर्यादः अतएव सर्वतो महीं प्लावयन् निमज्जयन् समुद्रः समदृश्यत ॥ ४१ ॥ ततश्च सत्यव्रतो भगवतो मत्स्यरूपिणः आदेशं ध्यायन् आगतां नावं ददृशे दृष्टवान् । ततश्च औषधीः वीरुधः बीजानि चादाय विप्रेन्द्रैः सप्तर्षिभिः सहितां

इत्थमादिश्य राजानं हरिरन्तरधीयत ॥ सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥ आस्तीर्य दर्भान् प्राङ्मूलान्राजर्षिः प्रागुदङ्मुखः ॥ निषसाद हरेः पादौ चिन्तयन् मत्स्यरूपिणः ॥ ४० ॥ ततः समुद्र उद्वेलः सर्वतः प्लावयन् महीम् ॥ वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥ ध्यायन् भगवदादेशं ददृशे नावमागताम् ॥ तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥ तमूचुर्मुनयः प्रीता राजन् ध्यायस्व केशवम् ॥ स वै नः सङ्कटादस्मादविता शं विधास्यति ॥ ४३ ॥ सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ॥ एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥ निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ॥ वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥

दोरक रेषुण

नावमारुरुहे ॥ ४२ ॥ ततस्तं सत्यव्रतं मुनयः सप्तर्षयः ऊचुः । हे राजन् केशवं ब्रह्मरुद्रादीनामपि सुखप्रदं भगवन्तं ध्यायस्व स वै केशव एव नोऽस्मान् अस्मात् सङ्कटात् अविता रक्षिष्यति शं सुखं च विधास्यति करिष्यति ॥ ४३ ॥ तत एवमुक्तेन राज्ञाऽनुध्यातः एकशृङ्गधरो हैमः स्वर्णाभः नियुतयोजनः लक्षयोजनपरिमितकायः मत्स्यरूपः स भगवान् तत्र महार्णवे प्रादुरासीदित्यन्वयः ॥ ४४ ॥ हरिणा पूर्वं यथोक्तस्तथैव वरत्रेण दोरकरूपेण अहिना वासुकिना नावं तस्य मत्स्यस्य शृङ्गे निबध्य सन्तुष्टचित्तस्तं मधुसूदनं भगवन्तं तुष्टाव ॥ ४५ ॥ स्तोत्रमेवाह— अनाद्यविद्येत्यादिना । अनाद्यविद्यया अनाद्यज्ञानेन उपहृता आत्मसंवित् स्वतत्त्वज्ञानं येषां ते अतएव तन्मूलेन अनाद्यविद्ययाऽऽत्मज्ञानविनाशनिमित्तेन संसारपरिश्रमेण

१ [illegible] सागरम् ॥ सत्यव्रतो गुरुत्वेन तुष्टाव हरिमग्रमिः ॥ अत्रेदं चिन्त्यम्—किमयं महाप्रलयो दैनन्दिनो वेति । तत्र तावत् आद्यो लय इति योऽसाव-[illegible] इति प्राप्तम्, नेति ब्रूम , महाप्रलये पृथिव्यादीनामवस्थानासम्भवात्, [illegible] विरोधाच्च ।अतो दैनदिन इति युक्तम् । न चैतदपि सङ्गच्छते—

आध्यात्मिकादितापत्रयेणातुराः व्याकुला जना इह संसारे यदृच्छया आकस्मिकया यत्कृपया उपसृताः यमाश्रिताः सन्तोषमेवाप्नुयुः स मुक्तिदो भवानेव परमः सर्वत उत्कृष्टो नोऽस्माकं गुरुर्भूयात् ॥ ४६ ॥ एतदेव स्पष्टयति— जन इति । अयं जनः असुखं दुःखं यथा भवति तथा सुखेच्छया कर्म लौकिकवैदिकव्यापारं समीहते करोतीत्यन्वयः । तत्र हेतुमाह— निजेति । निजकृतानि कर्माणि पुण्यपापात्मकान्येव बन्धनानि यस्य सः । पूर्वानुष्ठितकर्मवश्योऽपि पुनस्तत्करणादग्रेऽपि तथैव भविष्यतीति ज्ञेयम् । तत्र हेतुः— अबुध इति, अस्वरूपज्ञ इत्यर्थः । तर्हि कथमेतदनर्थनिवृत्तिरित्यपेक्षायामाह— यस्य तव सेवया त्वत्प्रसादेनाज्ञाननिवृत्त्याऽऽत्मज्ञानेन तामसन्मतिं देहाद्यात्माध्यासरूपा विधुनोति निरस्यति, ततश्च बन्धहेतुकर्मा-

जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् ॥ यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्या-
द्धृदयं स नो गुरुः ॥ ४७ ॥ यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान् विजह्यान्मलमात्मनस्तमः ॥ भजेत वर्णं निजमेष
सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥

भावाद्विमुक्तो भवति स भगवान्नोऽस्माकं हृदयं देहाद्यात्माध्यासलक्षणं ग्रन्थिं बन्धन भिन्द्यात् । यतः स एव गुरुः न तदनुग्रहमन्तरेण कस्यापि ज्ञानं मोक्षो वेत्यर्थः ॥ ४७ ॥ उक्तमेव दृष्टान्तेन स्पष्टयति— यत्सेवयेति । पुमान् मुमुक्षुः पुरुषो यस्य तव सेवया तमः अज्ञानरूपमात्मनो मलं तिरोधाय कं विजह्यात् त्यजेत् । तत्र दृष्टान्तमाह— अग्नेरिवेति । रुद्ररोदनं रजतं सुवर्णं च "यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रु व्यशीर्यत तद्रजतं हिरण्यमभवत्" इति श्रुतेः । तद्यथाऽग्नेः सेवयैवात्मनो निरवशेषं मलं जहाति निजं वर्णं शुद्धं स्वरूपं च भजते, न तु तथा क्षालनादिना तथाऽयमपि भगवदुपासनयैवाज्ञानं हित्वा स्वरूपं प्राप्नोति, नोपायान्तरेण । उपायान्तरस्य तु तदङ्गतो यो योगः स एष गुरोरपि परमः पूज्यो नो गुरुर्भूयात् । परमत्वे हेतुः— ईश इति । तत्रापि हेतुः— अव्यय इति, स्वरूपतो गुणतश्च व्ययरहित इत्यर्थः ॥ ४८ ॥

---

—सावर्तकैरनावृष्ट्यादिभिर्विना अकस्मादेव सप्तमेऽहनि त्रैलोक्य निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्ते । यच्चोक्त प्रथमस्कन्धे ' रूप स जगृहे मात्स्य चाक्षुषाऽन्तरसम्प्लवे ॥ नाव्यारोप्य महीमय्यामपाद्वैवस्वत मनुम् ' इति तदपि तदा दुर्घटम् । नहि प्रलयद्वयेऽपि महीमय्या नाव्यारोह सम्भवति । न च चाक्षुषमन्वन्तरे प्रलयोऽस्ति । तथाच सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घट स्यात् । ' त्व तावदोषधी सर्वा ' इत्यादिनिर्देशोऽपि न सङ्गच्छते । नहि तदा औषध्यादीना सत्त्वाना चावशेष सम्भवति । तस्मादन्यथा वर्ण्यते— नैवाय वास्तवः कोऽपि प्रलय किन्तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान्वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास । यथाऽस्मिन्नेव वैवस्वतमन्वन्तरे मार्कण्डेयाय दर्शितवान्, तदपेक्षयैव महाकल्पेऽस्मिन्निति विशेषण सङ्गच्छते । तथाच [illegible] सर्वतः [illegible] इति तस्यैव तथा दर्शनमुक्तमित्येषा दिगिस्येतच्छ्रीधरस्वामिमतं स्पष्टयिष्यते प्रकृताध्याये १७ श्लोके ( बालप्रबोधिनीव्याख्याया ) तत्र द्रष्टव्यम् ।

परमेश्वरत्वं परमगुरुत्वं च स्पष्टयति— नेति । पुंसो भगवद्विमुखतयाऽन्योपासकस्य देवा गुरवोऽन्ये च जनाः समेताः सर्वे मिलिता अपि स्वयं तन्निरपेक्षाः सन्तो यस्य तव प्रसादस्यायुतसङ्ख्याकानां भागानां मध्ये एकभागस्य लेशमात्रमपि कर्तुं न प्रभवन्ति तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥ अतस्तवैव गुरुत्वं युक्तं नान्यस्येत्याह—अचक्षुरिति । यथा अचक्षुः चक्षुर्हीनः स्वयमन्ध एवान्धस्य पुरुषान्तरस्याग्रणीः मार्गप्रदर्शने नेता कृतश्चेति । तर्हि तदन्नादिकं भक्षंस्तमादाय स्वयमपि मार्गगर्ते पतति अन्धत्वाविशेषात् । तथा अविदुषः अज्ञस्य जनस्य अबुधः अज्ञ एव गुरुः कृतश्चेत्तर्ह्यज्ञत्वाविशेषात् शिष्यधनादिकमादाय तेन सह स्वयमपि नरकादिगर्ते पतति न तमात्मानं वोद्धर्तुं शक्नोतीत्यर्थः । त्वं तु सर्वदृशा दृगुपलक्षितसर्वेन्द्रियाणां अन्तःकरणादीना च समीक्षणः प्रकाशकः सर्वज्ञ इत्यर्थः । ननु दृगादीना प्रकाशका आदित्यादयः प्रसिद्धास्तत्राह—अर्कदृगिति । अर्कादिप्रकाशकोऽपि त्वमेव 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्'॥ "तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं

न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनः स्वयम् ॥ कर्तुं समेतः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥
अचक्षुरन्धस्य यथाऽग्रणीः कृतस्तथा जनस्याविदुषोऽबुधो गुरुः ॥ त्वमर्कदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥ ५० ॥ जनो जनस्यादिशतेऽसतीं मतीं यया प्रपद्येत दुरत्ययं तमः ॥ त्वं त्वव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥ त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥

विभाति" इति स्मृतिश्रुतिभ्यः । अतएव स्वगतिमात्मतत्त्वं बुभुत्सद्भिः नोऽस्माभिस्त्व गुरुतया वृतोऽसि । कर्तरि षष्ठी ॥ ५० ॥ उक्तमेव स्पष्टयति—जन इति । जनः अज्ञो जनः गुरुत्वाभिमानवान् जनस्य अज्ञस्य संसारिणः असतीमर्थकामाद्युपायविषया मतिमादिशते उपदिशति । मतेरसत्त्वमेवाह—यया मत्या स दुरत्ययमनतिक्रमणीयं तमः नरकादिसंसारं प्रपद्येत प्राप्नोति त्वं तु अव्ययमविनाशि अमोघं मोक्षाविनाभूतं ज्ञानमात्मतत्त्वमुपदिशसि, येन ज्ञानेनाञ्जसाऽनायासेन जनो निजं त्वदीयं पदं स्वरूपं स्थानं वा प्रपद्यते प्राप्नोतीत्यन्वयः ॥ ५१ ॥ ननु तर्हि सर्वोऽपि जनो मामेव किं नोपसर्पतीत्यपेक्षायामज्ञानादित्याह— त्वमिति । त्वं सर्वलोकस्य सुहृन् हितकर्ता। तत्र हेतुमाह—प्रियेश्वर इति । प्रियश्चासावीश्वरः सर्वथा समर्थश्च सः । प्रियत्वे हेतुमाह—अभीष्टसिद्धिरिति, अभीष्टफलरूप इत्यर्थः। हि यस्मात् आत्मा । तत्रापि हेतुमाह—ज्ञानमिति, चैतन्यरूप इत्यर्थः । गुरुश्च ज्ञानप्रदः तथापि त्वामेवम्भूतमात्मानं हृदि सन्तमपि भवन्तमय लोको न जानाति । तत्र हेतुमाह— हृदि बद्धकाम इति, विषयासक्त इत्यर्थः । तत्र हेतुमाह—अन्धधीरिति, अविवेकीत्यर्थः । अन्यथा त्वां विहाय विषये नासक्तो भवेदित्यर्थः ॥ ५२ ॥

एवं ___मुक्त्वा पुनः स्वाभिप्रेतं प्रार्थयते—तमिति । तमुक्तविधं देववरं देवानामपि पूज्यम् । तत्र हेतुः— ईशं सर्वनियन्तारं अतएव वरेण्यमाश्रय-णीयं वरणीयं त्वां प्रति बोधनाय तत्त्वोपदेशाय प्रपद्ये शरणं व्रजामि । अतो हे भगवन् अर्थदीपैः परमात्मभूतपरमात्मप्रकाशकैः स्ववचोभिर्हृदय्यान् मद्धृदयगतान् ग्रन्थीन् ग्रन्थिवदनिर्मोच्यान् देहात्माभिमानादीन् छिन्धि अपाकुरु। स्वं स्वकीयं ओकः स्वरूपं विवृणु प्रकाशयेत्यर्थः ॥ ५३ ॥ इत्येवं उक्तवन्तं प्रार्थयमानं नृपतिं सत्यव्रतं प्रति महाम्भोधौ विहरन् मत्स्यरूपी भगवानादिपुरुषस्तत्त्वमब्रवीत् ॥ ५४ ॥ किं तत्तत्त्वमित्यपेक्षायामाह— पुरा-णेति । दिव्यां देवेन स्वेन प्रणीतां साङ्ख्यं प्रकृतिविलक्षणात्मयाथात्मज्ञानं यागो भक्तियोगः क्रिया नित्यनैमित्तिकादिक्रियायोगः त एते प्रतिपाद्य-तयाऽस्यां सन्तीति तथा ता पुराणसंहितां मत्स्यपुराणं सत्यव्रतस्याब्रवीदित्यनुषङ्गः । एतत्कथनेनैव न किञ्चिद्वक्तव्यमवशिष्यते इत्याह—अशेषतः कात्स्न्येन आत्मनो गुह्यं रहस्यमिति । तस्य तच्छ्रवणयोग्यतामाह—राजर्षेरिति ॥ ५५ ॥ तदेतद्भगवता प्रोक्तमात्मनः प्रत्यगात्मनस्तत्त्वं परमार्थभूतं

तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रति बोधनाय ॥ छिन्ध्यर्थदीपैर्भगवन् वचोभिर्ग्रन्थीन् हृदय्यान् ववृणु स्वमोकः ॥ ५३ ॥
श्रीशुक उवाच ॥ इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः ॥ मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत् ॥ ५४ ॥
पुराणसंहितां दिव्यां साङ्ख्ययोगक्रियावतीम् ॥ सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥ अश्रौषीदृषिभिः
साकमात्मतत्त्वमसंशयम् ॥ नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातम् ॥ ५६ ॥ अतीतप्रलयापाय उत्थिताय स वेधसे ॥
हत्वाऽसुरं हयग्रीवं वेदान् प्रत्याहरद्धरिः ॥ ५७ ॥

सनातनं ब्रह्म ऋषिभिः सह नाव्यासीनः सत्यव्रतो निस्संशयं यथा भवति तथा अश्रौषीत् शुश्राव ॥ ५६ ॥ स हरिः मत्स्यमूर्तिः प्रथममेव हयग्रीव मसुरं हत्वा ततो वेदानादाय प्रलयार्णवे विजहार । यथोक्तं द्वितीये—ब्रह्मणा 'विस्रंसितानुरुभये सलिले मुखान्म आदाय तत्र विजहार ह वेदमा-र्गान्' इति । ततश्चातीतः पूर्वो यः प्रलयस्तस्यापायेऽवसाने शयनादुत्थिताय वेधसे ब्रह्मणे वेदान् प्रत्याहरत् समर्पयामास । अय च प्रलयो दैनन्दिन एव । 'कालेनागतानिद्रस्य धातुः शिशयिषोः, यावद्ब्राह्मी निशा' इत्याद्युक्तेः स्पष्टत्वात् । न च वृष्ट्यादिनिमित्ताभावः 'वर्षद्भिर्महामेघैर्वर्द्धमानः समुद्रः प्लावयन् महीम्' इत्युक्तत्वात्[2] । न च 'चाक्षुषोदधिसम्प्लवे इति प्रथमोक्तेश्चाक्षुषस्य षष्ठमनुत्वेन तदा प्रलयासम्भवः मनूनां नियतक्रमाभावेन तस्मिन् कल्पे चाक्षुषस्यान्तिममनुत्वाङ्गीकारप्रलयसम्भवात् । न च प्रलये पृथ्व्योषध्यादीनामवशेषासम्भवः भगवदिच्छायाः सर्वतो बलिष्ठत्वेन तयासर्वसम्भवात् । न च मार्कण्डेयाय प्रदर्शितप्रलयवदस्यापि मायिकत्वं युक्तम्, तत्र मायिकत्वस्य मूले स्पष्टत्वात् । अत्र तदङ्गीकारे मूलोक्तसर्वविरोधापत्तेः ॥ ५७ ॥

१ 'भिन्धि' इति पाठान्तर मूलेऽपि । २ इत प्राक् एकचत्वारिंशच्छ्लोके ।

स तु सत्यव्रताख्यौ राजा विष्णोः प्रसादात् शास्त्रोक्तं ज्ञानं अपरोक्षं विज्ञानं ताभ्यां संयुतोऽस्मिन् कल्पे वैवस्वतः सूर्यपुत्रः श्राद्धदेवाख्यो मनुरासीत् ॥ ५८ ॥ एतदाख्यानश्रवणादिफलमाह— सत्यव्रतस्य राजर्षेर्मायया इच्छया मत्स्यमूर्तेः शार्ङ्गिणो भगवतश्च संवादात्मकं महदाख्यानं श्रुत्वा जनः किल्बिषात् सर्वपापाद्विमुच्येत ॥ ५९ ॥ न केवलं पापनिवृत्तिरेव फलं किन्तु योऽयं हरेरवतारस्तं यो नरोऽन्वहमहरहः कीर्तयेत्तस्येह जीवतः सर्वे सङ्कल्पाः मनोरथाः सिद्ध्यन्ति । देहावसाने तु स परमां भागवतीं गतिं मुक्तिं याति ॥ ६० ॥ उपवर्णितं चरितं स्मरन् श्रीशुकः स्वयं नमस्करोति— प्रलयेति । यः प्रलयपयसि प्रलयार्णवे विहरन् सुप्ता लीना शक्तिः सृष्टिसामर्थ्यं यस्य निद्राभिभूतस्य धातुर्ब्रह्मणो मुखेभ्योऽपनीतं निस्सृतं हयग्रीवेण हृतं

स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ॥ विष्णोः प्रसादात् कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥ ५८ ॥ सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ॥ संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥ अवतारो हरेर्योऽयं कीर्तयेदन्वहं नरः ॥ सङ्कल्पास्तस्य सिद्ध्यन्ति स याति परमां गतिम् ॥ ६० ॥ प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ॥ दितिजमकथयद्यो ब्रह्म सत्यव्रतानां[1] तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे सत्कर्मवक्तृमत्स्यावतारनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥

श्रुतिगणं तं दितिजं दैत्यं हत्वा प्रत्युपादत्त तत आदाय ब्रह्मणे ददौ । तथा सत्यव्रतानां सत्यव्रतस्य ऋषीणां च ब्रह्म ब्रह्मप्रतिपादकं पुराणमकथयत्, तमखिलहेतुं सर्वकारणभूतं जिह्ममीनं कपटेन मीनरूपं भगवन्तमहं नतोऽस्मि ॥ ६१ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता ह्यष्टमे तत्र धर्मवक्तृनिरूपणे ॥ चतुर्विंशो गतो वृत्तिं मत्स्यावताररूपकः ॥ ३ ॥ अष्टमस्कन्धटीकेयं यत्कृपालवलेशतः ॥ गता पूर्तिं स तुष्येन्मे मुकुन्दो दीनवत्सलः ॥ ४ ॥ ॥ छ ॥

[1] 'ब्रह्म सत्यव्रताय' इति पाठान्तरं क्वचित् ।

## समाप्तोऽयमष्टमस्कन्धः ।

इति श्रीमद्भागवते बालप्रबोधिनीटीकासमन्विते

अष्टमस्कन्धः समाप्तः ।

# ॥ अथ श्रीमद्भागवते नवमस्कंधः प्रारभ्यते ॥



नवमस्कंध, कपिल मुनिका आश्रम.

श्रीगोपालकृष्णाय नमः ॥ यस्यै लीलाः प्रगायन्तो मुच्यन्ते कर्मबन्धनात् ॥ नवमस्कन्धटीकायाः स करोतु सहायताम् ॥ १ ॥ चतुर्विंशतिभिः प्रोक्तः सद्धर्मो वासनाक्षये ॥ अथ तावद्भिरध्यायैः कथा हीशस्य वर्ण्यते ॥ २ ॥ ॥ एवं पूर्वोक्तैः सद्धर्मैर्विशुद्धान्तःकरणाना भगवत्कथायामधिकारात् सद्धर्मनिरूपणानन्तरं क्रमप्राप्तेशानुकथा चतुर्विंशतिभिरध्यायैर्निरूप्यते, तत्रच ‘ अवतारानुचरितं हरेरस्यानुवर्तिनाम् ॥ पुंसामीशकथा प्रोक्ता ’ इति वाक्यात् रामकृष्णादयो भगवदवताराः साक्षादीशाः, अन्ये पुनस्तद्भक्तास्तद्दत्तैश्वर्यादीशास्तेषां कथा ईशानुकथा, तत्र च प्रकरणद्वयं सूर्यवंशनिरूपणप्रकरणं सोमवंशनिरूपणप्रकरणं च, तत्र—त्रयोदशभिरध्यायैः सूर्यवंशनिरूपणम् ॥ एकादशभिरध्यायैः सोमवंशनिरूपणम् ॥ ३ ॥ सोमवंशप्रवेशोक्तेः सूर्यवंशं तु पूर्वतः ॥ मनुपुत्रसुद्युम्नस्य योषिद्भावो निरूप्यते ॥ ४ ॥ ॥ ‘ सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥ इक्ष्वाकुश्च नृगश्चैव ’

॥ श्रीगणेशाय नमः ॥ ॐनमो भगवते वासुदेवाय ॥ ॥ राजोवाच ॥ मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे ॥ वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥ योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः ॥ ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया ॥ २ ॥ स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् ॥ त्वत्तस्तस्य सुताश्चोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥ तेषां वंशं पृथग्ब्रह्मन् वंश्यानुचरितानि च ॥ कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥

इत्यादिना सङ्ग्रहेणोक्तं मनुवंशं श्रुत्वा तद्विस्तरबुभुत्सुरुक्तानुवादपूर्वकं राजा पृच्छति—मन्वन्तराणीति पञ्चभिः । सर्वाणि चतुर्दशानि मन्वन्तराणि मन्वादिष्ठानि त्वयोक्तानि तथा तत्र तेषु मन्वन्तरेषु कृतानि अनन्तं वीर्यं प्रभावो यस्य तस्य हरेर्वीर्याणि च त्वयोक्तानि तानि च मे मया श्रुतानि ॥ १ ॥ योऽसौ द्रविडदेशाधिपतिः सत्यव्रतो नाम राजर्षिः पुरुषस्य मत्स्यरूपिणो भगवतः सेवया आराधनेनातीतकल्पान्ते ज्ञान लेभे ॥ २ ॥ वै अवधारणे। स एवास्मिन् कल्पे विवस्वतः पुत्रः सन्मनुरासीदिति त्वत्त एव मया श्रुतम् । एवमनुवादं कृत्वाऽथ प्रष्टव्यं पृच्छति— ये च तस्य मनोः सुता इक्ष्वाकुप्रमुखा नृपास्त्वया प्रोक्ताः ॥ ३ ॥ हे ब्रह्मन् सर्वज्ञ हे महाभाग भगवद्भक्तत्वेन परमोपकारिन् तेषा वशं वंश्यानां वंशजानामनुचरितानि च नित्यं श्रोतुमिच्छतां नोऽस्माकं कीर्तयस्व । हिशब्दो विलम्बो न कर्तव्य इति सूचनार्थः ॥ ४ ॥

श्रीकृष्णाय वागीश्वराय नमः । वागीश्वर नमस्कृत्य वर्ण्यते हीशसत्कथा ॥ द्वाभ्यां प्रकरणाभ्या सा नवमे ऽनवमाधुना ॥ १ ॥ प्रकरणादिविवेकस्तु टीकाया स्फुट प्रतीयतेऽतो न पिष्टपेषायित ।

तस्य मनोर्वंशे ये भूताः अतीताः ये च भविष्या भाविनो ये चाद्यतना वर्तमाना भवन्ति तेषां सर्वेषां पुण्या पुण्यावहा कीर्तिर्येषां तेषां विक्रमान् चरितानि नोऽस्माकं वद ॥ ५ ॥ एवं परीक्षिता राज्ञा पृष्टः शुकः प्रोवाच । तत्र प्रश्नोत्तरयोः साधुत्वं सूचयन्नाह—ब्रह्मवादिनां सदसि सभायामिति । सर्वतो निरपेक्षस्यापि शुकस्य कथने हेतुं सूचयन्नाह— परमधर्मविदिति, भगवद्गुणवर्णनस्य परमधर्मत्वाभिज्ञ इत्यर्थः । तत्र हेतुः—भगवानिति, सर्वज्ञ इत्यर्थः ॥ ६ ॥ हे परन्तपेति सम्बोधनेन जितेन्द्रियत्वेन तव श्रवणयोग्यताऽस्तीति सूचयति । मानवो वैवस्वतमनोः सम्बन्धी वंशः प्राचुर्येण प्राधान्येन कथ्यमानस्त्वया श्रूयताम् । साकल्येनाकथने हेतुमाह— न शक्यते इति स्पष्टार्थः ॥ ७ ॥ एवं मनुवंशकथन प्रतिज्ञाय श्रीनारायणमारभ्यो-

ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये ॥ तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥ ५ ॥ सूत उवाच ॥ एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ॥ पृष्टः प्रोवाच भगवाञ्छुकः परमधर्मवित् ॥ ६ ॥ श्रीशुक उवाच ॥ श्रूयतां मानवो वंशः प्राचुर्येण परन्तप ॥ न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥ परावरेषां भूतानामात्मा यः पुरुषः परः ॥ स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥ ८ ॥ तस्य नाभेः समभवत् पद्मकोशो हिरण्मयः ॥ तस्मिन् जज्ञे महाराज स्वयम्भूश्चतुराननः ॥ ९ ॥ मरीचिर्मनसस्तस्य जज्ञे तस्यापि कश्यपः ॥ दाक्षायण्यां ततोऽदित्यां विवस्वानभवत्सुतः ॥ १० ॥ ततो मनुः श्राद्धदेवः सञ्ज्ञायामास भारत ॥ श्रद्धायां जनयामास दश पुत्रान् स आत्मवान् ॥ ११ ॥

क्तमपि वंशमनुस्मारयति— परावरेषामिति । यः परावरेषामुच्चावचानां भूतानामात्मा उपादानभूतः परः पुरुषः श्रीनारायणः स एव कल्पान्ते प्रलयदशायां इदं विश्वमासीत् । तत्रैवेदं सर्वं लीनमासीत् अतोऽन्यत्किञ्चनापि नासीत् । तस्य श्रीनारायणस्य नाभेः सकाशात् हिरण्मयः प्रकाशमानः पद्मकोशः समभवत् । तस्मिन् पद्मकोशे हे महाराज चतुराननः चतुर्मुखः स्वयम्भूः ब्रह्मा जज्ञे जातः ॥ ८ ॥ ९ ॥ तस्य ब्रह्मणो मनसः सकाशान्मरीचिर्जज्ञे । तस्यापि मरीचेः कश्यपः पुत्रो जज्ञे । ततः कश्यपात् दाक्षायण्यामदित्या विवस्वान् सुतोऽभवत् ॥ १० ॥ हे भारत ततस्तस्मात् विवस्वतः सञ्ज्ञाया भार्यायां श्राद्धदेवाख्यो मनुरास जातः । स च आत्मवान् प्रशस्तमनस्को मनुः श्रद्धाख्यायां स्वभार्यायां दशपुत्रान् जनयामास ॥ ११ ॥

तान् दर्शयति— इक्ष्वाकुरिति । इक्ष्वाकादीन् दश पुत्रान् विदुरित्यन्वयः ॥ १२ ॥ सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधात् पुरूरवःप्रभृतिसोमवंशप्रवृत्तिं वक्तुं सप्रस्तावमिलोपाख्यानमाह— अप्रजस्येत्यादिना यावदध्यायसमाप्ति । पूर्वमिक्ष्वाकुप्रभृतीनामुत्पत्तेः प्राक् अप्रजस्य मनोः प्रजार्थं मित्रावरुणदेवताकामिष्टिं मनोराचार्यो वसिष्ठः अकरोत् अकारयत् । सप्रजत्वसम्पादने तस्य सामर्थ्यमाह— प्रभुरिति । तत्रापि हेतुमाह— भगवानिति, ज्ञानैश्वर्यादियुक्त इत्यर्थः । तत्प्रसिद्धिं सूचयति— किलेति ॥ १३ ॥ तत्र तस्मिन् यागे क्रियमाणे सति पयोव्रता पय एव व्रतं नियत आहारो यस्याः तथाभूता श्रद्धाख्या मनोः पत्नी होतारमुपागम्य तं प्रणिपत्य च दुहित्रर्थं समयाचत, मम कन्या यथा भवेत्तथा यजेति प्रार्थितवतीत्यर्थः ॥ १४ ॥ ततोऽध्वर्युणा हे होतर्यजेति प्रेषितो होता हविषि गृहीते सति सुसमाहितः एकाग्रचित्तस्तत्तया प्रार्थितं ध्यायन् वाचा च वषट्कारं गृणन् वषडित्युच्चरन्

इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ॥ नरिष्यन्तं पृषध्रं च नभगं च कविं विदुः ॥ १२ ॥ अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल ॥ मित्रावरुणयोरिष्टिं प्रजार्थमकरोत् प्रभुः ॥ १३ ॥ तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ॥ दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥ प्रेषितोऽध्वर्युणा होता ध्यायंस्तत्सुसमाहितः ॥ हविषि व्यचरत्तेन वषट्कारं गृणन् द्विजः ॥ १५ ॥ होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत् ॥ तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् ॥ १६ ॥ भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ॥ विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया ॥ १७ ॥

तेन गृहीतेन हविषा व्यचरत् अयजत् । तस्य तथाध्यानेऽपि कथं तत् सिद्ध्येत्तत्राह— द्विज इति, ब्राह्मणत्वात्तत्प्रकारज्ञ इत्यर्थः ॥ १५ ॥ तत्तेन होतुर्व्यभिचारेण यजमानसङ्कल्पाद्विपरीतसङ्कल्परूपेण इलेति नाम प्रसिद्धा कन्या साऽभवत् । तां कन्या विलोक्य नातिहृष्टं मनो यस्य स मनुर्गुरुं वसिष्ठं प्राह । अप्रजत्वात् कन्याप्रजत्वमेव वरमिति सूचयितुमतिशब्दः ॥ १६ ॥ तदुक्तिमेवाह— भगवन्निति द्वयेन । हे भगवन् इदं किं जातम् ? । किं तत्राह— ब्रह्मवादिनां वो युष्माकं युष्माभिरनुष्ठितं कर्म विपर्ययं सङ्कल्पितफलाद्विपरीतफलप्रापकमिति । भवत्वेवं को दोष इत्यत्राह— अहो कष्टमिति । ब्रह्मविक्रिया मन्त्रविपर्यास एवं मा स्यात् न भवेत् । अन्यथा वैदिककर्ममन्त्रादिविश्वासलोपेन सन्मार्गो विनश्येत्तदा महत्कष्टं स्यादित्यर्थः ॥ १७ ॥

१ 'नाभाग.' इति पाठान्तरं, तत्र नभगः एव नाभाग इति श्रीधरस्वामी । २ 'विभुः' इति कश्चित्पाठः । तत्र प्रथमान्तपाठे मनोर्विशेषणम्, द्वितीयान्तपाठे कविमित्यस्य विशेषणम् ।

उक्तमेव स्पष्टयति— यूयमिति । यूयं मन्त्रविदः मन्त्रस्वरूपतदर्थतत्प्रयोगविदः युक्ताः वशीकृतेन्द्रियान्तःकरणाः तपसा दग्धं किल्बिषं पापं येषां ते तथैवम्भूतानां युष्माकं सङ्कल्पवैषम्यं कुतः कस्माद्धेतोर्बभूव । तत्र दृष्टान्तमाह— अनृतमिति । विबुधेषु देवेषु सात्त्विकत्वाद्यथाऽनृतमसम्भावितं तथा ब्रह्मविदां सङ्कल्पवैषम्यमसम्भावितमित्यर्थः ॥ १८ ॥ तदुक्तं तस्य मनोर्वचो निशम्य श्रुत्वा प्रपितामहः वसिष्ठः होतुर्व्यतिक्रमं सङ्कल्पविपर्ययं ज्ञात्वा रविनन्दनं श्राद्धदेवं प्रति बभाषे । तद्व्यभिचारज्ञाने हेतुमाह— भगवानिति, सर्वज्ञ इत्यर्थः ॥ १९ ॥ किं बभाषे इत्यत आह— एतदिति । यद्यपि होतुर्व्यभिचारतः विपरीतं सङ्कल्पाद्धेतोस्ते तवैतत्सङ्कल्पवैषम्यं सङ्कल्पिताद्विपरीतं फलं जातं तथापि स्वतेजसा स्वतपोबलेन सुप्रजस्त्वं तव साधयिष्ये, कन्याया एव पुत्रत्वं साधयिष्ये इत्यर्थः ॥ २० ॥ महतां प्रभावस्त्वया बहुशो दृष्टोऽतोऽत्रापि विश्वासः कर्तव्य इति सूचयन् सम्बोधयति— राजन्निति ।

यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ॥ कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥ तन्निशम्य वचस्तस्य
भगवान् प्रपितामहः ॥ होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥ एतत्सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः ॥
तथापि साधयिष्ये ते सुप्रजस्त्वं स्वतेजसा ॥ २० ॥ एवं व्यवसितो राजन् भगवान् स महायशाः ॥ अस्तौषीदादि-
पुरुषमिलायाः पुंस्त्वकाम्यया ॥ २१ ॥ तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः ॥ ददाविलाऽभवत्तेन सुद्युम्नः
पुरुषर्षभः ॥ २२ ॥ स एकदा महाराज विचरन् मृगयां वने ॥ वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥ २३ ॥

एवं व्यवसितः कृतनिश्चयः स वसिष्ठः इलायाः कन्यायाः पुंस्त्वकाम्यया पुंस्त्वसम्पादनेच्छया आदिपुरुषं भगवन्तमस्तौषीत् । वसिष्ठे चेदृशः प्रभावो नासम्भावितो लोके प्रसिद्धत्वादित्याशयेनाह— महायशा इति । तत्र हेतुः— भगवानिति, ज्ञानैश्वर्यादिमानित्यर्थः ॥ २१ ॥ ततश्चेश्वरः सर्वं कर्तुं समर्थस्तथापि हरिः भक्तदुःखहर्ता भगवांस्तत्कृतेन स्तोत्रेण तुष्टः प्रसन्नस्तस्मै वसिष्ठाय कामवरं कामितमिलायाः पुंस्त्वरूपं वरं ददौ । तेन वरेण सा इला सुद्युम्नाख्यः पुरुषश्रेष्ठ अभवत् ॥ २२ ॥ मृगयाया अनर्थहेतुत्वं तु त्वयाऽनुभूतमेवेत्याशयेन सम्बोधयति— महाराजेति । यौवनमपि मृगयाहेतु-रित्याशयेनाह— वीर इति । स वीरः सुद्युम्नः एकदा वने विचरन् मृगयां कर्तुं दंशितो बद्धकवचः कतिपयैरमात्यैः सेनापतिभिः परिवृतो रुचिर चापं धनु-

१ मरुस्थदृशीनरेषु जलमितिवत् दृष्टान्तः । विबुधेष्वनृतमिव युष्मासु सङ्कल्पवैषम्य सङ्कल्पान्यथात्व कुत २ यथा विबुधेष्वनृत नास्ति तथा युष्मास्वपि सङ्कल्पवैषम्येण न भाव्यमित्यर्थ ।

स्तत्राद्भुताभिशिशितान् शरांश्च प्रगृह्य सैन्धवं सिन्धुदेशोद्भवं अश्वमारुह्य उत्तरां दिशं प्रति अनुमृगं जगामेति द्वयोरन्वयः ॥ २३ ॥ २४ ॥ स कुमारो मनुपुत्रः सुद्युम्नो यत्र भगवान् शर्वो रुद्रः उमया सह रममाण आस्ते तन्मेरोरधस्ताद्वर्तमानं वनं प्रविवेशेत्यन्वयः । स्त्रीभावाद्भवत्कृपया पुम्भावं प्राप्तस्यापि पुनः स्त्रीत्वप्राप्तेः खेदं सूचयति—हेति ॥ २५ ॥ आश्चर्यश्रवणसावधानो भवेत्याशयेन सम्बोधयति—नृपेति । परान् शत्रून् वीरान् हन्तीति तथाभूतोऽसौ सुद्युम्नस्तस्मिन्वने प्रविष्ट एव प्रवेशमात्रेणैवात्मानं स्त्रियं अश्वं वडवां चापश्यत् ॥ २६ ॥ तथा तस्य सुद्युम्नस्यानुगाः सर्वे आत्मलिङ्गस्य पुंस्त्वस्य विपर्ययं स्त्रीत्वं दृष्ट्वा परस्परं वीक्षमाणाः विमनसः खिन्नचित्ता अभूवन् ॥ २७ ॥ पञ्चमस्कन्धे 'यत्प्रविष्टस्य स्त्रीभाव आपद्यते तन्निमित्तं पश्चाद्वक्ष्ये' इति शुकेन प्रतिज्ञातस्य स्त्रीत्वापत्तिनिमित्तोपपादनस्यावसरं प्राप्तमालोक्य तद्बुभुत्सुः परीक्षित्पृच्छति—कथमिति । एवंविधः प्रवेशमात्रेण स्त्रीसम्पादकत्व-

प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ॥ दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥ २४ ॥ स कुमारो वनं मेरोरधस्तात् प्रविवेश ह ॥ यत्राऽऽस्ते भगवाञ्छर्वो रममाणः सहोमया ॥ २५ ॥ तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा ॥ अपश्यत् स्त्रियमात्मानमश्वं च वडवां नृप ॥ २६ ॥ तथा तदनुगाः सर्वे आत्मलिङ्गविपर्ययम् ॥ दृष्ट्वा विमनसोऽभूवन् वीक्षमाणाः परस्परम् ॥ २७ ॥ राजोवाच ॥ कथमेवङ्गुणो देशः केन वा भगवान् कृतः ॥ प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ २८ ॥ श्रीशुक उवाच ॥ एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ॥ दिशो वितिमिराभासाः कुर्वन्तः समुपागमन् ॥ २९ ॥ तान् विलोक्याम्बिका देवी विवासा व्रीडिता भृशम् ॥ भर्तुरङ्कात् समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३० ॥

लक्षणो गुणः स्वभावो यस्य तथाविधो देशः कथं सम्भवति ? यद्यस्ति तदा स्वतस्तथात्वासम्भवात् केन वा तथाविधः कृतः ? तव तु न किञ्चित् अविदितमिति सूचयन् सम्बोधयति—हे भगवन्निति । एनं मया कृतं प्रश्नं समाचक्ष्व समाधत्स्व । तस्य देशस्य कथं स्त्रीत्वापादकत्वं तदुपपादयेत्यर्थः । हि यस्मात् एतच्छ्रवणेनोऽस्माकं परं कौतूहलमतीवोत्साहो वर्तते ॥ २८ ॥ एवं पृष्टः शुकस्तदुपपादयति—एकदेति । कदाचित् स्वदीप्त्या दिशो वितिमिराभासः विगतं तिमिरमाभासः अन्यप्रकाशश्च यासु तथाभूताः कुर्वन्तः । तत्र हेतुः—सुव्रताः तपस्विनः ऋषयः गिरिशं द्रष्टुं तत्रेलावृतस्थवने समुपागमन् अगमुः ॥ २९ ॥ तान् समागतान् ऋषीन् विलोक्याम्बिका देवी भृशं व्रीडिता लज्जिता । तत्र हेतुः—विवासा वस्त्ररहिता भर्तुः रुद्रस्याङ्कात् अथ तद्दर्शनानन्तरमेवोत्थाय आशु नीवीं वस्त्रं पर्यधात् धृतवती ॥ ३० ॥

तथा ऋषयोऽपि रममाणयोस्तयोर्भवभवान्योः प्रसङ्गं रत्यभिनिवेशं वीक्ष्य तस्मात्स्थानान्निवृत्ताः तत्प्रसङ्गरहितं नरनारायणाश्रमं ययुः॥ ३१ ॥ तत् तदा प्रियायाः प्रियकाम्यया प्रियं कर्तुमिच्छया भगवान् रुद्र इदं वक्ष्यमाणमाह । तदाह—यः कश्चित् पुमान् एतत्स्थानं प्रविशेत् स वै निश्चयेन योषिद्भवेदिति । इतिशब्दो हेत्वर्थकस्तस्योत्तरत्रान्वयः ॥ ३२ ॥ ततऊर्ध्वं रुद्रशापादनन्तरं तद्वनं पुरुषा वर्जयन्ति स्त्रीत्वप्राप्तिभयात्तत्र न प्रविशन्तीत्यर्थः । हीति अस्य प्रसिद्धिं द्योतयति । एवं तद्देशस्य स्त्रीत्वापादकत्वनिमित्तमभिधायाथ सुद्युम्नस्य स्त्रीत्वप्राप्त्यनन्तरवृत्तान्तमाह—सेति । सा च सुद्युम्नरूपा स्त्रीत्व प्राप्ता-अनुचरसंयुक्तेति पुंस्त्वं तु पूर्वावस्थाभिप्रायेण-अनुचरीभिः संयुक्ता वनाद्वनं वनान्तराद्वनान्तरं विचचार ॥ ३३ ॥ अथानन्तर तां स्त्रीभिः परिवृतां स्वाश्रमस्याभ्याशे समीपे चरन्तीं प्रमदोत्तमां स्त्रीश्रेष्ठां भगवान् ज्ञानी बुधः सोमपुत्रो दृष्ट्वा चकमे ॥ ३४ ॥ साऽपि स्त्री तं

ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः ॥ निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ३१ ॥ तादिदं भगवानाह प्रियायाः प्रियकाम्यया ॥ स्थानं यः प्रविशेदेतत् स वै योषिद्भवेदिति ॥ ३२ ॥ ततऊर्ध्वं वनं तद्वै पुरुषा वर्जयन्तिहि ॥ सा चानुचरसंयुक्ता विचचार वनाद्वनम् ॥ ३३ ॥ अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ॥ स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ३४ ॥ साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ॥ स तस्यां जनयामास पुरूरवसमात्मजम् ॥ ३५ ॥ एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपे[1] ॥ सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥ ३६ ॥ स तस्य तां दशा दृष्ट्वा कृपया भृशपीडितः ॥ सुद्युम्नस्याऽऽशयन् पुंस्त्वमुपाधावत शङ्करम् ॥ ३७ ॥ तुष्टस्तस्मै स भगवानृषयो प्रियमावहन् ॥ स्वां च वाचमृतां कुर्वन्निदमाह विशाम्पते ॥ ३८ ॥

सोमराजसुतं पतिं चकमे । एवं परस्परकामनया मिथुनीबभूवतुः । स च बुधस्तस्या पुरूरवस्संज्ञकमात्मजं जनयामास ॥ ३५ ॥ हे नृप मानवो मनुपुत्रः सुद्युम्न एवं स्त्रीत्वमनुप्राप्तः सन् स्वकुलाचार्यं वसिष्ठं सस्मारेति वयं शुश्रुम ॥ ३६ ॥ स तेन स्मृतो वसिष्ठस्तत्रागत्य तस्य ता दशा स्त्रीत्वप्राप्तिं दृष्ट्वा कृपया भृशमत्यन्तं पीडितः सन् पुनः सुद्युम्नस्य पुंस्त्वमाशयन् इच्छन् शङ्करमुपाधावत अस्तौषीत् ॥ ३७ ॥ हे विशाम्पते राजन् स भगवान् शङ्करस्तदुपधावनेन तुष्टः सन् तस्मै ऋषये वसिष्ठाय प्रियमावहन् तस्य प्रीतिं कुर्वन् स्वां योऽत्र प्रविशेत् स योषिद्भवेदिति वाच च ऋतां यथार्थां कुर्वन्निद वक्ष्यमाणमाह ॥ ३८ ॥



१ 'नृप' इति प्रथमाविभक्त्यन्त पाठ श्रीधरस्वाम्यादिसम्मत ।

तद्वाक्यमाह— तव गोत्रजः पुत्रतया त्वयाऽङ्गीकृतोऽय सुद्युम्नो मासं पुमान् भविता भविष्यति, मास तु स्त्री भविता, इत्थं व्यवस्थया कामं यथेच्छ मेदिनीं पृथिवीमवतु ॥ ३९ ॥ एवमाचार्यस्य वसिष्ठस्यानुग्रहात् काममिष्टं पुंस्त्वं व्यवस्थया लब्ध्वा सुद्युम्नो जगतीं भूमिं पालयामास । तथापि मासं स्त्रीत्वेन लज्जया सँल्लीयावस्थानाच्चं प्रजाः नाभ्यनन्दन् स्म ॥ ४० ॥ तस्य सुद्युम्नस्य उत्कलादयस्त्रयः सुता बभूवुः । ते च दक्षिणापथराजानः दक्षिण-देशाधिपतयः धर्मवत्सलाः धर्मे प्रीतियुक्ताश्च बभूवुः ॥ ४१ ॥ ततः काले परिणते व्यतीते सति कालवशाज्जराया प्राप्तायां सत्या प्रति तिष्ठन्त्यस्मि-न्निति प्रतिष्ठानं भूमण्डलं तस्य पतिः अतएव प्रभुर्दातुं समर्थः सुद्युम्नः पुरूरवसे स्वपुत्राय गा भूमिमुत्सृज्य दत्त्वा स्वयं तपः कर्तुं वनं ययावित्य-न्वयः ॥ ४२ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥

मासं पुमान् स भविता मासं स्त्री तव गोत्रजः ॥ इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ ३९ ॥ आचार्या-नुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया ॥ पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥ ४० ॥ तस्योत्कलो गयो राजन् विमलश्च सुतास्त्रयः ॥ दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥ ४१ ॥ ततः परिणते काले प्रतिष्ठानपतिः प्रभुः ॥ पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे सुद्युम्नस्त्रीत्वनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ॥ पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥ १ ॥ ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ॥ इक्ष्वाकुपूर्वजान् पुत्रॉल्लेभे स्वसदृशान् दश ॥ २ ॥

श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ प्रथमो विवृतोऽध्यायः सुद्युम्नस्त्रीत्वरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ पृषध्रस्य कवेश्चापि चरितं साधुसम्मतम् ॥ द्वितीयेऽत्र करूषादिवंशश्च विनिरूप्यते ॥ १ ॥ ॥ एवमुक्तप्रकारेण सुते प्रद्युम्ने वन गते सति अथानन्तर वैवस्वतो मनुः पुत्रकामः सन् यमुनातीरे शतं समाः संवत्सरशतपर्यन्तं तपस्तेपे इत्यन्वयः ॥ १ ॥ ततस्तपश्चर्यादशाया मनुरपत्यार्थं हरिं भगवन्तमेवायजत् आराधितवान् । तत्र हेतुमाह— प्रभुमिति, सर्वदानसमर्थम्। तत्र हेतुः— देवमिति। ततस्तत्प्रसादात् स्वसदृशान् स्वतुल्यान् इक्ष्वाकुः पूर्वजो येषु तान् दश पुत्रान् लेभे ॥ २ ॥

---

१ 'तपसा तव' इति पाठान्तरम्। २ श्रीशुकदेववचनमिदम् ।

तत्र पृषध्रवंशो नाभवदिति सहेतुकमाह— पृषध्रस्त्वित्यादिना कविः कनीयानित्यतः प्राक्तनेन ग्रन्थेन । तुशब्दोऽस्येक्ष्वाक्वादिभ्यः सन्तत्यभावकृतवैलक्षण्यद्योतनार्थम् । मनोः पुत्रः पृषध्रस्तु गुरुणा पित्रा वसिष्ठेन वा गोपालः कृतः गवां पालने अधिकृतः अतः खड्गपाणिः सततस्तिष्ठतो जागरण वीरासनं तदेव व्रतं नियमो यस्य सः यत्तः सावधानः सन् रात्र्यां गाः पालयामास व्याघ्रादिभ्यो रक्षितवान् ॥ ३ ॥ एवं सति एकदा निशि रात्र्यां पर्जन्ये वर्षति सति शार्दूलो व्याघ्रो गोष्ठं गवामुपवेशनस्थानं प्राविशत् । तदा तं दृष्ट्वा ताः शयाना उपविष्टा गावो भीता उत्थाय व्रजे गोष्ठे बभ्रमुः ॥ ४ ॥ तत्र बलवान् व्याघ्रः एकां गां जग्राह । सा च गौर्भयेनातुरा विवशा सती चुक्रोश आक्रन्दितवती । तस्यास्तत् क्रन्दितं शब्दं श्रुत्वा पृषध्रः अभिससार तत्समीपं जगाम ॥ ५ ॥ खड्गमादाय तरसा वेगेन समागत्य शार्दूलशङ्कया बभ्रोः कपिलाया गोः शिरोऽहनत् चिच्छेद । तत्र

पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ॥ पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥ ३ ॥ एकदा प्राविशद्गोष्ठं शार्दूलो निशि वर्षति ॥ शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥ एकां जग्राह बलवान् सा चुक्रोश भयातुरा ॥ तस्यास्तत्क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥ खड्गमादाय तरसा प्रलीनोडुगणे निशि ॥ अजानन्नहनद्बभ्रोः शिरः शार्दूलशङ्कया ॥ ६ ॥ व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः ॥ निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥ मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ॥ अद्राक्षीत् स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥ तं शशाप कुलाचार्यः कृतागसमकामतः ॥ न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भविताऽमुना ॥ ९ ॥ एवं शप्तस्तु गुरुणा प्रत्यगृह्णात् कृताञ्जलिः ॥ अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥

हतुमाह— अजानान्निति । तत्र हेतुः— निशीति । तत्रापि प्रलीना उडुगणाः यस्मिंस्तत्समये॥ ६ ॥ निस्त्रिंशः खड्गस्तस्याग्रेणाहतः व्याघ्रोऽपि वृक्णश्रवणश्छिन्नकर्णः सन् भृशं भीतः पथि मार्गे रक्तं रुधिरं समुत्सृजन् त्यजन् ततो गोष्ठान्निश्चक्राम निर्गतः ॥ ७ ॥ परवीरहा शत्रुहन्ता पृषध्रो रात्रौ व्याघ्रं हतं मन्यमानोऽपि निशि व्युष्टायामतीतायां सत्यां प्रभाते स्वेन हतां बभ्रुं गामद्राक्षीत् । ततश्च दुःखितो बभूव ॥ ८ ॥ अकामतः अज्ञानतः कृतमागः गोवधरूपं पापं येन तं पृषध्रं कुलाचार्यो वसिष्ठः शशाप । तच्छापमेवाह— नेति । त्वं क्षत्रबन्धुः क्षत्रियाधमोऽपि न भवितासि, किन्तु अमुना पापकर्मणा शूद्र एव भविता ॥ ९ ॥ एवं गुरुणा शप्तोऽपि पृषध्रः कृताञ्जलिः संस्तं शापं प्रत्यगृह्णात् । ततश्च स वीरः ऊर्ध्वरेताः जितेन्द्रियः सन् मुनीनां प्रियं भगवद्भजनात्मकं व्रतमधारयत् ॥ १० ॥

एवं निरपराधशापेऽपि क्षमावतस्तस्योत्तरोत्तरजातं फलमाह— वासुदेव इति। भक्त्या भगवति एकान्तित्वमन्यचिन्तनरहितत्वे सति तदेकचित्तत्वं गतः प्राप्तः। औपचारिकं भगवत्त्वं वारयति— परे इति, परमेश्वरे इत्यर्थः । तदेवोपपादयति— वसुदेवशब्दितमन्तःकरणं तत्र भवः साक्षी नियन्ता वासुदेवः तस्मिन्निति सर्वनिमित्तत्वमुक्तम्। उपादानत्वमाह— सर्वात्मनीति। एवं सति विकारित्वमाशङ्क्याह— अमल इति, निर्गुणत्वात् सर्वविकारशून्य इत्यर्थः। एवं तस्य भगवत्परत्वं कथमित्यपेक्षायां साधनसम्पत्तिमाह— सर्वभूतेषु सुहृत् दयावान्। तत्र हेतुः— सम इति, सर्वसुखदुःखादिषु समदर्शी ॥ ११ ॥ विमुक्तः ऐहिकामुष्मिकभोगेषु सङ्गः आसक्तिर्येन सः। तत्र हेतुः— शान्तः रागलोभाद्यूर्मिरहित आत्माऽन्तःकरणं यस्य सः । सयतानि वशीकृतानि अक्षाणीन्द्रियाणि येन। न विद्यते देहतदुपयुक्तान्नाद्यतिरिक्तः परिग्रहो यस्य सः। तदा देहनिर्वाहः कथमित्यत आह— यदृच्छयोपपन्नेन प्रारब्धेन प्राप्तेनैवान्नादिना आत्मनो देहस्य वृत्तिं कल्पयन्निति ॥ १२ ॥ आत्मनि परमात्मनि भगवति आत्मानं मन आधाय निश्चलं संस्थाप्य ज्ञानेन तत्परमा-

वासुदेवे भगवति सर्वात्मनि परेऽमले ॥ एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत् समः ॥ ११ ॥ विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः ॥ यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥ आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ॥ विचचार महीमेतां जडान्धबधिराकृतिः ॥ १३ ॥ एवंवृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ॥ तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥ कविः कनीयान् विषयेषु निस्पृहो विसृज्य राज्यं सह बन्धुभिर्वनम् ॥ निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥ १५ ॥ करूषान्मानवादासन् कारूषाः क्षत्रजातयः ॥ उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥

[illegible]स्वरूपानुभवेन तृप्तः समाहितः तत्र प्रयत्नवान्। अतएव जडादीना आकृतिरिव आकृतिराकारो यस्य तथाभूत एता महीं विचचार ॥ १३ ॥ [illegible]मेवंविधं वृत्तं वृत्तिर्यस्य स प्रारब्धावसाने कदाचिद्वनं गत्वा तत्रोत्थितं प्रज्वलन्तं दावाग्निं दृष्ट्वाऽपि तेनोपयुक्तानि दग्धानि करणानि करचरणादीनि यस्य स तादृशो मुनिः गृहीतमौनः पृषध्रः परं ब्रह्म प्राप ॥ १४ ॥ कवेरपि वंशो नाभवदित्याशयेन तद्वृत्तमाह— कविरिति। कनीयान् [illegible]भ्यः कनिष्ठोऽपि कविः कैशोरवयस्क एव विषयेषु निस्पृहः अतो बन्धुभिः सह एव राज्यं विसृज्य त्यक्त्वा स्वरोचिषं स्वप्रकाशं पुरुषं भगवन्तं [illegible] निवेश्य ध्यायन् वनं गतः। ततश्च प्रारब्धावसाने तमेव परं पुरुषं विवेश ॥ १५ ॥ करूषस्य वंशमाह— करूषादिति। मनुपुत्रात्करूषात् कारूषसञ्ज्ञका उत्तरापथगोप्तारः उत्तरदेशाधिपतयः ब्रह्मण्या ब्राह्मणभक्ताः धर्मवत्सलाः धर्मेषु प्रीतियुक्ताः क्षत्रजातयः आसन्नित्यन्वयः ॥ १६ ॥

धृष्टात् मनुपुत्रात् धार्ष्टसञ्ज्ञं क्षत्रमभूत् क्षत्रजात्यापन्नानि कानिचिदपत्यान्यभूवन् । तच्च क्षत्रं क्षितौ ब्रह्मभूयं ब्राह्मणत्वं गतं प्राप्तं चाभूत् । नृगस्य मनुपुत्रस्य वंशः पुत्रः सुमतिरभूत् । ततो भूतज्योतिस्ततश्च वसुरभवत् ॥ १७ ॥ वसोः पुत्रः प्रतीकः, तस्य पुत्र ओघवान्, स च ओघवतः पिता तत्पुत्रोऽप्योघवानित्यर्थः । ओघवतः कन्या च ओघवती नाम प्रसिद्धा तां च सुदर्शन उवाह उपयेमे ॥ १८ ॥ अथ नरिष्यन्तस्य वंशमाह– चित्रसेन इति सार्धैस्त्रिभिः । मनुपुत्रान्नरिष्यन्तात् चित्रसेनः सुतोऽभवत् । तस्य ऋक्षसञ्ज्ञः सुतोऽभवत् । तस्य मीढ्वान् ततो मीढुषः कूर्चः । तस्य सुतः इन्द्रसेनः ॥ १९ ॥ इन्द्रसेनात् वीतिहोत्रसञ्ज्ञोऽभवत् । तस्य सत्यश्रवाः अभूत् । तस्य उरुश्रवाः सुतः । ततश्च देवदत्तोऽभवत् ॥ २० ॥ ततो देवदत्तात्

धृष्टाद्धार्ष्टमभूत्क्षत्रं ब्रह्मभूयं गतं क्षितौ ॥ नृगस्य वंशः सुमतिर्भूतज्योतिस्ततो वसुः ॥ १७ ॥ वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्पिता ॥ कन्या चौघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥ चित्रसेनो नरिष्यन्ताद्दक्षस्तस्य[1] सुतोऽभवत् ॥ तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥ वीतिहोत्रस्त्विन्द्रसेनात्तस्य सत्यश्रवा अभूत् ॥ उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥ ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः ॥ कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥ ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ॥ नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥ नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ॥ भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥ २३ ॥ वत्सप्रीतेः सुतः प्रांशुस्तत्सुतं प्रमतिं विदुः ॥ खनित्रः प्रमतेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥ २४ ॥ विविंशतिसुतो रम्भः खनिनेत्रोऽस्य धार्मिकः ॥ करन्धमो महाराज तस्यासीदात्मजो नृप ॥ २५ ॥

भगवानग्निः स्वयमेवाग्निवेश्याख्यः सुतोऽभूत् । स एव महान् ऋषिः कानीन इति जातूकर्ण्य इति च विख्यातः ॥ २१ ॥ ततोऽग्निवेश्यात् अग्निवेश्यायनाख्यं ब्रह्मकुलं ब्राह्मणगोत्रं जातम् । उक्तमनुवदन् वक्ष्यमाणकथनं प्रतिजानीते– नरिष्यन्तेति ॥ २२ ॥ दिष्टस्य मनुपुत्रस्य नाभागाख्यः पुत्रोऽभूत् । स च वक्ष्यमाणान्नाभागादन्य इति स्वरूपकथनमात्रम् । स च कृषिगोरक्षवाणिज्यादिकर्मणा वैश्यतां गतः । तस्य सुतो भलन्दनः । हलन्दन इति पाठान्तरम् ॥ २३ ॥ तस्मात् खनित्रात् चाक्षुषः, अथ तस्माच्चाक्षुषात् विविंशतिरभवत् ॥ २४ ॥ विविंशतेः सुतो रम्भः, तस्यास्य खनिनेत्रः सुतः सोऽपि धार्मिको जातः, तस्यात्मजः करन्धमाख्यो महाराज आसीत् । हे नृप ॥ २५ ॥

१ 'नरिष्यन्ताद्दक्ष' इत्यपि पाठ ।

तस्य करन्धमस्य अवीक्षिदाख्यः सुतोऽभूत् । तस्य प्रसिद्धिमाह—अङ्गिरसः सुतो महायोगी संवर्तो यं वै प्रसिद्धं मरुत्तमयाजयत् ॥ २६ ॥ मरुत्तस्य यथा यादृशो यज्ञोऽभूत् तथा तादृशः कश्चनाप्यन्यस्य यज्ञो नाभूत् । तत्र हेतुमाह— यत्किञ्चित् यज्ञोपकरणपात्रादिकं तत्सर्वं तत्कृते यज्ञे तु शोभनं हिरण्मयमेवासीत् ॥ २७ ॥ तथा तद्यज्ञे इन्द्रः सोमेन रसेनाऽमाद्यत् अहृष्यत् । तथा द्विजातयो ब्राह्मणाश्च दक्षिणाभिरमाद्यन् । किञ्च तत्र यज्ञे मरुतः परिवेष्टारः अर्थिनां भोजनपात्रेष्वन्नादिप्रदातारः । विश्वेदेवाः सभायां सीदन्त्युपविशन्तीति सभासदः सभ्या आसन् ॥ २८ ॥ सुधृतेः सुतो नरः अतः सौधृतेय इत्यप्युच्यते ॥ २९ ॥ तस्य नरस्य सुतः केवलस्तस्माद्बिन्दुमान् । ‘बन्धुमान्’ इति पाठान्तरम् । ततो बिन्दुमतो वेगवान् । तस्य

तस्यावीक्षित्सुतो यस्य मरुतश्चक्रवर्त्यभूत् ॥ संवर्तोऽयाजयद्यं वै महायोग्यङ्गिरस्सुतः ॥ २६ ॥ मरुत्तस्य यथा यज्ञो न तथाऽन्यस्य कश्चन ॥ सर्वं हिरण्मयं त्वासीद्यत्किञ्चिच्चास्य शोभनम् ॥ २७ ॥ अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ मरुतः परिवेष्टारो विश्वेदेवाः सभासदः ॥ २८ ॥ मरुत्तस्य दमः पुत्रस्तस्यासीद्राज्यवर्द्धनः ॥ सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥ तत्सुतः केवलस्तस्माद्बिन्दुमान्[1] वेगवांस्ततः ॥ बन्धुस्तस्याभवद्यस्य तृणबिन्दुर्महीपतिः ॥ ३० ॥ तं भेजेऽलम्बुषा देवी भजनीयगुणालयम् ॥ वराप्सरा यतः पुत्राः कन्या चेलविलाऽभवत्[2] ॥ ३१ ॥ तस्यामुत्पादयामास विश्रवा धनदं सुतम् ॥ अवाप विद्यां परमामृषिर्योगेश्वरात्पितुः[3] ॥ ३२ ॥ विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः ॥ विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम् ॥ ३३ ॥

वेगवतो बन्धुरभवत् । यस्य बन्धोस्तृणबिन्दुरभवत् ॥ ३० ॥ भजनीयाः समाश्रयणोपयुक्ता ये गुणास्तेषामालयं स्थानं तं तृणबिन्दुं अप्सरःश्रेष्ठा देवी देवस्येन्द्रस्य सम्बन्धिनी अलम्बुषा भेजे, यतः यस्यां तस्मात् पुत्राः अभवन्, इलविलाख्या कन्या चाभवत् । इडविडेति पाठान्तरम् ॥ ३१ ॥ तस्यामिलविलायां विश्रवाः पुलस्त्यपुत्रो धनदं कुबेरं सुतमुत्पादयामास । स कुबेरः ऋषिः सूक्ष्मबुद्धिः योगेश्वरात् पितुः सकाशात् परमामुत्कृष्टां अन्तर्धानलक्षणां विद्यामवाप । ‘प्रादाय’ इति पाठे ऋषिर्विश्रवाः पितुः सकाशात् विद्यां प्रादाय गृहीत्वा सुतमुत्पादयामास ॥ ३२ ॥ अलम्बुषाया जातास्तृणबिन्दोः सुतास्त्रिविंशति—विशाल इति । तत्र विशालो वंशकृत् वंशवर्धनो राजा वैशालीं पुरीं निर्ममे ॥ ३३ ॥

१ ‘बन्धुमान्’ इति पाठान्तरम् । २ ‘कन्या चेलविलाऽभवत्’ इति पाठान्तरम् । ३ ‘प्रादाय’ इति पाठान्तरम् ।

तस्य विशालस्य सुतो हेमचन्द्रः, तस्य चात्मजो धूम्राक्षः, तस्य सुतः संयमः, ततः सहदेवः, ततः कृशाश्व आसीत् ॥ ३४ ॥ कृशाश्वात् सोमदत्ताख्यः पुत्रो ऽभूत् । तस्य वृत्तमाह— य इति । यः सोमदत्तः अश्वमेधैः इडस्पतिं यज्ञाराध्यं तत्फलदातारं पुरुषमिष्ट्वा आराध्य योगेश्वरो भगवांस्तदाश्रितः तदेकशरणः सन् अग्र्यामुत्तमां भागवतीं गतिमाप, मुक्तोऽभूदित्यर्थः ॥ ३५ ॥ सौमदत्तिः सोमदत्तस्य पुत्रः सुमतिरभवत् । तस्य सुतो जनमेजयः । एते वैशालभूपालाः विशालस्यान्वये जाताः । स्पष्टमन्यत् ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ द्वितीयो विवृतो-

हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चाऽऽत्मजः ॥ तत्पुत्रात् संयमादासीत् कृशाश्वः सहदेवजः ॥ ३४ ॥ कृशाश्वात् सोमदत्तोऽभूद्योऽश्वमेधैरिडस्पतिम् ॥ इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रितः ॥ ३५ ॥ सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ॥ एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे करूषादिवंशनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह ॥ यो वा अङ्गिरसां सत्रे द्वितीयमह ऊचिवान् ॥ १ ॥ सुकन्या नाम तस्यासीत् कन्या कमललोचना ॥ तया सार्द्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥ सा सखीभिः परिवृता विचिन्वत्यङ्घ्रिपान् वने ॥ वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥ तद्दैवचोदिता बाला ज्योतिषी कण्टकेन वै ॥ अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥ ४ ॥

ध्यायः करूषादिवंशरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ मनुपुत्रस्य शर्यातेः कन्यावृत्तं तथैवच ॥ पुत्रवंशस्तृतीये तु रैवतं च निरूप्यते ॥ १ ॥ मानवो मनुपुत्रः शर्यात्याख्यो राजा ब्रह्मिष्ठो वेदार्थतत्त्वज्ञः सम्बभूव । तदेव स्पष्टयति— यो वै शर्यातिः आङ्गिरसा सत्रे द्वितीयमहर्द्वितीयेऽह्नि क्रियमाणं कर्मोचिवान् ॥ १ ॥ तस्य शर्यातेः कमले इव लोचने यस्याः सा सुकन्या नाम कन्याऽऽसीत् । तया सार्धं सह शर्यातिर्वनं गतः सन् च्यवनस्य ऋषेराश्रममगमत् ॥ २ ॥ सा सुकन्या सखीभिः परिवृता वने अङ्घ्रिपान् द्रुमान् विचिन्वन्ती विपश्यन्ती वल्मीकबिले खद्योते इव द्वे ज्योतिषी ददर्श ॥ ३ ॥ तत्तदा दैवेन प्रारब्धेन चोदिता मुग्धभावेन मौढ्येन च सा बाला कन्या कण्टकेन ते ज्योतिषी अविध्यत् । ततश्च वल्मीकरन्ध्रात् बहु असृक् रुधिरं सुस्राव ॥ ४ ॥

१ 'सहदेवक' इति 'सहदेवनः' इति च पाठान्तरद्वयम् । श्रीधरस्वामिनस्तु 'सहदेवम.' इत्येव पाठमङ्गीकृत्य देवजेन सहित इति व्याचख्यु ।

तत्क्षणात् तस्मिन्नेव क्षणे सैनिकानां शकृन्मूत्रयोर्निरोधोऽभूत्। तं मलमूत्रनिरोधमालक्ष्य ज्ञात्वा विस्मितो राजर्षिः शर्यातिः स्वपुरुषान् अब्रवीत् ॥ ५ ॥ तदुक्तिमेवाह— अपीति । अपिशब्दः प्रश्नद्योतकः । किं युष्माभिर्भार्गवस्य च्यवनस्य अभद्रं विचेष्टितं ? किं कश्चिदपराधः कृत इत्यर्थः । नोऽस्माकं सम्बन्धिना केनापि प्राणिना तस्याश्रमस्य किञ्चिद्दूषणं कृतमिति तु व्यक्तं निश्चितम्। अन्यथैवमुपद्रवो न स्यादिति भावः ॥ ६ ॥ एवं शर्यातौ पृच्छति सति भीता सती मया किञ्चिदभद्रं कृतमिति पितरं प्रति सुकन्या प्राह। किं तदित्यपेक्षायामाह— वल्मीकरन्ध्रे दृष्टे द्वे ज्योतिषी तत्त्वमजानन्त्या मया कण्टकेन निर्भिन्ने। अत्र सन्देहो नास्तीत्याह— वा इति ॥ ७ ॥ एवं तस्या दुहितुर्वचः श्रुत्वा जातं साध्वसं भयं यस्य सः शर्यातिर्वल्मीकान्तर्हितं मुनिं च्यवनं शनैः प्रसादयामास स्तोत्रादिभिः प्रसन्नमकरोत् ॥ ८ ॥ ततस्तस्य च्यवनस्याभिप्रायं मुग्धेयं मम कन्या त्वया

शकृन्मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात् ॥ राजर्षिस्तमुपालक्ष्य पुरुषान् विस्मितोऽब्रवीत् ॥ ५ ॥ अप्यभद्रं
न युष्माभिर्भार्गवस्य विचेष्टितम् ॥ व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥ ६ ॥ सुकन्या प्राह पितरं भीता
किञ्चित् कृतं मया॥ द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन वै ॥ ७ ॥ दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः॥
मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥ तदभिप्रायमाज्ञाय प्रादाद्दुहितरं मुनेः ॥ कृच्छ्रान्मुक्तस्तमामन्त्र्य
पुरं प्रायात् समाहितः ॥ ९ ॥ सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ॥ प्रीणयामास चित्तज्ञा अप्रमत्ता-
ऽनुवृत्तिभिः ॥ १० ॥ कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ ॥ तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥

[illegible]मित्युक्ते सति कति वर्षाण्यस्या गतानि विवाहः कृतो नवेत्यादिवाक्यैर्विवाहसङ्कल्पमाज्ञाय तस्य मुनेः च्यवनस्य दुहितरं प्रादात्। तद्दानाच्च कृच्छ्रात् स[illegible]न्वेषणदैन्यादिक्लेशात् स्वसैनिकादिमलमूत्रनिरोधक्लेशाच्च मुक्तः अतः समाहितः सावधानः संस्तं मुनिमामन्त्र्य पृष्ट्वा स्वपुरं प्रायात् ॥ ९ ॥ परममधिकं कुप्यतीति परमकोपनस्तथाभूतं च्यवनं पतिं प्राप्य अप्रमत्ता सावधाना तच्चित्तज्ञा तदभिप्रायानुसारेणानुवृत्तिभिः सेवाप्रकारैः सुकन्या प्रीणयामास सन्तुष्टमकरोत् ॥ १० ॥ अथ कस्यचित्कालस्य कस्मिंश्चित्काले तु गते सति स्वाश्रमं प्रत्यागतौ नासत्यौ अश्विनौ पूजयित्वा तौ च्यवनः प्राह। तदाह— हे ईश्वरौ प्रार्थितसम्पादनसमर्थौ युवां मे जरया ग्रस्ताय मह्यं वयस्तारुण्यं दत्तं प्रयच्छतमिति ॥ ११ ॥

तेनास्माकं किं फलं तत्राह— ग्रहमिति । यज्ञे असोमपोः सोमपानरहितयोर्वां युवयोः सोमस्य ग्रहं ग्रहीष्ये सोमपूर्णपात्रं दास्यामि । युवां सोमेन यक्ष्यामीत्यर्थः । अतः प्रमदानामुत्तमस्त्रीणां यदीप्सितं मनोहरं तादृशं मे मम वयस्तारुण्यं रूपं सौन्दर्यं च युवाभ्यां क्रियतां सम्पाद्यताम् ॥ १२ ॥ भिषक्तमौ देववैद्यावश्विनौ तद्वचनं बाढमित्यभिनन्द्य अङ्गीकृत्य अस्मिन् सिद्धैर्निर्मिते ह्रदे भवान्निमज्जतामिति विप्रं च्यवनं प्रत्यूचतुः ॥ १३ ॥ इत्येवमुक्तो जरया ग्रस्तदेहः अतएव धमनीभिर्नाडीभिः सन्ततः देहो परिदृश्यमानाभिर्व्याप्तः तथा वलीभिः पलितेन च उपलक्ष्यमाणो विग्रहो देहो यस्य सच्यवनोऽश्विभ्यां ह्रदे प्रवेशितः । तावपि तमतिवृद्धं गृहीत्वा स्वयं प्रविष्टावित्यर्थः ॥ १४ ॥ ततश्च ततो ह्रदात्त्रयः पुरुषाः उत्तस्थुः विनिस्सृताः । तान्वर्णयति— अपीच्याः अतिकमनीयाः अतएव वनिताना स्त्रीणां प्रियाः तुल्यरूपाः सदृशतया परस्परमविभजनीयरूपाः । स्पष्टमन्यत् ॥ १५ ॥ सूर्यस्येव

ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः ॥ क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥ बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ ॥ निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥ १३ ॥ इत्युक्तो जरया ग्रस्तदेहो धमनिसन्ततः ॥ ह्रदं प्रवेशितोऽश्विभ्यां वलीपलितविप्रियः ॥ १४ ॥ पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ॥ पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥ १५ ॥ तान्निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ॥ अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥ दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ॥ ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ १७ ॥ यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याऽऽश्रमं गतः ॥ ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥ राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ॥ आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥ १९ ॥

वर्चो येषां तान् समानरूपांस्तान् पुरुषान् वरारोहा सुकन्या निरीक्ष्य तेषां मध्ये स्वपतिमजानती अश्विनौ शरणं ययौ । युवामेव पृथक् स्थित्वा मम पतिं दर्शयतमिति प्रार्थयामासेत्यर्थः । तत्र हेतुः— साध्वीति, पतिव्रतात्वादित्यर्थः ॥ १६ ॥ तत्पातिव्रत्येन तोषितावश्विनौ तस्यै सुकन्यायै पतिं दर्शयित्वा ऋषिं पृष्ट्वा विमानेन त्रिविष्टपं ययतुः ॥ १७ ॥ अथ कदाचित् यक्ष्यमाणो याग करिष्यमाणः शर्यातिश्च्यवनस्याश्रमं गतः, तत्र च दुहितुः पार्श्वेऽन्यादृशं पुरुषं ददर्श ॥ १८ ॥ कृतपादाभिवन्दनामपि दुहितरमाशिषश्चाप्रयुञ्जानो राजा प्राह । आशिषः अप्रयोगे हेतुमाह— नातिप्रीतमना इवेति । व्यभिचारशङ्काद्योतनायातिशब्दः । तथापि दुहितृस्नेहस्य दुस्त्यजत्वद्योतनार्थं इवशब्दः ॥ १९ ॥

१ ' इत्युक्त्वा ' इति पाठान्तरं श्रीधरस्वामिसम्मतम् ।

तदुक्तिमेवाह— चिकीर्षितमित्यादिना । सम्प्रत्ययार्थस्तु न विवक्षितः । हे असति ते त्वया किमिद कृतम् ? अकार्यमेव कृतमित्यर्थः । किं तदित्यत आह— मुनिः मननशीलस्तपस्वी अतएव लोकनमस्कृतः सर्वपूज्यः स्वपतिश्च्यवनस्त्वया प्रलम्भितः वञ्चित इति । कथं वञ्चित इति निश्चयस्तत्राह— यदिति । यद्यस्मात् जराग्रस्तत्वात्तं असम्मतमनभीष्टं मत्वा विहाय कञ्चिदध्वगं पान्थं जारममुं त्वं भजसे अनुवर्तसे ॥ २० ॥ अस्मत्कुलप्रसूतायास्तवैतदनुचितमेवेत्याशयेन सम्बोधयति— सतां कुलप्रसूते इति । ते तव मतिरन्यथा विपर्ययेण कथमवगता अवसन्ना अध्यवसितेति वा । तत्स्पष्टयति— यदपत्रपा निर्लज्जा सती जारं बिभर्षि तदिदं कुलदूषण यतस्तेन पितुर्भर्तुश्च कुलमधस्तमो नरकं नयासि ॥ २१ ॥ एवं ब्रुवाणं पितरं स्मयमाना

चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ॥ यत्त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥ कथं मतिस्तेऽवगताऽन्यथा सतां कुलप्रसूते कुलदूषणं त्विदम् ॥ बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः ॥ २१ ॥ एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ॥ उवाच तात जामाता तवैष भृगुनन्दनः ॥ २२ ॥ शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ॥ विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥ सोमेनायाजयद्वीरं ग्रहं सोमस्य चाग्रहीत् ॥ असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥ हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः ॥ सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥

तच्छ्रुत्वावाक्येन विस्मययुक्ता शुचिस्मिता मन्दस्मितयुक्ता च सती सुकन्या उवाच । तदेवाह— हे तात एष मत्पार्श्ववर्ती तव जामाता भृगुनन्दनश्च्यवन एव ॥ २२ ॥ तर्हि कथमनेनैव वयोरूपादिकं प्राप्तमित्यपेक्षायां तत्सर्वं वयोरूपप्राप्तिकारणं पित्रे शशंसेति । अन्यत्स्पष्टम् ॥ २३ ॥ ततश्च्यवनो वीरं शर्यातिं सोमेनायाजयत् सोमयागं कारितवान् । तस्मिंश्च यागे च्यवनः स्वेन तेजसा स्वतपोबलेन असोमपोः सोमपानरहितयोरप्यश्विनोः सोमस्य ग्रहमग्रहीत् [illegible], अश्विनावुद्दिश्य सोमेन राजानं याजयामासेत्यर्थः ॥ २४ ॥ सद्यस्तत्क्षणं मन्युर्यस्य स इन्द्रः अमर्षितः असहमानस्त यजन्तं शर्यातिं हन्तुं [illegible] तदा च स भार्गवश्च्यवनः सवज्रं वज्रेण सहितं इन्द्रस्य भुजं स्तम्भयामास प्रतिबबन्ध ॥ २५ ॥

१ 'सोमेन याजयन्वीर.' इति पाठान्तरम् । तत्र याजयन्निति प्रथमैकवचनान्तं च्यवनविशेषणम् ।

यौ चाश्विनौ भिषजौ वैद्यौ अतो योग्याविति मत्वा पूर्वं सोमाहुत्या बहिष्कृतौ तयोरश्विनोः ततःप्रभृति सर्वे देवादयः सोमस्य ग्रहमन्वजानन् अनुज्ञातवन्तः ॥ २६ ॥ एवं शर्यातेः कन्यावृत्तान्तमभिधायाथ पुत्रपौत्रादिसन्ततिं तद्वृत्तान्तमाह— उत्तानबर्हिरित्यादिना, स्पष्टम् ॥ २७ ॥ स रेवतः समुद्रमध्ये कुशस्थलीसञ्ज्ञां पुरीं निर्माय तस्या एवाधुना द्वारावतीति व्यवहारः। तस्यामास्थितः अधिवसन् आनर्तादीन् विषयान् देशान् अभुङ्क्त तदैश्वर्यभोगं कृतवान्। हे अरिन्दम। विसर्गान्तपाठे शत्रूनिरस्यन्नित्यर्थः ॥ २८ ॥ ककुद्मी ज्येष्ठो यस्मिन् तत् तस्य रेवतस्य पुत्रशतं जज्ञे रेवती कन्या चेति द्रष्टव्यम्। ततश्च स कन्यामादाय ब्रह्माणं तस्या वरं परिप्रष्टुमपावृतं स्वगमनप्रतिबन्धकरहितं ब्रह्मलोकं गत इत्यन्वयः ॥ २९ ॥ तत्र

अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ॥ भिषजाविति यत्पूर्वं सोमाहुत्या बहिष्कृतौ ॥ २६ ॥ उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ॥ शर्यातेरभवन् पुत्रा आनर्त्ताद्रेवतोऽभवत् ॥ २७ ॥ सोऽन्तः समुद्रे नगरीं विनिर्माय कुशस्थलीम् ॥ आस्थितोऽभुङ्क्त विषयानानर्त्तादीनरिन्दम[1] ॥ २८ ॥ तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ॥ रेवतो रेवतीं कन्यां[2] स्वामादाय विभुं गतः ॥ कन्यावरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ॥ २९ ॥ आवर्त्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ॥ ३० ॥ तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ अहो राजन्निरुद्धास्ते कालेन हृदि ये कृताः ॥ ३१ ॥ तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥ कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः ॥ ३२ ॥

ब्रह्मणः सन्निधौ गान्धर्वे गाने आसमन्तात् वर्तमाने सति अलब्धः न प्राप्तः क्षणः प्रश्नावसरो येन स रेवतः क्षणमात्रं तूष्णीं स्थितः। तदन्ते गानावसाने आद्यं ब्रह्माणमानम्य स्वाभिप्रायं को वाऽस्याः पतिर्युक्त इत्येवं न्यवेदयत् अपृच्छत् ॥ ३० ॥ तत् रेवतवचः श्रुत्वा प्रहस्य भगवान् ब्रह्मा हेत्याश्चर्यं द्योतयंस्तमुवाच। तदेवाह— अहो राजन्नित्यादिना। अहो राजन् आगमनसमये ये त्वया हृदि कृताः अस्या वरतया मनसा चिन्तितास्ते सर्वे कालेन निरुद्धा उपसंहृताः ॥ ३१ ॥ तेषां ये पुत्रादयः तेषामपि गोत्राणि वंशान् अधुना न शृण्महे। कियान् कालो व्यतीत इत्यपेक्षायामाह— काल इति। त्रिणवसप्तविंशतिः चतुर्युगानि तैर्विशेषतः कल्पितो गणितः कालोऽभियातो व्यतीत इत्यर्थः ॥ ३२ ॥

१ 'अरिन्दमः' इति पाठान्तरे रेवतविशेषणम्। २ 'ककुद्मी रेवती कन्या' इति 'रैवतो रेवतीं कन्याम्' इति च पाठान्तरद्वयम्।

तर्ह्यधुनेयं कस्मै देयेत्यत आह— तदिति। तत्तस्मात्त्वच्चिन्तितानामिदानीमभावात् भो राजन् भूलोकं त्वं गच्छ तत्र बलदेवोऽवतीर्णोऽस्ति तस्मै नररत्नायेदं कन्यारत्नं देहि। नररत्नत्वे हेतुमाह— महाबल इति। तत्रापि हेतुमाह— देवदेवांश इति, श्रीनारायणस्यांशः सङ्कर्षण इत्यर्थः ॥ ३३ ॥ ननु भगवन्तं विहाय कथं तस्यावतारस्तत्राह— तेन निजांशेन सह भुवो भारावताराय भगवानपि स्वयमवतीर्ण इति। भारावतारो नामासुरवधः। तत्र हेतुमाह— भूतभावन इति। भूतानि भावयति उत्पादयति पालयति चेति तथा। ननु भारावतारस्तु सङ्कल्पमात्रेणापि सम्भवतीत्यवतारे किं प्रयोजनमित्याशङ्क्य प्रयोजनान्तरं सूचयन्नाह— पुण्येति, पुण्ये श्रवणकीर्तने यस्य सः। स्वचरित्रं शृण्वतां कीर्तयतां च पुण्यसम्पादनद्वारा परमपुरुषार्थप्रदानार्थमित्याशयः ॥ ३४ ॥ इत्येवमादिष्टः ब्रह्मणा नियुक्तो नृपो रेवतोऽजं ब्रह्माणमभिवन्द्य स्वागमनात् पूर्वमेव पुण्यजनत्रासाद्विपक्षभयात्

तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥ कन्यारत्नमिदं राजन्नररत्नाय देहि भोः ॥ ३३ ॥ भुवो भारावताराय भगवान् भूतभावनः ॥ अवतीर्णो निजांशेन पुण्यश्रवणकीर्त्तनः ॥ ३४ ॥ इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ॥ त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ॥ ३५ ॥ सुतां दत्त्वाऽनवद्याङ्गीं बलाय बलशालिने ॥ बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम् ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे शर्यातिवंशनिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ नाभागो नभगापत्यं यं ततं भ्रातरः कविम् ॥ यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतम् ॥ १ ॥

दिक्षु तत्र तत्रावस्थितैर्भ्रातृभिस्त्यक्तं स्वपुरमागतः ॥ ३५ ॥ ततश्चानवद्याङ्गीं शोभनाङ्गीं स्वसुतां बलेन शालते शोभते तस्मै बलाय दत्त्वा राजा रेवतस्तपस्तप्तुं बदर्याख्यं नरनारायणाश्रमं ययौ ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ तृतीयो विवृतोऽध्यायः शर्यातिवंशरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ चतुर्थे मनुपौत्रस्य नाभागस्य ततः परम् ॥ तत्सूनोरम्बरीषस्य चरितं विनिरूप्यते ॥ १ ॥ ॥ मनुपुत्रस्य नभगस्य वंशमाह— नाभाग इति। नभगस्यापत्यं पुत्रो नाभागोऽभूत्। नाभागात् महाभागवतोऽम्बरीषोऽभूदिति विवक्षंस्तद्धेतुत्वेन तत्पितुर्नाभागस्य निष्कपटत्वं तेन श्रीरुद्रप्रसादं चाह— यमित्यादिना। ब्रह्मचारिणं बहुकालं गुरुकुले वसन्तं नैष्ठिकोऽसाविति मत्वा विभागसमये

तस्मै भागमप्रकल्प्यैव भ्रातरः सर्वं दायं विभज्य गृहीत्वा पश्चाद् गुरुकुलादागतं यं भागार्थिनं कविं विद्वांसं यविष्ठं प्रति , ततं पितरं दायं व्यभजन्नित्यर्थः ॥ १ ॥ एतदेव प्रश्नोत्तराभ्यां दर्शयति— तत्र नाभागो भ्रातॄन् पृच्छति । हे भ्रातरो मह्यं किमभाक्त व्यभजत कं भागं मदर्थं यूयं कल्पितवन्तः? । एवं पृष्टा भ्रातर आहुः— भजामेति । तदा त्वरमाभिर्विस्मृतं इदानीं तव भागं पितरं विभजामः, त्वं स्वभागतया पितरं गृहाणेत्यर्थः । स च पितरं प्रति गत्वाऽऽह— तत हे तात आर्याः ज्येष्ठा भ्रातरो मम त्वामभाक्षुः भागं चक्रुः, मदीयभागतया त्वां दत्तवन्त इत्यर्थः । किं ममार्या इति पाठे तु हे तात किमिदमार्या ममाभाक्षुः भजाम पितरं तवेत्युक्त्वा त्वां मह्यं किमर्थं ददुरित्यर्थः । एवमुक्तः पिता प्राह— हे पुत्रक तत् तैरुक्तं मा आदृथाः प्रतारणमेव तैः कृतमतस्तद्वाक्ये आदरं माकार्षीः, नह्यहं दाय इव भोगसाधनमित्यर्थः ॥ २ ॥ तर्हि मया किं कर्तव्यं कथ च जीविका सम्पादनीया तत्राह—

भ्रातरोऽभाक्त किं मह्यं भजाम पितरं तव ॥ त्वां ममार्यास्तताभाक्षुर्मा[1] पुत्रक तदादृथाः ॥ २ ॥ इमे आङ्गिरसः सत्रमासतेऽद्य सुमेधसः ॥ षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥ तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ॥ ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥ दास्यन्त्यथ ततो गच्छ तथा स कृतवान् यथा ॥ तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषितम् ॥ ५ ॥

इमे इति सपादाभ्यां द्वाभ्याम् । इमे सन्निकृष्टाः आङ्गिरसः अङ्गिरोगोत्रोत्पन्ना ब्राह्मणा अद्य द्वादशाहाख्यं सत्रमासते अनुतिष्ठन्ति तत्र "अभिप्लवः षडहो भवति पृष्ठ्यः षडहो भवति" इति विहितेषु षडहेष्वावर्त्यमानेषु षष्ठं षष्ठमहःकर्मोपेत्य प्राप्य तस्मिन्कर्मणि तदनुष्ठाने ते सुमेधसो विद्वांसोऽपि सूक्तविशेषाज्ञानेन मुह्यन्ति । त्वं च तज्जानासीति सूचयन् सम्बोधयति— कवे इति, हे विद्वन् ॥ ३ ॥ तान्महात्मनो ब्राह्मणांस्त्वं वैश्वदेवे विश्वेदेवदेवताप्रकाशके "इदमित्थारौद्रम्" इति "ये यज्ञेन दक्षिणया" इति च द्वे सूक्ते शंसय पाठय । ततश्च कर्मणि समाप्ते सति ते स्वर्यन्तः स्वर्गं गच्छन्तः स्वसत्रे परिशेषितमवशिष्टमात्मनो धनं तुभ्यं दास्यन्ति । अथ तस्मात्त्वं तान् गच्छ । श्रीशुक आह— ततस्तदनन्तरं स नाभागो यथा पित्रोक्तं तथैव कृतवान्, ततश्च सत्रसमाप्त्यनन्तरं ते आङ्गिरसः सत्रपरिशेषितं धनं तस्मै नाभागाय दत्त्वा स्वर्गं ययुः ॥ ४ ॥ ५ ॥

[1] 'किं ममार्यास्तताभाक्षु' इति पाठान्तरम् ।

ततस्तद्धनं स्वीकरिष्यन्तं नाभागं दृश्यते इति दर्शनं शरीरं कृष्णं दर्शनं यस्य सः कश्चित् पुरुषः श्रीरुद्रः उत्तरतो दिश अभ्येत्यागत्येदं वास्तुकं यज्ञभूमिगतं वसु धनं मम मदीयमित्युवाचेत्यन्वयः ॥ ६ ॥ एवमुक्तस्तर्हिस्म तदैव मानवो नाभागः ऋषिभिर्मह्यं दत्तमितीदं धन ममेत्युवाच । पुनश्च रुद्र उवाच— नौ आवयोरस्मिन् विवादे ते तव पितरि प्रश्नः स्यादिति । स्वपितरं पृष्ट्वैव ममेदं त्वदीयं वेति निश्चयं कुर्वित्यर्थः । इत्युक्तो नाभागः स्वपितरमेत्य तथा पृष्टवान् इति शुकोक्तिः ॥ ७ ॥ तथा पृष्टः पिताऽऽह— यज्ञेति । यज्ञवास्तुगतं यज्ञभूमिगतं उच्छिष्टं अवशिष्टं सर्वं कचित् दक्षाध्वरे ऋषयो रुद्राय भागं चक्रुः । हि यस्मादेवं तस्मात्स रुद्रस्तत्सर्वमर्हति, तदीयमेव तत्सर्वमित्यर्थः । किञ्च तस्येश्वरत्वात् सर्वं तदीयमेव किं पुनर्यज्ञावशिष्टमित्याशयेनाह— देव इति ॥ ८ ॥ एवं पित्रोक्तो नाभागस्तं रुद्रं प्रणम्याह । हे ईश इदं वास्तुकं वसु तवैवेति मे मम पिताऽऽह, अतो हे ब्रह्मन् शिरसा

तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ॥ उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु ॥ ६ ॥ ममेदमृषिभिर्दत्तमिति
तर्हिस्म मानवः ॥ स्यान्नौ ते पितरि प्रश्नः पृष्टवान् पितरं तथा ॥ ७ ॥ यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः कचित् ॥
चक्रुर्हि भागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥ नाभागस्तं प्रणम्याऽऽह तवेश किल वास्तुकम् ॥ इत्याह मे पिता
ब्रह्मञ्छिरसा त्वां प्रसादये ॥ ९ ॥ यत्ते पिताऽवदद्धर्मं त्वं तु सत्यं प्रभाषसे ॥ ददामि ते मन्त्रदृशे ज्ञानं ब्रह्म
सनातनम् ॥ १० ॥ गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ॥ इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥
य एतत् संस्मरेत् प्रातः सायं च सुसमाहितः ॥ कविर्भवति मन्त्रज्ञो गतिं चैव तथाऽऽत्मनः ॥ १२ ॥

प्रणम्य त्वां प्रसादये। त्वदीयग्रहणे प्रवृत्तस्य ममापराधं क्षमस्वेति भावः ॥ ९ ॥ एवं प्रसादितो रुद्र आह— यदिति । यत् यस्मात्ते तव पिता तव पक्षपातं विहाय धर्मं यथार्थमवदत्, त्वमपि लोभं विहाय सत्यं यथोक्तमेव प्रभाषसे, तस्मात् मन्त्रदृशे मन्त्रज्ञायापि ते तुभ्यं सनातनब्रह्मात्मक ज्ञानं ददामि, यदनुग्रहात्तव ब्रह्मसाक्षात्कारो भवेदित्यर्थः ॥ १० ॥ तथा यदिदं सत्रे परिशेषितं मे द्रविणं धनं तदपि मया दत्तं जीविकार्थं गृहाण इत्युक्त्वा रुद्रोऽन्तर्हितः । एवं सप्रसन्नतया दाने हेतुमाह—सत्यवत्सल इति, सत्ये प्रीतियुक्तत्वात्त्वत्सत्यभाषणेन प्रसन्न इत्यर्थः । तत्र हेतुमाह—भगवानिति, भगवत्त्वेन लोभाभावादित्याशयः ॥ ११ ॥ एतदाख्यानस्मरणफलमाह— य इति । यः पुमान् समाहितचित्तः सन् एतदाख्यान सायं प्रातश्च संस्मरेत स मन्त्रज्ञो भवति । तथाऽऽत्मनः परमात्मनः सम्बन्धिनीं गतिमेव प्राप्नोति, न पुनः संसरतीत्यर्थः ॥ १२ ॥

---

१ इदमाख्यानं श्रुतिप्रसिद्धम् । तथाहि बह्वृचब्राह्मणम् ( पञ्चमपञ्चिकायाश्चतुर्दशोऽनुवाक ) "नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्" इत्यादि ।
२ मदित्यव्ययम्, ममेत्यर्थः ।

एवं नाभागवृत्तान्तमभिधायाथ तत्पुत्रचरित्रमाह— नाभागादित्यादिना यावत्पञ्चमाध्यायसमाप्ति । नाभागादम्बरीषोऽभूत् । विशेषतस्तच्चरित्रप्रश्नावसरप्रदानाय सङ्ग्रहेण तद्वृत्तं वदंस्तं विशिनष्टि— यमिति । यमम्बरीषं ब्रह्मशापो ब्राह्मणेन दुर्वाससा इममसौ दहत्विति वाक्यपूर्वकं निर्मितः कृत्यानलरूपो नास्पृशत् स्वकार्यं कर्तुं नाशक्नोत् । तेन किमाश्चर्यमित्यत आह— नेति । यः क्वचिदपि न प्रतिहतः । येन शापेन देवराज इन्द्रोऽपि त्रैलोक्यैश्वर्यात् प्रच्युतः, काऽन्यस्य वार्तेति भावः । तत्र हेतुमाह— कृतीति, सापराधेष्वप्युपकारकरणशीलः । तत्रापि हेतुमाह— महाभागवत इति ॥ १३ ॥ एवमुक्ते लब्धावसरो राजा पृच्छति— भगवन्निति । हे भगवन् हे सर्वज्ञ यत्राम्बरीषे निर्मुक्तः प्रयुक्तो दुरत्ययो दुरतिक्रमोऽपि ब्रह्मदण्डो न प्राभूत् स्वप्रभावं कर्तुं नाशक्नोत्, तस्य धीमतः अतएव राजर्षेः राजत्वेऽपि ऋषिवद्वर्तमानस्य चरितं श्रोतुमिच्छामीत्यन्वयः ॥ १४ ॥ एवमापृष्टः शुक आदौ तस्य महा-

नाभागादम्बरीषोऽभून्महाभागवतः कृती ॥ नास्पृशद्ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥ राजोवाच ॥ भगव-
ञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ॥ न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥ श्रीशुक उवाच ॥ अम्ब-
रीषो महाभागः सप्तद्वीपवतीं महीम् ॥ अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ १५ ॥ मेनेऽतिदुर्लभं पुंसां
सर्वं तत्स्वप्नसंस्तुतम् ॥ विद्वान् विभवनिर्वाणं तमो विशति यत्पुमान् ॥ १६ ॥ वासुदेवे भगवति तद्भक्तेषु च साधुषु ॥
प्राप्तो भावं परं विश्वं येनेदं लोष्ठवत्स्मृतम् ॥ १७ ॥

भागवतत्वं प्रपञ्चयति— अम्बरीष इत्यादिना आरिराधयिषुरित्यतः प्रोक्तनेन ग्रन्थेन[1] । नह्यनेकजन्मानुष्ठितधर्मं विनैवं विवेको भवतीत्याशयेनाह— महाभाग इति । अतएव सप्तद्वीपयुक्तां महीं अव्ययां निरुपद्रवां श्रियं सम्पदं अतुलं अनुपमं विभवं भोगोपकरणमैश्वर्यं भुवि पुंसामतिदुर्लभमपि लब्ध्वा तत्सर्वं स्वप्नसम्मितं स्वप्नदृष्टवस्तुतुल्यमनुपादेयं मेने इत्यन्वयः तत्र हेतुमाह— विभवस्य निर्वाणं फलं विद्वानिति । किं तत्फलमित्यपेक्षायामाह— यत् यस्माद्विभवसङ्गात् पुमांस्तमो नरकं विशतीति ॥ १५ ॥ १६ ॥ एवं सर्वतो विरक्तिस्तु तस्यानेकजन्मानुष्ठितसुकृतत्वेन शुद्धान्तःकरणस्य भगवद्भक्त्यैवेत्याह— वासुदेव इति । वासुदेवे श्रीवसुदेवनन्दने श्रीकृष्णे भगवति तथा साधुषु स्वपरकार्यसाधनपरेषु तस्य भगवतो भक्तेषु च परं सर्वत उत्कृष्टं भावं स्नेहं प्राप्तः । येन भावेनेदं विश्वं तेन लोष्ठवत् मृत्पिण्डवत्स्मृतं दृष्टम् ॥ १७ ॥

१ अस्यैवाध्यायस्य अष्टाविंशतिश्लोकान्तेन ' भृत्याभिरक्षणं ' इत्यन्तेन ग्रन्थेन ।

तत्कृतां भक्तिमेव प्रपञ्चयति— स वा इति त्रिभिः । स प्रसिद्धः अम्बरीषः कृष्णस्य पदारविन्दयोरेव मनश्चकार नान्यत्र । वै इत्यवधारणार्थकम्, तस्याग्रेऽप्येवमेव गुणानुवर्णनादौ सर्वत्रान्वयो बोध्यः । पदारविन्दचिन्तनप्रवणमकरोत् । तथा वैकुण्ठस्य तस्य भगवतो गुणानामनुवर्णने वचांसि चकार गुणानुवर्णनप्रवणान्येवाकरोत् । हरेर्मन्दिरमार्जनादिव्यापारेष्वेव हस्तौ चकार । आदिशब्दात्पात्रमार्जनादिग्रहणम् । न च्यवन्ति भक्ता यस्य सोऽच्युतस्तस्य सतीनां संसारदुःखनिवर्तिकानां कथानामुदये श्रवणे श्रुतिं श्रोत्रेन्द्रियं चकार । द्वयोः कर्णयोः श्रोत्रेन्द्रियस्यैकत्वविवक्षयैकवचनम् ॥ १८ ॥ मुकुन्दस्य मुक्तिदातुर्भगवतो लिङ्गानि विग्रहा आलयाः स्थानानि च तेषां दर्शने दृशौ नेत्रे चकार । तस्य मुकुन्दस्य ये भृत्या भक्तास्तेषां गात्राणा स्पर्शे अङ्गसङ्गम सकलाङ्गव्यापि त्वगिन्द्रियं चकार । श्रीमत्यास्तुलस्या यत्तस्य पादसरोजसम्बन्धेन सौरभं सुगन्धस्तास्मिन् घ्राणेन्द्रियं चकार । एकवचनमिन्द्रियैकत्वमभिप्रेत्य । तदर्पिते तस्मै निवेदितेऽन्नादौ रसनेन्द्रियं चकार ॥ १९ ॥ हरेः क्षेत्राणि मथुरादीनि पदानि अन्यानि च स्थानानि तेष्वनुसर्पणे पुनः पुनर्गमने पादौ

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ॥ करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ॥ घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ १९ ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ॥ कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥ २० ॥ एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ॥ सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥

चकार । हृषीकाणीन्द्रियाणि तेषामीशो नियन्ता भगवान् हृषीकेशस्तस्य पदयोरभिवन्दने शिरो मूर्द्धानं चकार । कामं तदर्पितस्रक्चन्दननैवेद्यादिग्रहणाभिलाषं तु तस्य दास्ये निमित्ते सति तत्प्रसादस्वीकाराभिप्रायेण चकार । न तु कामकाम्यया विषयभोगेच्छयेत्यर्थः । यदुक्तं तद्भक्तेषु परं भावं प्राप इति तदपि स्फुटयति— यथेति । उत्तमश्लोकः सत्कीर्तिर्भगवांस्तस्य जना भक्तास्तदाश्रया तद्विषया रतिर्भक्तिर्यथा भवति तथा सर्वं चकारेत्यर्थः ॥ २० ॥ सदा प्रतिदिनमात्मनः स्वस्याधिकारप्राप्तं कर्मकलापं कर्मसमूहं तथा एवमुक्तप्रकारेण भगवति सर्वात्मभाव " तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः " इत्युक्तलक्षणं च विदधन् कुर्वंस्तन्निष्ठैर्भगवद्भक्तैर्विप्रैर्वसिष्ठादिभिरभिहितः एवं कुर्वेवं माकार्षीरिति शिक्षितः इमां सप्तद्वीपवतीं महीं शशास पालयामास । राज्येऽधिकृतस्य तस्यैवं सर्वात्मभाव आश्चर्यमेवेत्याशयेनाह— हेति । एवं भगवति सर्वात्मभावस्य परमफलहेतुत्वाद्दुर्लभत्वं सूचयन्भगवन्तं विशिनष्टि— परे परमेश्वरे, अधियज्ञे यज्ञादिकर्मफलप्रदे, अधोक्षजे स्वेच्छां विनेन्द्रियजन्यज्ञानाविषये ॥ २१ ॥

महाविभूत्या उपचितानि विपुलीकृतानि अङ्गानि दक्षिणाश्च येषु तैर्वसिष्ठादिभिर्हेतुभूतैः सरस्वतीमभिस्रोतं तस्याः प्रवाहाभिमुखं यथा भवति तथा धन्वनि निरुदके धन्वदेशे ततैर्विस्तृतैरश्वमेधैरधियज्ञं यज्ञादिप्रवर्तकं तत्फलदातारमीश्वरं ईजे आराधयामास । अनेनाधिकृतोऽपि सर्वधर्मस्तेन यथावदनुष्ठित इति दर्शितम् ॥ २२ ॥ यदुक्तं 'महाविभूत्योपचिताङ्गदक्षिणैः' इति तदेव स्फुटयति— यस्येति । यस्याम्बरीषस्य क्रतुषु अश्वमेधेषु सदस्याः सभ्याः ऋत्विजो जनाश्च सुवाससो भूषणादिभिश्च गीर्वाणैर्देवैः सह तुल्यरूपा व्यदृश्यन्त स इत्थमिति चतुर्थेनान्वयः । ननु देवानां निमेषाभावात् कथं तत्तुल्यत्वमित्याशङ्क्याह— अनिमिषाश्च व्यदृश्यन्तेति । न निमिषन्तीति तथा आश्चर्यदर्शनौत्सुक्येन तेषा निमेषोपरमादिति भावः ॥ २३ ॥ तस्य निस्पृहत्वं कैमुत्यन्यायेनाह— यस्येति । यदीयैर्मनुजैरप्यमरप्रियोऽपि स्वर्गो न प्रार्थितः, तस्य तु निस्पृहत्वस्य का वार्तेत्यर्थः । कुत्र तेषां स्वर्गादपि महानानन्दो यत्र प्रसक्तास्ते स्वर्गमुपेक्षन्ते तत्राह— उत्तमश्लोकस्य अज्ञाननिवर्तकयशश्चेष्टितं शृण्वद्भिरुपगायद्भिरिति ॥ २४ ॥ स्वर्गविषयानन्दाज्जनानन्दस्याधिक्यं कैमुत्यन्यायेन दृढयति—समर्धयन्तीति । 'न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्' इत्युक्तत्वात्तपोयोगादिसिद्धानामपि दुर्लभाः काम्यन्त इति कामाः अणिमादीन्यैश्वर्याण्यपि यान्भगवद्भक्तान्न समर्द्धयन्ति न सम्यग्वर्धयन्ति न हर्षयन्ति तैः कर्मिजनप्राप्यः स्वर्गो न प्राध्यं इति किं वक्तव्यमित्यर्थः । तेषा तद्धर्षाकरत्वे हेतुमाह— मुकुन्दं मुक्तिदातार परमानन्दविग्रहं भगवन्तं हृदि पश्यत इति । कथं तेषां तत्र तद्दर्शनमित्याकाङ्क्षायामाह— स्वाराज्येति । स्वाराज्येन स्वतन्त्रेण भगवता स्वकीयत्वेन परिभावितान् चिन्तितानित्यर्थः । तत्कृपयैव तं पश्यन्तीत्याशयः । यानित्यत्र यदिति पाठे यस्मादित्यर्थः । यमिति पाठे अम्बरीषमित्यर्थः । परिभाविता इति पाठे कामविशेषणम् । पश्यतामिति पाठे सिद्धानां विशेषणम् ॥ २५ ॥ सोऽम्बरीषः पार्थिवो राजा इत्थं भक्तियोगेन तपोयुक्तेन स्वधर्मेण च हरिं प्रीणन् प्रसादयन् शनैः सर्वान् इहामुष्मिकभोगविषयान् सङ्गान् अभिलाषान् जहौ तत्याज ॥ २६ ॥

ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ॥ ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥ यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ॥ तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ २३ ॥ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ २४ ॥ समर्द्धयन्ति यान् कामाः स्वाराज्यपरिभावितान् ॥ दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ २५ ॥ स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ॥ स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वान् शनैर्जहौ ॥ २६ ॥

१ 'तान्' इति । 'यत्' इति 'यं' इति च पाठान्तराणि । २ 'परिभाविता' इति 'परिपश्यताम्' इति च पाठौ ।

जहावित्युक्तं तदेव प्रपञ्चयति— गृहेष्विति । गृहादिषु असन्मतिमपुरुषार्थत्वबुद्धिमकरोत । द्विपोत्तमा गजश्रेष्ठाः । स्यन्दनानि रथाः । वाजिनः अश्वाः । अन्यानि च वस्तूनि । अनन्तकोशाः अक्षय्यधनगृहाः ॥ २७ ॥ एवं सर्वथा भगवद्भजनपरोऽसौ प्रतिपक्षान् कथं जितवानन्यथा राज्यनिर्वाह एव कथं स्यात्तत्राह— तस्मा इति । प्रत्यनीकाः स्वाश्रितप्रतिपक्षास्तेषां भयमावहतीति तथाभूतं तथा स्वभृत्यानभितो रक्षतीति तथाभूतं चक्रं सुदर्शनं तस्यैकान्तभक्तिभावेन फलाभिसन्धिरहिताव्यभिचारभक्तियोगेन प्रीतः सन् हरिस्तस्मा अम्बरीषाय अदात् ॥ २८ ॥ चक्रस्य प्रतिपक्षक्षेपकत्वं प्रदर्शयन् यदुक्तं ब्रह्मदण्डो यत्र न प्राभूत् इति तत्प्रसङ्गमाह— आरिराधयिषुरित्यादिना । कृष्णमाराधयितुमिच्छुर्वीरोऽम्बरीषः तुल्यं शीलं भगवदाराधनस्य भावो यस्यास्तया महिष्या भार्यया सह युक्तः संवत्सरपर्यन्तं द्वादशीव्रतं दधार चकार ॥ २९ ॥ व्रतस्यान्ते कार्तिके मासि

**गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ २७ ॥ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ॥ एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥ २८ ॥ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ॥ युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥ व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ॥ स्नातः कदाचित् कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ ३० ॥ महाभिषेकविधिना सर्वोपस्कर-सम्पदा ॥ अभिषिच्याम्बराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ ३१ ॥ तद्गतान्तरभावेन पूजयामास केशवम् ॥ ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ ३२ ॥**

-अनेन व्रतोपक्रमोऽपि कार्तिकशुद्धैकादश्यामेव कृत इति फलितं-त्रिरात्रं समुपोषितः दशम्यामेकभुक्तं एकादश्यामुपवासः द्वादश्यां चैकभुक्तमिति स्वीकृतनियमः कदाचित् द्वादश्यां कालिन्द्यां यमुनायां स्नातः सन्मधुवनाख्ये वने हरिमार्चयत् । अडभाव आर्षः ॥ ३० ॥ अर्चनप्रकारमाह— सर्वेषामुपस्कराणां चन्दनपुष्पादीनां सम्पत्समृद्धिर्यस्मिंस्तेन महाभिषेकविधिनाऽभिषिच्य अम्बरादिभिः केशवं पूजयामासेत्यन्वयः । अम्बराभ्यां वस्त्राभ्याम् । आकल्पैः आभरणैः । गन्धैश्चन्दनादिभिः । माल्यैः पुष्पैः । अर्हणैः अर्घ्योदकैः । आदिपदात् धूपदीपनैवेद्यादिभिश्च ॥ ३१ ॥ पूजनमपि तद्गतान्तरभावेन तदेकचित्तत्वेन तथा महाभागान् भगवद्भक्तान् अतएव सिद्धार्थान् सिद्धः प्राप्तः अर्थोऽपेक्षितपदार्थो येषां तान् सर्वतोऽनपेक्षानपि ब्राह्मणांश्च भक्तितः पूजयामासेत्यन्वयः ॥ ३२ ॥

---

१ ' वस्तुषु ' इत्यपि पाठः क्वचित् ।

तथा रुक्मविषाणीनां हेमाच्छादितशृङ्गाणाम् । रूप्याङ्घ्रीणां रजताच्छादितखुराणाम् । शोभनानि वासांसि यासाम् । पयः क्षीरं च शीलं सुस्वभा वयः अपूर्वप्रसवत्वं च रूपं लाङ्गूलखुरविषाणादिसौष्ठवं च वत्साश्च उपस्करणानि दोहपात्रादीनि च तेषां सम्पत् समृद्धिर्यासा तासां गवाम्॥ ३३ षट् न्यर्बुदानि न्यर्बुदं दशकोटयः षष्टिकोटिसाधुविप्रेभ्यः दानयोग्येभ्यः प्राहिणोत् प्रददौ। ततश्च स्वगृहेषु स्वादु मृष्टं गुणवत्तमं षड्रसोपेतमन्नमग्रे प्रथमतो द्विजान् ब्राह्मणान् भोजयित्वा ॥ ३४ ॥ लब्धाः कामाः दक्षिणादयो यैस्तैर्ब्राह्मणैरनुज्ञातः पारणायोपचक्रमे उद्यतोऽभूत् । तर्हि तदैव तस्याम्बरीषस्य भगवान् भगवदवतारो दुर्वासा अतिथिः अतिथिरूपेण साक्षादभूत् प्रत्यक्षो बभूव॥ ३५॥ भूपस्तमागतं अतिथिं प्रत्युत्थानादिभिः

गवा रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ॥ पयश्शीलवयोरूपवत्सोपस्करसम्पदाम् ॥ ३३ ॥ प्राहिणोत् साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ॥ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥ लब्धकामैरनुज्ञातः पारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ॥ ३५ ॥ तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः ॥ ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ ३६ ॥ प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ॥ निममज्ज बृहद्ध्यायन् कालिन्दीसलिले शुभे ॥ ३७ ॥ मुहूर्तार्द्धावशिष्टायां द्वादश्यां पारणं प्रति ॥ चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटे ॥ ३८ ॥ ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ॥ यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ ३९ ॥

आनर्च पूजयामास । ततश्च तत्पादमूलमुपागतः प्रणतः सन् अभ्यवहाराय ययाचे भवताऽत्र भोक्तव्यमिति प्रार्थयामास ॥ ३६ ॥ स च दुर्वासाः तस्याम्बरीषस्य याच्ञा प्रार्थनां प्रतिनन्द्य अङ्गीकृत्यावश्यकं माध्याह्निकं कर्तुं गतः सन् शुभे शुद्धे कालिन्द्याः सलिले बृहद्ब्रह्मध्यायन् निममज्जेत्यन्वयः ॥ ३७ ॥ तत्तदा द्वादश्या मुहूर्तार्धेन घटिकामात्रेणावशिष्टायां सत्यां धर्मसङ्कटे च प्राप्ते सति धर्मज्ञोऽम्बरीषो द्विजैः सह पारणां प्रति चिन्तयामासेत्यन्वयः ॥ ३८ ॥ सङ्कटप्रदर्शनपूर्वकं तत् प्रश्नमेवाह—ब्राह्मणातिक्रमे अतिथितया निमन्त्र्य तमसम्भोज्य भोजने दोषो महान् प्रत्यवायस्तथा द्वादश्या अपारणेऽपि व्रतवैगुण्यरूपो दोषो यत् यस्मादेवं तस्मात् यत्कृत्वा यस्मिन् कृते सति मे मम साधु भद्रं भूयात् अधर्मश्च मा न स्पृशेत्तद्ब्रूतेति शेषः ॥ ३९ ॥

१ 'भूय' इति पाठान्तर कुत्रचिदृश्यते ।

द्विजैः सहैवं विचार्य निश्चिनोति—अम्भसेति । हि यस्मात् यदपां भक्षणं तदशित नाशितं चेति वेदाः प्राहुः अथ तस्मात्-हे विप्रा इति सम्बोधन सम्मत्यर्थम्-केवलेनाम्भसा जलेन व्रतस्य पारणं समाप्तिं करिष्ये इत्यन्वयः । तथाच श्रुतिः—"अपोऽश्नाति तन्नैवाशितं नैवानशितम्" इति । तथाच न व्रतवैगुण्यं नाप्यतिथ्यतिक्रमापराध इति ॥ ४० ॥ सोऽम्बरीष इत्येवं निश्चित्य तथापि धर्मस्य सुसूक्ष्मत्वात्तदन्यथा माभूत् इत्याशयेन अच्युतमन्तर्यामिणं भगवन्तं चिन्तयन् अपः प्राश्य पीत्वा हे कुरुश्रेष्ठ द्विजस्य दुर्वासस आगमनमेव प्रत्याचष्ट प्रत्यैक्षत । एवंकरणे परमविवेकित्वमेव हेतुं सूचयन् विशिनष्टि—राजर्षिरिति ॥ ४१ ॥ ततः कृतमावश्यकं माध्याह्निकं कर्म येन स दुर्वासा यमुनायाः कूलात्तीरादागतः । राज्ञाऽम्बरीषेणाभिनन्दितोऽपि ऋषित्वात् धिया योगजसूक्ष्मया बुद्ध्या तस्य राज्ञश्चेष्टितं अबशनरूपं बुबुधे ज्ञातवान् ॥ ४२ ॥ सुतरां भृशं बुभुक्षितः अतएव मन्युना क्रोधेन हेतुना प्रचलत् कम्पमानं गात्रं शरीरं यस्य सः अतएव भृकुटिभ्या कुटिलमाननं यस्य सः दुर्वासाः कृताञ्जलिमम्बरीषं प्रत्यभाषत ॥ ४३ ॥ अहो जनाः अस्याम्बरीषस्य

अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ॥ प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत् ॥ ४० ॥ इत्यपः प्राश्य राजर्षिश्चिन्तयन् मनसाऽच्युतम् ॥ प्रत्याचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥ ४१ ॥ दुर्वासा यमुनाकूलात् कृतावश्यक आगतः ॥ राज्ञाऽभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥ मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ॥ बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ४३ ॥ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ॥ धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥ ४४ ॥ यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ॥ अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ४५ ॥ एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ॥ तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ४६ ॥

धर्मव्यतिक्रमं अन्यायं पश्यत । तदतिक्रमे हेतुमाह— ईशमानिन इति, आत्मानमीशं स्वतन्त्रं मन्यमानस्य । तत्र हेतुमाह—श्रिया सम्पदा उन्मत्तस्य, कर्तव्या कर्तव्यानुसन्धानरहितस्येत्यर्थः । ननु भगवद्भक्तः कथमेवं स्यात्तत्राह—विष्णोरभक्तस्येति । तत्रापि ज्ञापकमाह— नृशंसस्येति, क्रूरस्वभावस्येत्यर्थः ॥ ४४ ॥ कोऽसावन्याय इत्यत आह— य इति । यस्त्वं आगतमतिथिं मां आतिथ्येन भोजनार्थं निमन्त्र्यापि मह्यं भोजनमदत्त्वा स्वय भुक्तवान् तस्य ते तव एतद्धर्मव्यतिक्रमस्य फलं सद्य इदानीमेव दर्शयामि ॥ ४५ ॥ एवं ब्रुवाणः रोषेण विदीपितः प्रज्वलितः स दुर्वासाः स्वजटामुत्कृत्य उत्पाट्य तया जटया तस्मै तमम्बरीषं हन्तुं कृत्यां मारिकां देवीं निर्ममे विनिर्मितवान् । अनिवार्यत्वं सूचयन् दृष्टान्तमाह— कालानलोपमामिति, प्रलयकालाग्नितुल्यामित्यर्थः ॥ ४६ ॥

१ 'आयान्त' इत्यपि पाठ' ।

आसिः खड्गः हस्ते यस्यास्तां पदा भुवं वेपयन्तीं कम्पयमानां ज्वलतीं प्रदीप्तामापतन्तीं तामतिभयङ्करां कृत्यां सम्यगुद्वीक्ष्यापि नृपोऽम्बरीषः पदात् स्थानात् किञ्चिदपि न चचाल ॥ ४७ ॥ तदा च भृत्यस्य अम्बरीषस्य रक्षायां रक्षार्थं ततः प्रागेव महात्मना महापुरुषेण दिष्टं नियुक्तं चक्रं सुदर्शनं तां कृत्यां ददाह । तत्र दृष्टान्तमाह—पावकोऽग्निर्यथा क्रुद्धमहिं सर्पं दहेत्तथेति ॥ ४८ ॥ ततश्च दुर्वासाः स्वप्रयासं कृत्योत्पादनं निष्फलमुद्वीक्ष्य तथा स्वाभिमुख द्रवत् आगच्छत् तद्दूरेश्चक्रं चोद्वीक्ष्य भीतः प्राणपरीप्सया प्राणान् प्राप्तुमिच्छया जीवनेच्छया दिक्षु दुद्रुवे पलायितवान् ॥ ४९ ॥ तं धावन्तं दुर्वाससं भगवतो रथाङ्गं चक्रं अन्वधावत् पृष्ठतोऽनुसृज्य दुद्रुवे । तत्र दृष्टान्तमाह— दावाग्निरिति । उद्धूताः ऊर्ध्वं वेपमानाः शिखा यस्य स दावाग्निर्वने उद्धूतः प्रचण्डोऽग्निर्यथाऽहिमनुधावेत्तद्वदित्यर्थः । तदा तथाऽनुषक्तं पृष्ठतः सँल्लग्नं चक्रमीक्षमाणो मुनिर्दुर्वासा मेरोः पर्वतस्य गुहां विविक्षुः प्रवेष्टुमिच्छुः सन्

तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ॥ वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ४७ ॥ प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ॥ ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ४८ ॥ तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम् ॥ दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ४९ ॥ तमन्वधावद्भगवद्रथाङ्गं दावाग्निरुद्धूतशिखो यथाऽहिम् ॥ तथाऽनुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥ ५० ॥ दिशो नभः क्ष्मां विवरान् समुद्राँल्लोकान् सपालांस्त्रिदिवं गतः सः ॥ यतो यतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥ ५१ ॥ अलब्धनाथः स यदा कुतश्चित् सन्त्रस्तचित्तो-ऽरणमेषमाणः ॥ देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ५२ ॥

प्रससार दुद्रुवे ॥ ५० ॥ एवं पलायमानो दुर्वासा दिगादिस्थानविशेषान् यथाशक्ति गतः, परन्तु यतो यत्र यत्र स धावति वेगेन गच्छति तत्र तत्र दुष्प्रसहं असह्यतेजस्कं सुदर्शनं चक्रं ददर्श । नभः अन्तरिक्षम्, विवरान् पर्वतगुहाः, अतलादिलोकांश्च ॥ ५१ ॥ ततश्च स दुर्वासाः यदा कुतश्चित्कुत्रचित् चापि न लब्धो नाथो रक्षको येन तथाभूतस्तदा सन्त्रस्तं चित्तं यस्य तथाभूतः सन् अरणं रक्षकं एषमाणः अन्वेषमाणो देवं विरिञ्चं ब्रह्माण समगात् । गत्वा च हे विधातः हे आत्मयोने अजितस्य विष्णोः तेजसश्चक्ररूपात् मां त्राहि पालयेति विज्ञापयामासेति शेषः । सकलकर्तृत्वात्तव मम पालनमुचितमिति विधातरिति सम्बोधनेन सूचितम् । तव च मम पालने सामर्थ्यमस्ति स्वयम्भुवत्वादित्याशयेन पुनः सम्बोधनम्— आत्मयोने इति ॥ ५२ ॥

एवं सम्प्रार्थितो ब्रह्माऽऽह— स्थानमिति । मदीयेन स्थानेन सहैतद्विश्वं यस्य भ्रूभङ्गमात्रेण तिरो भविष्यति नाशमेष्यति । तस्य तेजसस्त्रातुमहं न प्रभुरिति शेषः । नाशानुकूलभ्रूविक्षेपे हेतुमाह— सन्दिधक्षोरिति, एतत् सन्दग्धुमिच्छोः सञ्जिहीर्षोरित्यर्थः । एवमिच्छायामपि भ्रूभङ्गमात्रेण कथं नाश इत्याशङ्क्य सामर्थ्यमाह— कालात्मन इति। संहारेच्छाया हेतुमाह— क्रीडावसाने इति, जगज्जननादिव्यापाररूपक्रीडाया अवसाने सतीत्यर्थः। तत्कदा भवतीत्यपेक्षायामाह— द्विपरार्धसञ्ज्ञे द्विपरार्धकालावसाने इत्यर्थः । अत्र न किञ्चित्सन्दिग्धं सर्वं निश्चितमेवेति सूचयन्नाह— हीति । ब्रह्मलोकस्य विश्रान्तभूतत्वेऽपि नित्यत्वशङ्कावारणाय पृथगुक्तिः ॥ ५३ ॥ न केवलमहमेव त्वां त्रातुं न प्रभुरपि तु रुद्रादयोऽपीत्याह— अहमिति। अहं ब्रह्मा भवो रुद्रः दक्षभृगु प्रधानौ मुखौ येषा स्ववंश्यानां स्वनियोज्याना च ते तथा प्रजेशा मरीच्यादयः भूतेशा एकादशरुद्रप्रभृतयः सुरेशा इन्द्रादयः ते

ब्रह्मोवाच ॥ स्थानं मदीयं सहविश्वमेतत्क्रीडावसाने द्विपरार्धसञ्ज्ञे ॥ भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनो यस्य तिरो भविष्यति ॥ ५३ ॥ अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ॥ सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः ॥ ५४ ॥ श्रीशुक उवाच ॥ प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ॥ दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ५५ ॥ श्रीशङ्कर उवाच ॥ वयं न तात प्रभवाम भूम्नि यस्मिन् परेऽन्येऽप्यजजीवकोशाः ॥ भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥ ५६ ॥

मुख्या येषां स्वसन्तानप्रभवाणां स्वनियोज्यानां ते च ते सर्वेऽपि वयं यस्य भगवतो नियममाज्ञां प्रपन्नाः प्राप्ताः सन्तस्तेन मूर्ध्न्यर्पितं भारमिव लोकहितं वहामः कुर्मः। अतस्तत्तेजसस्त्वा त्रातुं न शक्ता इति शेषोऽत्रापि ज्ञेयो यत्तदोर्नित्यसम्बन्धात् ॥ ५४ ॥ एवं विरिञ्चेन प्रत्याख्यातो भगवच्चक्रेणोपतापितश्च दुर्वासाः कैलासवासिनं शर्वं रुद्रं शरणं यातः चक्रान्मां त्रायस्वेति प्रार्थितवान् ॥ ५५ ॥ एव प्रार्थितो रुद्र आह— वयमिति । स्वांशावतारत्वात् प्रतारणाशङ्कानिरासार्थं स्नेहं सूचयन् सम्बोधयति— तातेति । यत्र येषु ब्रह्माण्डेषु वयं लोकेशाभिमानिनो भ्रमामः ते ईदृशा दृश्यमानब्रह्माण्डसदृशाः सहस्रशोऽन्येऽपि अजाः ब्रह्माणः जीवाश्च तेषा कोशाः निवासभूताः ब्रह्माण्डविग्रहाः यस्मिन् भूम्नि परे परमेश्वरे काले 'अहं बहुस्याम्' इत्युक्तसिसृक्षाकाले भवन्ति उत्पद्यन्ते, पुनश्च सञ्जिहीर्षाकाले न भवन्ति तस्मिन्नेव लीयन्ते तस्मिन् वयं न प्रभवामः तच्चक्रात्त्रातुं न शक्नुम इत्यन्वयः। हीति निश्चयार्थः ॥ ५६ ॥

ननु सर्वज्ञस्य तव कुतो भ्रमस्तत्राह— अहमिति । अहं रुद्रः अस्मदादयस्तथाऽन्ये च सिद्धेशाः विद्यातपोयोगनिष्ठाः पारदर्शिना सर्वज्ञा अपि वयं सर्वे यस्य मायां सङ्कल्पं न विदामः न जानीमः । तत्र हेतुमाह— तस्यैव मायया वृताः मोहिता इति ॥ ५७ ॥ ५८ ॥ हि यस्मात्तस्य विश्वेश्वरस्येदं सुदर्शनाख्यं शस्त्रं चक्रं नोऽस्माकं सर्वेषां दुर्विषहं असह्यतेजस्कं, ततो रक्षा तु दूरतः, अतो यस्य शस्त्रं तमेव शरणं याहि, स हरिः शरणागतार्तिहरो भगवांस्ते तव शं सुखं विधास्यति करिष्यति ॥ ५९ ॥ इत्युक्तो दुर्वासाः निराशः स्वसंरक्षणाशारहितः सन् ततः कैलासात् श्रिया लक्ष्म्या सह श्रीनिवासो विष्णुः यदध्यास्ते तद्विकुण्ठाख्यं भगवतः पदं स्थानं ययावित्यन्वयः ॥ ६० ॥ तत्र गतोऽपि अजितस्य शस्त्रवह्निना चक्रज्वालया सन्दह्यमानः अतएव सवेपथुः कम्पमानदेहः तस्य भगवतः पादमूले पतितः सन्नाह । तदेव दर्शयति— । तत्र विश्वपालकस्य तव ममापि रक्षोचितैवेत्याशयेन सम्बोधयति— विश्वभावनेति । तत्रापेक्षितं सामर्थ्यं सूचयन् सम्बोधयति— प्रभो इति । तत्र हेतुं सूचयन् सम्बोधयति— अनन्तेति, देशकालवस्तुपरिच्छेदशून्येत्यर्थः । अतएव

अहं सनत्कुमारश्च नारदो भगवानजः ॥ कपिलोऽपान्तरतमो देवलो धर्म आसुरिः ॥ ५७ ॥ मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः ॥ विदाम न वयं सर्वे यन्मायां मायया वृताः ॥ ५८ ॥ तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ॥ तमेव शरणं याहि हरिस्ते शं विधास्यति ॥ ५९ ॥ ततो निराशो दुर्वासाः पदं भगवतो ययौ ॥ विकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ६० ॥ सन्दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः ॥ आहाच्युतानन्त सदीप्सित प्रभो कृतागसं माऽव हि विश्वभावन ॥ ६१ ॥ अजानता ते परमानुभावं कृतं मयाऽघं भवतः प्रियाणाम् ॥ विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ६२ ॥

न च्यवन्ति भक्ता यस्मात्तथाभूतेति सम्बोधयति— अच्युतेति । अतएव सतां भक्तानामीप्सित इष्टतमेति सम्बोधनम् । हि यस्मात्त्वमेवम्भूतस्ततः कृतागसं कृतत्वद्भक्तापराधमपि मा मां अव पाहि ॥ ६१ ॥ कृतापराधस्य तव दण्ड एव युक्तो न पालनमित्यत आह— अजानतेति । ते तव परमं निरतिशयमनुभावं अजानता मया भवतः प्रियाणा भक्तानां अम्बरीषतदनुसारिणा अघं कृतं कृत्याप्रेषणेनापराधः कृतः, तस्यापराधस्यापचितिं निष्कृतिं विधेहि कुरु, अपराधं सोढ्वा पालयेत्यर्थः । युक्तं चैतत् यस्य तव नाम्न्यप्युदिते नामोच्चारणमात्रेणापि नारको नरकस्थोऽपि तत्प्राप्तिनिमित्तानां पापानां तत्क्षणे विनाशान्नरकान्मुच्येत । तस्य तव साक्षाद्दर्शनेऽस्मादपराधात् सङ्कटाच्च विमुक्तो कः सन्देह इत्याशयः । तत्रापि हेतुं सूचयन् सम्बोधयति— विधातरिति, सकलजगत्सृष्ट्यादिकर्ता यदि न पालयेत्तर्हि कः पालयेदित्याशयः ॥ ६२ ॥

१ 'दन्दह्यमान' इति 'स दह्यमान' इति च पाठान्तरद्वय कुत्रचिद्दृश्यते ।

एवं दुर्वाससा सम्प्रार्थितो भगवानाह—अहमिति । ब्राह्मणस्य विवेक एवोचितो न दुराग्रह इत्याशयेन सम्बोधयति—द्विजेति । अहं त्वद्रक्षायामस्वतन्त्र इव । तत्र हेतुमाह—भक्तपराधीन इति । ननु सर्वनियन्तुस्तव कथं पराधीनत्वमित्यपेक्षायां इव शब्दसूचितं 'ये यथा मा प्रपद्यन्ते तास्तथैव भजाम्यहम्' इति स्वसङ्कल्पवशादिति हेतुं सूचयन्नाह—भक्तजनप्रिय इति, भक्तजनाः प्रिया यस्येत्यर्थः । एतदेव स्पष्टयति—साधुभिर्निरपेक्षैर्भक्तैर्ग्रस्त प्रेम्णा वशीकृतं हृदयं यस्य स इति । अनेन सर्वोऽपि मम कायवाङ्मनोव्यापारो भक्ताधीन एवेति सूचितम् ॥ ६३ ॥ ब्रह्मणोऽपि मद्वचनं प्रामाण्यमेवेति त्वयाऽपि तथैवाङ्गीकार्यमित्याशयेन सम्बोधयति— ब्रह्मन्निति । येषामहं परा गतिः परमः आश्रयस्तैः साधुभिः परमविवेकितया स्वपरकार्यसाधनपरैर्भक्तैर्विना तत्प्रतिकूलमात्मानं सच्चिदानन्दात्मकं स्वविग्रहं तथा तत्प्रतिकूला आत्यन्तिकीं अव्यभिचारिणीं श्रियं लक्ष्मीं चापि न आशासे न स्पृहयामि, अन्यस्य का वार्तेत्यन्वयः ॥ ६४ ॥ उक्तमेव प्रपञ्चयति— य इति । दारादीन् हित्वा तदासक्तिं त्यक्त्वा ये मा शरणं याताः आश्रितवन्तः तानहं कथं त्यक्तुमुत्सहे शक्नोमि ? न हि विश्वस्तत्याग उचित इति भावः । यद्यपि न दुर्वासा अम्बरीषत्यागाय शरणं गतः किन्तु स्वरक्षार्थमेव

श्रीभगवानुवाच ॥ अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ६३ ॥ नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ॥ श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥ ६४ ॥ ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ॥ हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ६५ ॥ मयि निर्बद्धहृदयाः साधवः समदर्शनाः ॥ वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥६६॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ॥ नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविद्रुतम् ॥ ६७ ॥

तथापि तस्य भक्तप्रतिपक्षत्वात्तद्रक्षाभक्तपरित्याग एव पर्यवस्यतीति कथं त्यक्तुमुत्सहे इत्युक्तम् । दारान् स्त्रियः,अगारान् गृहान्, पुत्रान्,आप्तान् सत्पुरुषतया मान्यान्, प्राणान् जीवनहेतून्, वित्तं धनं, इमं लोकं, परं च लोकम् ॥ ६५ ॥ मयि अनन्यनिर्बद्धं अनन्यविषयत्वेन स्थिरीकृतं हृदयं यैस्ते अतएव समदर्शनाः सर्वस्य मदात्मकत्वदर्शिनः साधवो मद्भक्ता भक्त्या अनन्यप्रयोजनया मयि प्रीतिरूपया मां वशीकुर्वन्ति । तत्र दृष्टान्तमाह—सत्स्त्रिय इति । सत्यः अनन्यप्रयोजनाः पतिप्रेमवत्यः पतिव्रताः स्त्रियो यथा सत्पतिं निष्काममपि पतिं वशीकुर्वन्ति तथेत्यर्थः ॥ ६६ ॥ एकान्तभक्ताना निष्कामत्वलक्षणं कैमुत्यन्यायेनाह— मत्सेवयेति । ये मेऽनन्यभक्तास्ते मत्सेवया प्रतीतं उपस्थितं सालोक्यमादिर्यस्य तत् सालोक्यसामीप्यसायुज्यसारूप्यपुरु षार्थचतुष्टयमपि नेच्छन्ति कालेन विद्रुतं अनुगतं विनश्वरमन्यादिन्द्रादिपदं नेच्छन्तीति कुतः किं वक्तव्यम् । तत्र हेतुमाह-मत्सेवयैव पूर्णाः पूर्णमनोरथाः ॥ ६७ ॥

किं बहुना साधवो मद्भक्ताः मह्यं मम हृदयं हृदय्या इत्यर्थः। अत्यन्तप्रियत्वेनाभेदनिर्देशः। साधूनां तु हृदयं हृदय्योऽहमेव। एतदेव स्पष्टयति— ते मद्भक्ता मत्तोऽन्यत् प्रियं वस्तु किमपि न जानन्ति तथाऽहमपि तेभ्यो भक्तेभ्योऽन्यन्मनाक् ईषदपि किञ्चित्प्रियं वस्तु न जानामि ॥ ६८ ॥ तर्ह्यस्मादुरतिक्रमाच्चक्रात् कथं मम निस्तार इत्यपेक्षायामाह—उपायमिति । मयाऽपि शरणागतब्राह्मणरक्षा कर्तव्यैवेति सूचयन् सम्बोधयति— विप्रेति । तत्र निर्मुक्त्युपायं कथयिष्यामि तच्छृणुष्व एवं कथनं प्रतिज्ञायाह— अयं हीत्यवधारणे । ते तवायं आत्माभिचारः स्वोत्पादितपीडात्मको यतो निमित्तादभूत् तमम्बरीषमेव भवान् शरणं यातु । वाऽपराधस्मरणार्थः । न चायं तव पराभवोऽसम्भावितो निश्चितत्वादित्याह— साधुषु मद्भक्तेषु प्रहितं प्रयुक्त तेजः सामर्थ्यं प्रहर्तुरेवाशिवमनर्थं कुरुते ॥ ६९ ॥ ननु तपोविद्यादेः पुरुषार्थसाधकत्वान्मयि कथं तत्फलवैपरीत्यमित्याशङ्क्याह— तप इति । तपोऽनशनादि विद्या उपासना चैते उभे विप्राणां विनयादिगुणयुक्तानां निश्श्रेयसकरे निरतिशयपुरुषार्थसाधने अपि ते एव तपोविद्ये दुर्विनीतस्य निरपराधिष्वपराधकर्तुः विप्रस्य तु

साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ मदन्यत्ते[1] न जानन्ति नाहं तेभ्यो मनागपि ॥ ६८ ॥ उपायं कथयिष्यामि
तव विप्र शृणुष्व तत् ॥ अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥ साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् ॥ ६९ ॥
तपो विद्या च विप्राणां निश्श्रेयसकरे उभे ॥ ते एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ॥ ७० ॥ ब्रह्मंस्तद्गच्छ
भद्रं ते नाभागतनयं नृपम् ॥ क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ७१ ॥ इति श्रीमद्भागवते महापुराणे
नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणेऽम्बरीषचरितनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥

अन्यथाकर्तुं कल्पेते, अनर्थायैव भवेतामित्यर्थः ॥ ७० ॥ ब्राह्मणत्वेन तव क्षत्रियाद्रक्षाप्रार्थनायामपि न काचित् क्षतिरिति सूचयन् सम्बोधयति— ब्रह्मन्निति । तत् तस्मात् मयाऽपि तव रक्षा कर्तुमशक्यत्वात् नाभागतनयमम्बरीषं प्रति गच्छ गत्वा च तं नृपं क्षमापय अपराधक्षमापूर्वकं स्वरक्षां प्रार्थय । नच शङ्कनीयं स यदि न क्षमां कुर्यात् तदा किं कर्तव्यमिति तत्र हेतुमाह— महाभागमिति, परमधर्मज्ञत्वात्तव क्षमां करिष्यत्येव । ततः तत्क्षमापणात्ते तव भद्रं सुखं शान्तिः सुदर्शनशान्त्या तापनिवृत्तिश्च भविष्यतीत्यर्थः ॥ ७१ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ तुर्योऽगादम्बरीषस्य चरितस्य निरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

१ ' मदन्य ते ' इति पाठोऽन्यस्मिन्पुस्तके ।

चक्रं स्तुत्वा प्रयत्नेन दूर्वासाः प्राणसङ्कटात् ॥ मोचितश्चाम्बरीषेण पञ्चमे तन्निरूप्यते ॥ १ ॥ एवं भगवता आदिष्टः उपदिष्टो दुर्वासा अम्बरीषं प्रति उपावृत्य आगत्य तस्य पादावग्रहीत्। तत्र हेतुः— दुःखित इति । तत्रापि हेतुः— चक्रेण तापित इति ॥ १ ॥ सोऽम्बरीषस्तस्य दुर्वासस उद्यमनं पादग्रहणादिक्षमापणोद्यमं वीक्ष्य तेन ब्राह्मणेन कृतो यस्य पादस्पर्शस्तेन विलज्जितः तत्सङ्कटं निरीक्ष्य कृपया भृशं पीडितश्च तद्विमुक्त्यर्थं तत्तस्य पृष्ठतोऽनुषक्तं हरेरस्त्रं सुदर्शनमस्तावीत् । सोद्यमनामिति सन्धिः पादपूरणार्थः ॥ २ ॥ तत्र सर्वात्मकस्य भगवतः शक्तिविशेषात्मकतया सुदर्शनस्य तदभेदमभिप्रेत्य सर्वात्मकत्वं वदन् स्तौति— त्वमिति नवभिः । सोमं विशिनष्टि— ज्योतिषा नक्षत्राणा ततिरिति । मात्राणि शब्दादीनि इन्द्रियाणि च ॥ ३ ॥ अहं तु न तवोपकारे समर्थ इति सूचयन् प्रणमति— हे सुदर्शन तुभ्यं नम इति। भगवत्प्रियेण त्वया भगवद्भक्तस्य मम प्रार्थना पूरणीयैवेत्या-

श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ॥ अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ १ ॥
तस्य सोद्यमनं वीक्ष्य पादस्पर्शविलज्जितः ॥ अस्तावीत्तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ २ ॥ अम्बरीष उवाच ॥
त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ॥ त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ३ ॥ सुदर्शन
नमस्तुभ्यं सहस्राराच्युतप्रिय ॥ सर्वास्त्रघातिन् विप्राय स्वस्ति भूया इडस्पते ॥ ४ ॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञो
ऽखिलयज्ञभुक् ॥ त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ५ ॥ नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुर
धूमकेतवे ॥ त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ६ ॥

शयेन सम्बोधयति— अच्युतप्रियेति । तव च न किमप्यशक्यमित्याशयेन सम्बोधयति— सर्वास्त्रघातिन्निति । तत्र हेतुत्वेन पुनः सम्बोधयति— सहस्रारेति । सहस्रमारा यस्य सर्वपालकस्य । तव दुष्टनिग्रह एवमुक्तो न साधुनिग्रह इत्याशयेन सम्बोधयति— हे इडस्पते हे पृथ्वीपते अतो विप्रस्यास्य स्वस्तिभूयाः मङ्गलरूपो रक्षको भव ॥ ४ ॥ ऋतं च सूनृता वाणी, सत्यं च समदर्शनम्, यज्ञो यज्ञात्मतपोपासनीयः अखिलयज्ञभुक् सकलयज्ञैः आराध्यस्तत्फलदश्च पौरुषं पुरुषस्य भगवतः परं तेजः सामर्थ्यरूपम् ॥ ५ ॥ शोभना नाभिर्यस्य तत्सम्बोधन हे सुनाभ अद्भुतकर्माणं त्वा कः स्तोतु समर्थः अतोऽद्भुतकर्मणे तुभ्यं केवलं नमो गृणे करोमीत्यन्वयः । अद्भुतकर्मत्वमेव दर्शयति— अखिलाना धर्माणां सेतवे मर्यादारूपाय। अतएव अधर्मशीलाना-मसुराणां धूमकेतुरग्निस्तद्वद्दाहकायेत्यर्थः । त्रैलोक्यं गोपायतीति तथा विशुद्धमत्युज्ज्वल वर्चस्तेजो यस्य तस्मै । मनस इव जवो वेगो यस्य तस्मै ॥ ६ ॥

---

१ स्तवार्थमुद्यमनं, प्रणामादि चेत्यन्यत्र । २ सुलोपश्छान्दसः, आर्ष इत्यर्थः ।

अद्भुतवर्यस्कत्वमेव प्रपञ्चयन् स्तौति त्वत्तेजसेति । अभ्याद्रितेजसः परमार्थरूपत्वमभिप्रेत्य सम्बोधयति–गिराम्पते इति । धर्ममयेन धर्मप्रतिपक्षाधर्मकर्तृविनाशकत्वेन धर्मनिर्वाहकत्वाद्धर्मप्रचुरेण त्वत्तेजसा महात्मना भगवदुपासकानां दृशः स्वरूपज्ञानस्यावरकं तमो ज्ञानं सहृतं निरस्तं प्रकाशश्च कृत इति शेषः । किञ्च सदसत् कार्यकारणात्मकं परावरं उत्कृष्टापकृष्टमेतज्जगत् त्वद्रूपं त्वयैव रूप्यते सूर्यादिद्वारा प्रकाश्यते इति तथाभूनम् । एवम्भूतस्य ते तव महिमा दुरत्ययः, अपार इत्यर्थः ॥ ७ ॥ महिम्नो दुरत्ययत्वमेव स्पष्टयति– हे अजित अनञ्जनेन अविद्यादिदोषवश्यत्वराहितेन भगवता यदा त्वं विसृष्टो निर्मुक्तस्तदैव दैत्यदानवाना बल सेनां प्रविष्टः सन् अजस्र निरन्तर तेषां बाह्वादीन् वृक्णन् छिन्दन् प्रधने युद्धे विशेषेण राजसे । प्रविष्टोर्जितेति पाठे तु ऊर्जिता महाबलपराक्रमा दैत्या दानवाश्च यस्मिंस्तद्बलमित्यर्थः । पूर्वपदेन सान्धिरार्षः । प्रविश्योर्जितेत्यपि पाठान्तरम् ॥ ८ ॥

त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च दृशो महात्मनाम् ॥ दुरत्ययस्ते महिमा गिराम्पते त्वद्रूपमेतत् सदसत्परावरम् ॥ ७ ॥ यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम् ॥ बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे ॥ ८ ॥ स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता ॥ विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ९ ॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ॥ कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥ १० ॥

स सर्वसहः युद्धे सर्वारीन् सोढुं शक्तस्त्वं जगतः भगवज्जनस्य त्राणं च खलानां भक्तप्रतिपक्षभूतानां प्रहाणिर्विनाशश्च तदर्थमेव गदाभृता भगवता निरूपितः नियुक्तः । यद्वा हे जगत्त्राणेति सम्बोधनेन भगवद्भक्तरक्षार्थं च प्रयुक्त इति सूचयति । यत एवं तस्मादस्मत्कुलस्य दैवहेतवे भाग्यलाभाय अस्य विप्रस्य भद्रं मङ्गलं प्राणरक्षणरूपं विधेहि कुरु । हि यस्मात्तत् विप्ररक्षणमेव नोऽस्माकं त्वत्कृतोऽनुग्रहः । अन्यथा ब्राह्मणहत्ययाऽस्माकं लोकेऽप्यशः कुलविनाशो नरकादिपातश्च स्यादिति भावः ॥ ९ ॥ एवं प्रार्थितमपि दुर्वाससमत्यजत्सुदर्शनं चक्रमालक्ष्य स्वसर्वसुकृतेन शपथं कुर्वन्नाह– यदीति । नोऽस्माकं यदि दत्तादिकमस्ति कुलं च विप्रा दैवतं देववत्पूज्या यस्य तथाभूतं चेद्यद्यस्ति तर्हि विप्रो विज्वरो भवतु । अस्मदीयदत्तादिपुण्येन दुर्वासाः सुदर्शनतापाद्विमुच्यतामित्यर्थः । दत्तं दानं कृतम् । इष्टं यज्ञादिश्रौतम् । कर्मसु सम्यगनुष्ठितः स्वधर्मः, स्ववर्णाश्रमोचितो धर्मश्च ॥ १० ॥



१ एकपदपाठान्तरे इत्यर्थ । २ 'भृत' इति पाठान्तर सुबोधिनीभावार्थदीपिकाकारयो । तत्र भृत सन्निहित इत्यर्थ. ।

अनेन शपथेनापि तत्त्यागमदृष्ट्वा मुख्यशपथान्तरेण तत्तापनिवृत्तिं प्रार्थयते— यदीति। सर्वेषु भूतेषु आत्मनस्तस्यैव यो भावो भावना तेन यदि नोऽस्माक भगवान् प्रीतोऽस्ति तर्हि द्विजो विज्वरः सुदर्शनसन्तापरहितो भवत्वित्यन्वयः। कथं तस्य सर्वत्र स्थितिस्तत्राह— एक इति। यतः स एक एव सर्वेषां गुणानां गुणकार्याणां देहेन्द्रियादिसङ्घानामाश्रयः धारकोऽन्तर्यामी च। तत्र हेतुः— भगवानिति ॥ ११ ॥ इत्येवं शपथपूर्वकं राज्ञोऽम्बरीषस्य सम्यक् स्तुवतः सतः सर्वतो विप्रं प्रदहत्स्थितं सुदर्शनाख्यं विष्णुचक्रं राज्ञो याञ्चया अशाम्यत् शान्तमभूत्। विष्णुपदेन राज्ञो भगवत्प्रीतिविषयत्वात्तच्छपथेन तद्विमोकविलम्बं सेहे इति सूचितम् ॥ १२ ॥ ततोऽस्त्राग्नेः सुदर्शनाग्नेस्तापेन मुक्तः सः दुर्वासाः स्वस्तिमान् सन्तापरहितः तमुर्वीशं राजानं परमा आशिषो युञ्जानः प्रशशंस तुष्टाव ॥ १३ ॥ प्रशंसामेव दर्शयति— अहो इति चतुर्भिः। हे राजन् अनन्तस्य भगवतो दासाना युष्माकमहो आश्चर्यभूतं महत्त्वमद्य मे मया दृष्टम्। किं तदित्यत आह—। कृतागसः कृतापराधस्यापि मम त्वं मङ्गलानि सुखान्येव समीहसे इच्छसीति यत् ॥ १४ ॥

यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ॥ सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ११ ॥ श्रीशुक उवाच ॥
इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ॥ अशाम्यत् सर्वतो विप्रं प्रदहद्राजयाच्ञया ॥ १२ ॥ स मुक्तोऽस्त्राग्नितापेन
दुर्वासाः स्वस्तिमांस्ततः ॥ प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ १३ ॥ दुर्वासा उवाच ॥ अहो अनन्तदासानां
महत्त्वं दृष्टमद्य मे ॥ कृतागसोऽपि यद्राजन् मङ्गलानि समीहसे ॥ १४ ॥ दुष्करं किं नु साधूनां दुस्त्यजं वा महात्मनाम्[1] ॥
यैः सङ्गृहीतो भगवान् सात्वतामृषभो हरिः ॥ १५ ॥ यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ॥ तस्य तीर्थपदः किं
वा दासानामवशिष्यते ॥ १६ ॥

'यद्यस्ति दत्तं' इत्यादिश्लोकद्वयमुक्तं स्वसुकृतादिफलत्यागेनापि स्वप्राणरक्षणप्रार्थनमालक्ष्य तेन विस्मित आह— दुष्करमिति। साधूनां स्वकार्यसाधनपराणां महात्मनां किं नु निग्रहानुग्रहादिकं दुष्करं कर्तुमशक्यं किं वा दुस्त्यजं त्यक्तुमशक्यमित्यन्वयः। के ते महात्मानः को वा तेषां दत्तादिफलत्यागे हेतुरित्यपेक्षायां महति भगवत्यात्मा मनो येषामिति महात्मपदव्युत्पत्तिं दर्शयंस्तदेव दत्तादिफलत्यागे हेतुरित्याशयेन तान्विशिनष्टि— यैरिति। यैः सात्वता भक्तानामृषभः पालको हरिस्तेषामार्तिहरो भगवान् ऐश्वर्यादिलाभेनैव पूर्णः सङ्गृहीतः सम्यक् प्रेम्णा हृदि स्थापितः ॥ १५ ॥ उक्तमेव स्पष्टयति— यन्नामेति। यस्य भगवतो नाम्नः श्रवणमात्रेणापि पुमान् निर्मलो रागलोभादितन्मूलपापादिभी रहितो भवति तस्य दासानां किं वाऽवशिष्यते दुर्लभं भवति किन्तु सर्वमेव सुलभमित्यर्थः। निर्मलत्वे हेतुमाह— तीर्थपद इति। गङ्गादिसर्वतीर्थाश्रयपादारविन्दस्येत्यर्थः ॥ १६ ॥

१ 'दुष्करः को नु साधूनां दुस्त्यजो वा' इति पाठान्तरम्। २ दशैकादशश्लोकौ।

एवं प्रशस्य स्वस्य कृतज्ञतासूचनाय तत्कृतमुपकारमावेदयति— राजन्निति सम्बोधनेन बहवोऽपि राजानो दृष्टाः परं तव शीलं तु क्वापि न दृष्टमिति सूचयति । निरतिशयकरुणायुक्तचित्तेन त्वयाऽहमनुगृहीतोऽस्मि । कोऽसौ मत्कृतोऽनुग्रहस्तत्राह— मदघमिति । ममापराधं निर्दोषस्य तव मारणार्थं कृत्योत्पादनरूपं पृष्ठतः कृत्वा अगणय्य मे प्राणा अभिरक्षिता इति यत्स एष एव महाननुग्रह इत्यर्थः ॥ १७ ॥ 'राजा तं' इत्यादिश्लोकद्वयं शुकोक्तिः । द्विजस्य प्रत्यागमनप्रतीक्षया न कृत आहारो भोजनं येन स राजा तस्य चरणावुपसङ्गृह्य प्रसाद्य तं प्रसन्नं कृत्वा सम्यक् प्रीत्या अभोजयत् ॥ १८ ॥ सर्वे कामाः काम्यन्ते इति कामाः षड्रसाः यस्मिंस्तत् आदृतं सादरं तथा भवति तथा भुज्यतामिति प्राहेत्यन्वयः ॥ १९ ॥ एवं भोजनाज्ञा दत्त्वाऽन्यदप्युक्तवांस्तदाह— प्रीतोऽस्मीति द्वयेन । सुदर्शनं स्तुत्वा मत्प्राणरक्षणेन त्वयाऽहमनुगृहीतोऽस्मि तथा भागवतस्य तव दर्शनादिना प्रीतश्चास्मीत्यन्वयः ।

**राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना ॥ मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ १७ ॥ राजा तमकृताहारः प्रत्यागमनकाङ्क्षया ॥ चरणावुपसङ्गृह्य प्रसाद्य समभोजयत् ॥ १८ ॥ सोऽशित्वाऽऽदृतमानीतमातिथ्यं सार्वकामिकम् ॥ तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ १९ ॥ प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै ॥ दर्शनस्पर्शनालापैरातिथ्येनाऽऽत्ममेधसा ॥ २० ॥ कर्मावदातमेतत्ते गायन्ति स्वःस्त्रियो मुहुः ॥ कीर्तिं परमपुण्यां च कीर्त्तयिष्यति भूरियम् ॥ २१ ॥ श्रीशुक उवाच ॥ एवं सङ्कीर्त्य राजानं दुर्वासाः परितोषितः ॥ ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ॥ २२ ॥ संवत्सरोऽत्यगात्तावद्यावता नागतो गतः ॥ मुनिस्तद्दर्शनाकाङ्क्षी राजाऽब्भक्षो बभूव ह ॥ २३ ॥**

वै चकारार्थे । एवं वैरिणोऽपि रक्षणे हेतुं वदन् राजानं विशिनष्टि—आत्ममेधसेति । आत्मनि भगवति मेधा बुद्धिर्यस्य तेन त्वयेत्यर्थः ॥ २० ॥ आशिष आह कर्मेति । एतन्मत्प्राणरक्षणादि ते तवावदातं विशुद्धं कर्म स्वः स्वर्गे स्त्रियो मुहुर्गायन्ति गास्यन्ति तथा तव परमपुण्यां कीर्तिमियं भूः भूलोकस्थो जनश्च कीर्तयिष्यति ॥ २१ ॥ राज्ञा परितोषितो दुर्वासा एव राजानं सङ्कीर्त्य प्रशस्य तमामन्त्र्य पृष्ट्वा विहायसा मार्गेण तद्गुणान् वक्तुं ब्रह्मलोकं ययावित्यन्वयः । तत्र यथार्थग्राहिणः सन्तीति सूचयन् लोकं विशिनष्टि— अहैतुकमिति, हैतुकाः शुष्कतर्कनिष्ठास्ते न विद्यन्ते यत्र तम् ॥ २२ ॥ राज्ञो धैर्यं दृढसङ्कल्पं चाह— संवत्सर इति । मुनिः स्नानाद्यर्थं गतः सन् यावता कालेन नागतस्तावत् संवत्सरात्मकः कालोऽत्यगात् व्यतीयाय । राजा तु तस्य दर्शनमाकाङ्क्षमाणस्तावत्कालपर्यन्तं अब्भक्षो बभूव अप एव भक्षयन् स्थितः । हेत्याश्चर्यं सूचयति ॥ २३ ॥

दुर्वाससि गते सति सोऽम्बरीषः द्विजस्योपयोगेन भोजनेन हेतुना तदवशिष्टं अतिपवित्रमन्न आहरत् बुभुजे। ऋषेर्दुर्वाससो व्यसनं सुदर्शनजं सङ्कटं तस्माद्विमोक्षं च तथा स्ववीर्यं धैर्यादिकं च सर्वं परस्य भगवतोऽनुभावं बुद्ध्वा तथैव मेने ॥ २४ ॥ एवमुक्तविधानेका गुणा यस्य स राजाऽम्बरीषः परात्मनि स्मृत्यादौ परमात्मशब्दवाच्ये ब्रह्मणि उपनिषत्सु ब्रह्मशब्दवाच्ये वासुदेवे पुराणादौ भक्तिग्रन्थे वासुदेवशब्दवाच्ये एवं सर्वसिद्धान्तसम्मते भगवति क्रियाकलापैः समर्पितैः स्ववर्णाश्रमधर्मसमूहैः सह श्रवणादिभक्तिमुवाह चकार। यया भक्त्या जातेन वैराग्येन आविरिञ्चान् विरिञ्चपर्यन्तभोगान् निरयांश्चकार नरकतुल्यान् अमन्यत, तेषा भगवत्प्राप्तिप्रतिबन्धकत्वात्। तदुक्तं विष्णुपुराणे— ‘ वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥ तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ’ इति ॥ २५ ॥ अथानन्तरमम्बरीषः स्वतनयेषु राज्यं विसृज्य समर्प्य वासुदेवे भगवति मनो दधत्। यद्यपि ‘ स वै मनः कृष्णपदारविन्दयोः ’ इत्युक्तेर्गार्हस्थ्येऽपि स तदेकमना एव तथापि राज्यस्य तद्व्यवधायकत्वात्तद्व्यवधानं माभूदिति

गते च दुर्वाससि सोऽम्बरीषो द्विजोपयोगातिपवित्रमाहरत् ॥ ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा मेने स्ववीर्यं च परानुभावम् ॥ २४ ॥ एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ॥ क्रियाकलापैः समुवाह भक्तिं ययाऽऽविरिञ्चान्निरयांश्चकार ॥ २५ ॥ अथाम्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः ॥ वनं विवेशाऽऽत्मनि वासुदेवे मनो दधद्ध्वस्तगुणप्रवाहः ॥ २६ ॥ इत्येतत् पुण्यमाख्यानमम्बरीषस्य भूपतेः ॥ सङ्कीर्त्तयन्ननुध्यायन् भक्तो भगवतो भवेत् ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे दुर्वासामोक्षनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥

वनमेव विवेश। तेन धर्मात्मनि गते प्रजानां क्लेशमाशङ्क्याह— समानशीलेष्विति। तथापि दुष्करं राज्यत्याग कथ कृतवास्तत्राह— धीर इति, निर्जितेन्द्रियान्तःकरण इत्यर्थः। तथाऽप्यात्मव्यतिरिक्ते भगवति कथमेवं स्नेह इत्यत आह— आत्मनीति। ततश्च भगवन्मनसस्तस्य किं फलं जातमित्यत आह— ध्वस्तेति। ध्वस्तो गुणप्रवाहः ससारो यस्य तथाभूतो जातः, ससाराद्विमुक्तो जात इत्यर्थः ॥ २६ ॥ एवमुपवर्णिताम्बरीषोपाख्यानस्य श्रवणादिफलमाह— इतीति। इत्येवम्भूतमेतदम्बरीषस्य भूपतेराख्यानं सङ्कीर्तयन्ननुध्यायंश्च पुमान् भगवतो भक्तो भवेत्। यतः पुण्यं भगवद्भक्तिप्रतिबन्धकपापनिवर्तकमित्यर्थः ॥ २७ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ पञ्चमो विवृतोऽध्यायो दुर्वासामोक्षवर्णकः ॥ ३ ॥ ॥

मनुपुत्रस्य चेक्ष्वाकोर्मान्धात्रन्तः प्रसङ्गतः ॥ वंशश्च चरितं षष्ठे सौभरेश्च निरूप्यते ॥ १ ॥ तनयेषु राज्यं विसृज्य वनं विवेशेत्युक्ते के ते तनया इत्यत्राह— विरूप इति । विरूपादयस्त्रयोऽम्बरीषस्य सुता आसन् । तत्र विरूपात् पृषदश्वः पुत्रोऽभूत् । तस्य तु रथीतरः पुत्रोऽभूत् ॥ १ ॥ तस्य रथीतरस्याप्रजस्य सन्तानरहितस्य सतस्तन्तवे सन्तानार्थमर्थितः प्रार्थितः सन् अङ्गिरा ऋषिस्तस्य भार्यायां सुतान् जनयामास । तान् विशिनष्टि— ब्रह्मवर्चस्विन इति । ब्रह्मणो ब्राह्मणस्य वर्चस्तेजः ब्रह्मवर्चसं तदेषामस्तीति तथाभूतान् ॥ २ ॥ ये अङ्गिरसा जनितास्त एते रथीतरस्य क्षेत्रप्रसूतत्वेन रथीतरगोत्राः सन्तोऽप्यङ्गिरसो वीर्यप्रसूतत्वेन पुनराङ्गिरसाः स्मृताः । ते च रथीतराणां इतरभार्यायां जाताना रथीतरपुत्राणां तत्सन्तानप्रसूताना च प्रवराः श्रेष्ठाः । तत्र हेतुमाह— क्षत्रोपेताः क्षत्रत्वयुक्ता द्विजातयो ब्राह्मणा इत्यर्थः ॥ ३ ॥ तदेव मनोर्दशपुत्रेषु पृषध्रः कविश्च विरक्तत्वान्न वशप्रवर्तकौ, करूषादीनां च सतानां वंशास्तारतम्यक्रमेण निरूपिताः, इदानीं त्वतिविस्तृतमिक्ष्वाकोर्वंशमाह— क्षुवतस्त्वित्यादिना यावत्सोमवंशप्रस्तावम् । क्षुवतः छिक्कां कुर्वतो मनोर्वैवस्वतस्य घ्राणादिक्ष्वाकुः सुतो जज्ञे । पूर्वं तु 'श्रद्धाया जनयामास दशपुत्रान्' इति बाहुल्याभिप्रायेणोक्तमतो नानेन विरोधः । तस्येक्ष्वाकोः

**श्रीशुक उवाच ॥ विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः ॥ विरूपात् पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥ १ ॥ रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ॥ अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥ एते क्षेत्रे प्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः ॥ रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥ क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ॥ तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ॥ ४ ॥ तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप ॥ पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥ ५ ॥ स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ॥ मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥**

पुत्रशतं बभूव । तत्र विकुक्षिनिमिदण्डकास्त्रयो ज्येष्ठाः ॥ ४ ॥ तेषां राज्यविभाग सावधानतया शृण्वित्याशयेन सम्बोधयति— नृपेति । तेषा शतपुत्राणां मध्ये पञ्चविंशतिसङ्ख्याकाः आर्यावर्ते आर्यावर्तस्य 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' इत्युक्तदेशविशेषस्य पुरस्तात् पूर्वस्या दिशि समुद्रपर्यन्तं मण्डलविभागेन नृपा अभवन् । तथाऽऽर्यावर्तस्य पश्चात् पाश्चिमायां दिशि समुद्रपर्यन्तं मण्डलविभागेन पञ्चविंशतिर्नृपा अभवन् । तथा त्रयो ज्येष्ठा विकुक्ष्यादयः आर्यावर्तमध्ये नृपा अभवन् । अपरेऽवशिष्टास्तु अन्यतस्ततो दक्षिणोत्तरादिदेशेषु नृपा अभवन् ॥ ५ ॥ विकुक्षिरेव शशाद इति विश्रुत इति वक्ष्यते तत्र हेतुमाह— एकदेति चतुर्भिः । कदाचिदिक्ष्वाकुः अष्टकाश्राद्धे निमित्ते हे विकुक्षे शीघ्रं गच्छ मेध्यं श्राद्धार्हं मांसमानीयतां चिरं विलम्बं माकार्षीरिति सुतमादिशत् आदिष्टवान् । अष्टकास्तु 'सप्तम्यादित्रयं चैव तथा चैव त्रयोदशी ॥ चतस्रस्त्वष्टकाः प्रोक्ताः सर्वपक्षाद्विशेषतः' इत्युक्ता ज्ञेयाः ॥ ६ ॥

ततः स वीरो विकुक्षिस्तथाऽस्तु आनेष्यामीत्युक्त्वा वनं प्रति गत्वा क्रियार्हेणान् श्राद्धयोग्यान् मृगान् हत्वा तन्मध्यतः शश मृगविशेषमादत् अभक्षयत्। ननु श्राद्धार्थं हतं स्वयं कथमभक्षयत्तत्राह— अपस्मृतिरिति, अपगता स्मृतिरेतद्भक्षणमयुक्तमिति ज्ञानं यस्य सः। तत्र हेतुमाह— श्रान्तो बुभुक्षितश्चेति ॥ ७ ॥ ततश्च स शेषं भुक्तावशिष्टं मांसं स्वपित्रे निवेदयामास। ततस्तेनेक्ष्वाकुणा प्रोक्षणाय चोदितः प्रोक्षणेन मासस्य श्राद्धोचित संस्कारं कुर्वीति नियुक्तस्त्विक्ष्वाकोर्गुरुर्वसिष्ठस्तद्दृष्ट्वैतत् अकर्मकं श्राद्धकर्मयोग्यं न भवति यतो दुष्ट अग्रतो भुक्तत्वादुच्छेषणदोषयुक्तमित्याह ॥ ८ ॥ ततो गुरुणाऽभिहितं कथितं पुत्रस्य तत्कर्म ज्ञात्वा नृप इक्ष्वाकुस्त्यक्तो विधिः शास्त्रीयनियमो येन तं सुतं विकुक्षिं रुषा देशान्निस्सारयामास ॥ ९ ॥ स तु इक्ष्वाकुः जापकेन गुरुणा विप्रेण वसिष्ठेन सह संवादं तत्त्वविचारं समाचरत् अकरोत्। ततस्तेन तत्त्वविचारेण स इक्ष्वाकुः योगी ज्ञानयोगनिष्ठः

तथेति स वनं गत्वा मृगान् हत्वा क्रियार्हेणान् ॥ श्रान्तो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥ ७ ॥ शेषं निवेदयामास पित्रे तेन च तद्गुरुः ॥ चोदितः प्रोक्षणायाऽऽह दुष्टमेतदकर्मकम् ॥ ८ ॥ ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ॥ देशान्निस्सारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥ स तु विप्रेण संवादं जापकेन समाचरत् ॥[1] त्यक्त्वा कलेवरं योगी से तेनावाप यत् परम् ॥ १० ॥ पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ॥ शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥ पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ॥ ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥ कृतान्त आसीत् समरो देवानां सह दानवैः ॥ पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥

सन् कलेवर त्यक्त्वा यत्परं ब्रह्म तदवाप ॥ १० ॥ एवं पितारि इक्ष्वाकौ उपरते मृते सति पुनर्विकुक्षिरभ्येत्य गृहमागत्येमां पृथ्वीं शासत् पालयत् यज्ञैर्हरिमीजे आराधितवान्। स च शशादेन कर्मणा शशाद इति विश्रुतः प्रसिद्धो जातः ॥ ११ ॥ तस्य विकुक्षेः सुतः पुरञ्जयः स एव इन्द्रवाहः ककुत्स्थ इति चापीरितः उक्तः। कुत एवमेकस्यैवैतन्नामत्रयं प्राप्तमित्यपेक्षायामाह— कर्मभिरेतानि नामानि जातानीति। कानि तानि कर्माणीत्यपेक्षायामाह— शृण्विति ॥ १२ ॥ एवं प्रतिज्ञाय तानि कर्माण्याह— कृतान्त इति। दानवैः सह देवानां समरः सङ्ग्रामः आसीत्। तस्य घोरत्व सूचयन् विशिनष्टि— कृतान्त इति, कृतं विश्वं अन्तयति विनाशयतीति कृतान्तः प्रलयसदृश इत्यर्थः। तदा दैत्यैः पराजितैर्देवैः स वीरः पुरञ्जयः पार्ष्णिग्राहो वृतः सहायत्वेन प्रार्थितः ॥ १३ ॥

---

१ 'समारचन्' इत्यपि पाठ सुबोधिन्याम्। तत्र जापकेन ब्राह्मणेन सवाद कुर्वन् स राजा योगी अभूत् इति क्रियां अध्याहृत्य तत्र व्याख्यातम्। एवमेव श्रीधरीय पाठ। अत्र 'स.' इत्यस्य न पुनरुक्तिदोषः वाक्यभेदात्।

एवं सहायत्वेन वृतेन तेन यदीन्द्रो मम वाहनं स्यात्तर्हि दैत्यान् हनिष्यामीति— वाहनत्वेन वृतः सन्निन्द्रो लज्जया तदनङ्गीकुर्वन् विष्णोर्वचनात् तस्य वाहनरूपो महावृषो बभूवेत्यन्वयः। तद्वचनादपि कथ तदङ्गीकृतवांस्तत्राह— देवदेवस्येति, स्वपूज्यत्वादिति भावः। तत्र हेतुमाह— प्रभोरिति, स्वपालनादौ समर्थत्वादिति भावः। तत्रापि हेतुमाह—विश्वात्मन इति, सर्वान्तर्यामित्वादित्यर्थः॥ १४ ॥ ततः स पुरञ्जयः युयुत्सु, योद्धुमिच्छुः सन् सन्नद्धः कवचितः दिव्यं धनुर्निशितान् विशिखान् बाणाश्चादाय बन्दिभिः स्तूयमानः विष्णोस्तेजसा आप्यायितः उपबृहितस्त महान्तं वृषमारुह्य तत्रापि तत्ककुदि स्कन्दसमीपमांसपिंडे स्थितस्त्रिदशैर्देवैः सहितः प्रतीच्या दिशि दैत्याना पुरं न्यरुणत् निरुद्धवान् इति द्वयोरन्वयः। ननु विष्णुतेजसा कथमन्योपबृंहण तत्राह—पुरुषस्येति। सर्वान्तर्यामिण इत्यर्थः। तत्रापि हेतुमाह— परात्मन इति ॥ १५ ॥ १६॥ तैर्दैत्यैः सह तस्य पुरञ्जयस्य

वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभो ॥ वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥ स सन्नद्धो धनुर्दिव्यमादाय विशिखाञ्छितान् ॥ स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥ तेजसाऽऽप्यायितो विष्णोः पुरुषस्य परात्मनः ॥ प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् ॥ १६ ॥ तैस्तस्य चाभूत् प्रधनं तुमुलं लोमहर्षणम् ॥ यमाय भल्लैरनयद्दैत्यान्येऽभिययुर्मृधे ॥ १७ ॥ तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् ॥ विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥ जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ॥ प्रत्ययच्छत् स राजर्षिरिति नामभिराहृतः[2] ॥ १९ ॥

तुमुलं अतिसङ्कीर्णं भयङ्करं अतएव रोमहर्षणं श्रोतॄणा द्रष्टॄणा च रोमोत्थापकं प्रधनं युद्धमभूत् तत्र मृधे युद्धे ये तस्याभिमुखं ययुस्तान्दैत्यान् भल्लैर्बाणैर्यमाय अनयत् रणे हताना 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ॥ परिव्राट् योगयुक्तश्च रणे चाभिमुखो हतः' इत्यादिशास्त्रात् यमालयगमनासम्भवेन हतवानित्यत्रैव तात्पर्यम् ॥ १७ ॥ केचित्तु दैत्याः सायकैस्तेन हन्यमानास्तस्येषुपाताभिमुखं रणाजिरं विसृज्य त्यक्त्वा स्वमालयं पातालं प्रति दुद्रुवुरित्यन्वयः। तत्र हेतुत्वेन रणाजिरं विशिनष्टि— युगान्तेति, युगान्ते प्रलये यो विश्वविनाशकोऽग्निस्तमिव उल्बण दुस्सहमित्यर्थः॥ १८ ॥ इत्येवं स राजर्षिर्दैत्यान् जित्वा तेषां सश्रीकं सशोभं पुरं धनं च सर्वं वज्रपाणये इन्द्राय प्रत्ययच्छत् प्रददौ। अतो दैत्यपुरजयात् पुरञ्जयः, इन्द्रमेव वाहनत्वेन परिगृहीतत्वात् इन्द्रवाहः, तस्य ककुदि स्थितत्वात् ककुत्स्थ इति। त्रिभिर्नामभिराहृतो व्यवहृत इत्यर्थः। आहुत इति पाठान्तरम् ॥ १९ ॥

१ 'महात्मन' इति पाठान्तर कुत्रचित्। २ 'आहुत' इति पाठान्नरे ह्रस्वत्वमार्षम्।

पुरञ्जयस्यानेना इति पुत्रोऽभूत् । तस्य सुतः पृथुरभूत् । ततश्च विश्वरन्धि. पुत्रोऽभूत् । तस्य चन्द्रः पुत्रोऽभूत् । तस्य च सुतो युवनाश्वोऽभूत् ॥ २० ॥ यस्य युवनाश्वस्य सुतः शावस्तः । येन शावस्तेन शावस्त्याख्या पुरी निर्मिता । शावस्तस्य सुतो बृहदश्वः । ततश्च कुवलयाश्वकः पुत्रो जातः ॥ २१ ॥ कुवलयाश्वकस्यैव धुन्धुमार इति नामान्तरम् । तत्प्रवृत्तिनिमित्त कर्माह— य इति । यः कुवलयाश्वको बली बलवान् अत उत्तङ्कस्य ऋषेः प्रियार्थं प्रिय कर्तुं स्वसुताना एकविंशत्या सहस्रैः एकविंशतिसहस्रसंख्याकैर्वृतो युद्धे धुन्धुनामासुरं अहनत् ॥ २२ ॥ अतो धुन्धोर्मारणात् स कुवलयाश्व एव धुन्धुमार इति चाख्यातः लोके कथितः । ये चैकविंशतिसहस्रसंख्याकास्तस्य सुतास्ते सर्वे धुधोर्मुखान्निस्सृतेनाग्निना जज्वलुः दग्धा बभूवुः । तेषां मध्ये त्रय एव सुताः

पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ॥ विश्वरन्धिस्ततश्चन्द्रो युवनाश्वश्च तत्सुतः ॥ २० ॥ शावस्तस्तत्सुतो येन शावस्ती निर्ममे पुरी ॥ बृहदश्वस्तु शावस्तिस्ततःकुवलयाश्वकः ॥ २१ ॥ यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली ॥ सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥ २२ ॥ धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ॥ धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २३ ॥ दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ॥ दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥ २४ ॥ बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्यसेनजित् ॥ युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥ २५ ॥ भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ॥ इष्टिं स्म वर्तयाञ्चक्रुरैन्द्रीं ते सुसमाहिताः ॥ २६ ॥

अवशेषिताः ॥ २३ ॥ यथा भरतवंशे त्वमवशिष्ट इति सूचयन् सम्बोधयति—भारतेति । अवशिष्टाना नामान्याह—दृढाश्व. कपिलाश्वः भद्राश्वश्चेतीति । तद्वंशमाह—दृढाश्वस्य पुत्रो हर्यश्वस्तस्य सुतो निकुम्भः स्मृतः कथितः ॥ २४ ॥ निकुम्भस्य सुतो बर्हिणाश्वः। अथ तस्य सुतः कृशाश्वः। अस्य सुतः सेनजित् । तस्य युवनाश्वः सुतोऽभवत् । तस्य च भार्याशतमासीत् तथापि तास्वपत्यं न जात अतः सोऽनपत्यः सन्तानरहितः अतएव निर्विण्णः खिन्नमनास्तेन भार्याशतेन सह वनं ऋषीणामाश्रमं गतः, ते च कृपालवस्तास्मिन् कृपायुक्ताः ऋषयः सुसमाहिता. देवाराधने एकाग्रचित्ताः सन्तोऽस्य पुत्रलाभाय ऐन्द्रीं इन्द्रदेवताकामिष्टिं प्रवर्तयाञ्च क्रुरिति द्वयोरन्वयः । तत्रापि महदाश्चर्यं जातमिति सूचयति— स्मेति ॥ २५ ॥ २६ ॥

१ ‘ शावस्तः ’ इत्यपि पाठान्तरम् । तत्र पुर्यपि शावस्त्याख्या ज्ञेया ।

तदेवाह—राजेति । राजा युवनाश्वस्तर्षितः पिपासुः सन् निशि रात्रौ तद्यज्ञसदनं प्रविष्टः तत्र तान् विप्रान् शयानान् दृष्ट्वा अतस्तान् अपृष्ट्वैव मन्त्रजलं पुंसवनमन्त्राभिमन्त्रितं पत्न्यै देयं जलं स्वयमेव पपौ॥ २७॥ तत उत्थितास्ते विप्रा निरुदकं कलशं निशाम्य दृष्ट्वा हे प्रभो कस्येदं कर्म पुंसवनं पुत्रोत्पत्तिकरं जलं केन पीतमिति राजानं पप्रच्छुः॥ २८॥ अथानन्तर ईश्वरप्रहितेन ईश्वरप्रेरितेन राज्ञैव जलं पीतामिति विदित्वा ते ऋषयः अहो आश्चर्यं देवस्य बलमेव मुख्यं बलं, पुरुषबलं तु न किञ्चिदिति वदन्त ईश्वराय नमश्चक्रुरित्यन्वयः ॥ २९ ॥ ततः काले पुत्रोत्पत्तिसमये उपावृत्ते प्राप्ते सति युवनाश्वस्य दक्षिणं कुक्षिं निर्भिद्य तनयो जजान। पुनश्च तदाश्चर्यं सूचयति— हेति । स च चक्रवर्ती सार्वभौमो राजा बभूवेत्यर्थः ॥ ३० ॥ अथ कुमारो बुभुक्षितो भृशं रोरूयते अतिरोदितीति स्तन्यं दुग्धं कं धास्यति पास्यतीति दुःखितैर्विप्रादिभिरुक्ते सति तस्यामिष्ट्यां आराधित इन्द्रो मां धाता मा पास्यतीत्युक्त्वा हे वत्स मारोदीरिति बालकं प्रति वदन् देशिनीमदात् अमृतस्राविणीं स्वतर्जनीं कुमारस्य मुखे निहितवान् ॥ ३१ ॥ एवमिन्द्रेण माधातेत्युक्तत्वात् स नाम्नापि मान्धातेति प्रसिद्धो जातः। कुक्षिभेदान्मरणे प्राप्तेऽपि तस्य बालस्य पिता युवनाश्वो विप्राणां देवाना च प्रसादतोऽनुग्रहान्न ममार । अथानन्तरं युवनाश्वस्तत्र वन एव निवसस्तपसाऽनुष्ठितेन सिद्धिं मुक्तिमन्वगात् प्राप ॥ ३२ ॥ तत्प्रभावमाह— त्रसद्दस्युरिति षड्भिः। तत्प्रभावातिशयश्रवणाय प्रीत्या सम्बोधयति—अङ्गेति । इन्द्रस्तस्य कुमारस्य त्रसद्दस्युरिति नाम विदधे चकार । तत्र हेतुमाह— यस्मादिति हि यस्मात् यस्मान्मान्धातुः सकाशात् उद्विग्नाः कम्पितहृदयाः दस्यवः परोपद्रवकारिणो दुष्टा रावणादयः त्रसन्ति बिभ्यति तस्मात् तस्य त्रसद्दस्युरिति नाम विदधे इत्यन्वयः॥ ३३ ॥ स च यौवनाश्वः युवनाश्वस्य पुत्रो मान्धाता चक्रवर्ती सार्वभौमः एक एव सप्तद्वीपवतीमवनीं शशास भूमिस्थाः प्रजाः पालयामास । तत्र सकारणं सामर्थ्यमाह—अच्युतस्य भगवतस्तेजसा प्रभुः पालने समर्थः ॥ ३४ ॥

**राजा तद्यज्ञसदनं प्रविष्टे निशि तर्षितः ॥ दृष्ट्वा शयानान् विप्रांस्तान् पपौ मन्त्रजलं स्वयम् ॥ २७ ॥ उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ॥ पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥ राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ॥ ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥ ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ॥ युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥ कं धास्यति कुमारोऽयं स्तन्यं[1] रोरूयते भृशम् ॥ मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥ ३१ ॥ न ममार पिता तस्य विप्रदेवप्रसादतः ॥ युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥ त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ॥ यस्मात्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥ ३३॥ यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ॥ सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥**

१ 'स्तन्ये' इत्यपि पाठस्तत्र 'स्तन्यार्थे' इत्यर्थ ।

भूरि बह्वयः दक्षिणा येषु तैः क्रतुभिर्यज्ञैर्यज्ञं " यज्ञो वै विष्णुः " श्रुतेर्विष्णु ईजे च आराधितवान् । तत्र हेतुमाह— आत्मविदिति । आत्मपरात्मयाथात्म्यज्ञत्वेन सेव्यसेवकत्वं च जानन्नित्यर्थः । तज्ज्ञातं भगवन्तं दर्शयति— सर्वेति सार्धेन। सर्वदेवमयं सर्वदेवशरीरकं- ' देवानारायणाङ्गजाः ' इत्युक्तेः- देवं स्वतेजसा दीप्यमानम् । न केवलं देवमयं किन्तु सर्वविश्वात्मकं तथाप्यतीन्द्रियं इन्द्रियागोचरम्॥ ३५ ॥ सर्वात्मकत्वमेव स्पष्टयति— द्रव्यमिति। द्रव्यं चरुपुरोडाशादिकम् । मन्त्रो द्रव्यदेवताप्रकाशको वेदभागः । विधिश्चोदनात्मको वेदभागः । यज्ञो विष्णुः । यजमानः कर्त्ता चेतनाचेतनसङ्घातः । ऋत्विजो ब्राह्मणाः । धर्मोऽपूर्वाख्यः । देशो भूमिः । कालो वसन्तादिः । किं बहुना सर्वमेवैतद्विश्वं यदात्मकमिति ॥ ३६ ॥ यावत् यत्र सूर्य उदेति यावत् यत्र च प्रतितिष्ठति अस्तमेति तदवधीकृत्य सर्वमेतद्भूमण्डलं यौवनाश्वस्य मान्धातुः क्षेत्रं पालितं स्थानमुच्यते ॥ ३७ ॥ एवं तत्प्रभावमुक्त्वा तद्वंशमाह— शशबिन्दोरिति । स नृपो मान्धाता शशबिन्दोर्दुहितरि बिन्दुमत्याख्यायां स्वभार्यायां पुरुकुत्सं अम्बरीषं मुचुकुन्दं चेति त्रीन् पुत्रान्

ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥ द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ॥ धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥ ३६ ॥ यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ॥ सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥ शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ॥ पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ॥ तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥ ३८ ॥ यमुनाऽन्तर्जले मग्नस्तप्यमानः परं तपः ॥ निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ ३९ ॥ जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ॥ सोऽप्याह गृह्यतां ब्रह्मन् कामं कन्या स्वयंवरे ॥ ४० ॥

अ श्चादुत्पादयामास । मुचुकुन्दं विशिनष्टि— योगिनमिति, भक्तियोगनिष्ठमित्यर्थः । प्रसङ्गात् सौभरेश्चरितमाह— तेषामिति यावत्समाप्ति । तेषां पुरुकुत्सादीनां पञ्चाशत्सङ्ख्याकाः स्वसारो भगिन्यः सौभरिमृषि पतिं वव्रिरे परिजगृहुः ॥ ३८ ॥ ननु महातपस्विनस्तस्य कथं विवाहप्रसङ्गः कथं वा जराजर्जरितं तं ता राजकन्या वव्रिरे इत्यपेक्षायां तत्प्रकारमाह— यमुनान्तर्जले इति पाङ्क्तिः । लोकासक्तिभिया यमुनायामन्तर्जले योगबलेन जलमध्ये मग्नः स्थितः परमुत्कृष्टं तपस्तप्यमानः कुर्वाणः विप्रः सौभरिः कदाचित् मैथुनमेव धर्मो यस्य तस्य मीनराजस्य मत्स्यश्रेष्ठस्य निर्वृतिं मैथुनसुखं वीक्ष्य तस्मिन् जाता
९-६ उत्पन्ना स्पृहा यस्य सः नृपं मान्धातारं प्रत्यागत्यैकां कन्यामयाचत । सोऽपि मान्धाताऽस्य वैरूप्यमालक्ष्य हे ब्रह्मन्निति सम्बोधनेन तपस्विनस्तवैतदनुचितमिति सूचयन् कामं कन्येच्छानुरोधेन स्वयंवरे कन्या गृह्यतां अन्तःपुरं गत्वा तत्र या कन्या स्वयं त्वां वृणीते सा परिगृह्यतामित्याहेत्यन्वयः ॥ ३९ ॥ ४० ॥

स सौभरिः स्त्रीणामप्रियं मां विचिन्त्यानेनाहं प्रत्युदाहृतः स्वयंवरामिषेण प्रत्युक्तः अतस्तथाऽऽत्मानं साधयिष्यामीति व्यवसितो निश्चितवानिति द्वयोरन्वयः। स्त्रीणामप्रियत्वे हेतुमाह— जरठो वृद्धः वलिभिर्युक्तः पलितश्च एजत्कः कम्पमानशिराः अतोऽयं स्त्रीणामसम्मत इत्यप्रियं विचिन्त्य—॥ ४१ ॥ तथेत्येतदेव प्रपञ्चयति— । सुराणां याः स्त्रियस्तासामप्यभीप्सितं अभिलषणीयं मनुजेन्द्राणां राज्ञां यास्त्रियस्तासामभीप्सितामिति तु किं पुनर्वक्तव्यमिति। एवं निश्चित्य तथैव कृतवानिति शेषः । तत्र सामर्थ्यमाह— प्रभुरिति । योगित्वात् सर्वथा सर्वकरणे समर्थ इत्यर्थः ॥ ४२ ॥ ततश्च स मुनिः सौभरिः ऋद्धिमत् सर्वसमृद्धियुक्तं कन्यान्तःपुरं क्षत्त्रा प्रतीहारेण राजाज्ञया प्रवेशितः सन् पञ्चाशता पञ्चाशत्सङ्ख्याकाभिः राजकन्याभिः सर्वाभिरेक एव वरो वृतः वरतयाऽङ्गीकृतः ॥ ४३ ॥ तदा तदर्थे वरनिमित्ते सौहृदं सोदर्यप्रयुक्तस्नेहमपोह्य त्यक्त्वा तासां कन्याना भूयान् महान् कलिः परस्परं कलहोऽभूत्।

स विचिन्त्याप्रियं स्त्रीणां जरठोऽयमसम्मतः ॥ वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥ साधयिष्ये तथाऽऽत्मानं सुरस्त्रीणामभीप्सितम्[1] ॥ किं पुनर्मनुजेन्द्राणामिति व्यवसितः प्रभुः ॥ ४२ ॥ मुनिः प्रवेशितः क्षत्त्रा कन्याऽन्तःपुरमृद्धिमत् ॥ वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥ ४३ ॥ तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ॥ ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥ स बह्वृचस्ताभिरपारणीयतपश्श्रियाऽनर्घ्यपरिच्छदेषु ॥ गृहेषु नानोपवनामलाम्भस्सरस्सु सौगन्धिककाननेषु ॥ ४५ ॥ महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गबन्दिषु ॥ ४६ ॥

तमाह— अयं ममैवानुरूपो योग्यो वरः वो युष्माकं योग्यो नैव भवतीति । तत्र हेतुमाह— तस्मिन्नेवातिसुन्दरे गतमासक्तं चेतो यासा तासामिति ॥ ४४ ॥ तस्य गार्हस्थ्यं वर्णयति—स इति चतुर्भिः । बह्वृच इति मन्त्रसामर्थ्यमुक्तम् । ताभिः स्त्रीभिः सह गृहादिषु रेमे इत्युत्तरेणान्वयः । अपारणीयं दुरन्तं यत्तपस्तस्य श्रिया समृद्ध्या हेतुभूतया अनर्घ्याः अमूल्याः परिच्छदाः उपकरणानि येषु तेषु गृहेषु । तथा नानाविधेषु वनेषु, अमलान्यम्भांसि येषु तथाभूतानि यानि सरांसि तेषु च । पुनः सरांस्येव विशिनष्टि— सौगन्धिकानां कह्लारादीनां काननानि स्तोमा येषु तेषु ॥ ४५ ॥ पुनरपि गृहादीनि विशिनष्टि— स्वलङ्कृताः स्त्रियः पुरुषाश्च येषु तेषु । अनुगायन्तो द्विजाः पक्षिणो भृङ्गाश्च बन्दिनश्च येषु तेषु । स्वयं च महार्हशय्यादिभिरुपलक्षितः सन् ॥ ४६ ॥

१ 'अपीप्सितम्' इति पाठ. ।

ससद्वीपवत्या भूमेः पतिः अतएव सार्वभौमश्रियाऽन्वितो युक्तो मान्धाताऽपि यस्य सौभरेर्गार्हस्थ्यं संवीक्ष्य विस्मितः सन् स्तम्भं गर्वमजहात्, एतदैश्वर्यस्याग्रे मदीयमैश्वर्यं कियदित्यमन्यतेत्यर्थः ॥ ४७ ॥ एवं गृहेष्वभिरतः आसक्तः सौभरिः विविधैः सुखैः स्वस्वविषयान्प्रति धावद्भिरिन्द्रियैर्विषयान् शब्दादीन् सेवमानोऽपि न चातुष्यत् अलमिति नैवामन्यत । तत्र दृष्टान्तमाह— अनलः यथा आज्यस्तोकैर्घृतबिन्दुभिर्न तुष्यति तद्वदिति । विविधैः सुखैरिति पाठे युक्त इति शेषः ॥ ४८ ॥ इदानीं तस्यानुतापपूर्वकं वानप्रस्थाश्रममाह— स इति सप्तभिः । स सौभरिः कदाचिदुपासीनः उपविष्टः आत्मनः स्वमनसो मीनस्य सङ्गात् मैथुनदर्शनात् समुत्थितं विवाहादिद्वारा जातमात्मनोऽपह्नवं लोपं ददर्शेत्यन्वयः । एवमासक्तस्य पुनरेतद्दर्शनं दुर्लभं तत्तस्य कथं जातं तत्राह— बह्वृचानामाचार्य इति ॥ ४९ ॥ दर्शनमेव तद्वाक्येन दर्शयति—अहोइति । आश्चर्यमेतत् हे लोका मे ममेमं विनाशं पश्यत । कोऽसौ विनाश-

यद्गार्हस्थ्यं तु संवीक्ष्य ससद्वीपवती पतिः ॥ विस्मितः स्तम्भमजहात् सार्वभौमश्रियाऽन्वितः ॥ ४७ ॥ एवं
गृहेष्वभिरतो विषयान् विविधैः सुखैः ॥ सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥ स कदा-
चिदुपासीन आत्मापह्नवमात्मनः ॥ ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥ ४९ ॥ अहो इमं पश्यत मे
विनाशं तपस्विनः सच्चरितव्रतस्य ॥ अन्तर्जले वारिचरप्रसङ्गात् प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥ सङ्गं
त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि ॥ एकश्चरन्रहसि चित्तमनन्त ईशे युञ्जीत
तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥ ५१ ॥

स्तत्राह— तपस्विनस्तपोनिष्ठस्य तथा सच्चासौ चरितानि व्रतानि येन स च तथाभूतस्यापि मेऽन्तर्जले वारिचरो मीनस्तत्प्रसङ्गात् तन्मैथुनदर्शनेन विवाहादिप्रपञ्चाद्धेतोर्यच्चिरं धृतं बहुकालाभ्यासेन ध्यानविषयीकृत ब्रह्म तत्प्रच्यावितं विस्मृतामिति ॥ ५० ॥ इदानीं मुमुक्षुकर्तव्य निश्चिनोति— सङ्गमिति । सर्वात्मना निश्चितेन मनसा मुमुक्षुः पुरुषो मिथुनव्रतिनां दाम्पत्यधर्मवतां सङ्गं त्यजेत् । इन्द्रियाणि च बहिः शब्दादिविषयेषु न विसृजेत् न प्रवर्तयेत् । तर्हि किं कुर्यादित्यपेक्षायामाह— एकोऽसहाय एव चरन् रहसि एकान्ते स्थितः सन्ननन्ते देशकालवस्तुपरिच्छेदरहिते ईशे सर्वनियन्तरि भगवति चित्तं नियुञ्जीत भगवन्तं ध्यायेदित्यर्थः । चेचदि प्रसङ्गः कुर्यात् तर्हि तद्व्रतिषु तस्य भगवतो व्रतमुपासनमस्ति येषां तेष्वेव कुर्यात् । तत्र हेतुमाह— साधुष्विति । यतस्ते भगवदुपासनापरत्वेन तदुपदेष्टृत्वेन च स्वपरमोक्षसाधका इत्यर्थः ॥ ५१ ॥

१ 'धावद्भिर्विषयान् सुखैः' इति 'धावद्भिर्विविधैः' इति वैतट्टीकाकारस्य प्रधान. पाठ इति भाति, टीकाया मूलस्थस्यैव 'विविधै सुखै' इत्येतस्य पाठान्तरप्रदानात् । चिन्त्यमेतत् ।

मिथुनव्रतिसङ्गाज्जातं दोषमेवाह— एक इति । प्रथममेकोऽसहायस्तपस्वी तपोनिष्ठ एवाहमासम्, अथानन्तरमम्भासि यो मत्स्यस्य सङ्गः मैथुनादिक्रीडादर्शनप्रसङ्गस्तस्मात् पञ्चाशदासं पञ्चाशद्भार्याभिः विवाहिताभिः सहैकदा सम्बन्धाय तावच्छरीरविशिष्टोऽभवम्, ततश्च तासु प्रत्येकं पुत्रशतरूपेण जातत्वात् पञ्चसहस्रसर्गरूप आसम्, तथा चोभयकृत्यानि स्त्रीपुंसकर्माणि तद्विषयाणां मनोरथानामन्तं न व्रजामि । मनोरथे हेतुमाह—विषय इति । विषय एवार्थभावः पुरुषार्थबुद्धिर्यस्य सः । विवेकिनस्तव कथमेवम्भावस्तत्राह— मायागुणैरिति । रजआदिगुणैर्हृता भ्रंशिता मतिः बुद्धिर्यस्य सः ॥ ५२ ॥ एवमित्यादिशुकोक्तिः।एवं बहुकालं गृहे वसंस्तत्र विरक्तः सन् न्यासमास्थितः काम्यकर्मादित्यागं कृत्वा तपः कर्तुं वनं जगाम।त गच्छन्त तत्पत्न्योऽप्यनुययुः सहैव जग्मुः । यतः पतिदेवताः पतिव्रताः ॥ ५३ ॥ तत्र वने स आत्मवान् आत्मतत्त्वज्ञः सौभरिस्तीक्ष्णं तीव्रं अतएवात्मकर्शन शरीरकार्श्यकरं तपस्तप्त्वा कृत्वा आहवनीयादिभिरग्निभिः सह प्रत्यगात्मानं परमात्मनि युयोज लीनं कृतवान्, मुक्तिमवापेत्यर्थः ॥ ५४ ॥ मुमुक्षुं परीक्षितं तव तु मोक्षे न सन्देह इति सूचयन्सम्बोधयति— महाराजेति।ताः सौभरिपत्न्यः स्वपत्युराध्यात्मिकीं परमात्मप्राप्तिरूपां गतिं मुक्तिं निरीक्ष्य तस्यैव तपउपासनादिप्रभावेण तमेवान्वयुः मुक्ता बभूवुः । तत्र दृष्टान्तमाह— अग्निमिति। शान्तं निरिन्धनमग्निं यथाऽर्चिषो ज्वाला अनुलीना भवन्ति तद्वदित्यर्थः ॥ ५५ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ षष्ठोऽध्यायो गतो वृत्तिमिक्ष्वाकुवंशवर्णकः ॥ ३ ॥ ॥ छ ॥ ॥

एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात् पञ्चाशदा[1]समुत पञ्चसहस्रसर्गः ॥ नान्तं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥ एवं वसन् गृहे कालं विरक्तो न्यासमास्थितः ॥ वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥ तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्शनमात्मवान् ॥ सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥ ताः स्वपत्युर्महाराज निरीक्ष्याऽऽध्यात्मिकीं गतिम् ॥ अन्वयु[3]स्तत्प्रभावेण अग्निं शान्तमिवार्चिषः ॥ ५५ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे इक्ष्वाकुवंशनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥

१ 'पञ्चाशतास' इति श्रीधरीय पाठान्तर, तत्र पञ्चाशता भार्याभि सम्बन्धाय तावच्छरीरविशिष्टोऽहमासमित्यर्थ । २ मूर्धन्यमध्योऽप्यन्यत्र पाठ । ३ 'अन्वीयु' इति पाठ साधुरेव ।

मान्धातुरन्वये जातो हरिश्चन्द्रो महायशाः ॥ नरमेधादि तद्वृत्तं सप्तमे विनिरूप्यते ॥ १ ॥ ॥ एवं प्रासङ्गिकं सौभरेश्चरितं निरूप्याथ प्रस्तुत मान्धातृवंशपरम्परा तद्वृत्तान्तमाह— मान्धातुरिति । मान्धातुः पुत्राणां पुरुकुत्सादीना मध्ये प्रवरः श्रेष्ठोऽम्बरीष इति प्रकीर्तितः तस्य च सुतो यौवनाश्वोऽभूदित्यन्वयः । अम्बरीषस्य मध्यमपुत्रत्वात्कथं प्रवरत्वं तत्राह— पितामहेन युवनाश्वेन तस्य पुत्रतया वृतः स्वीकृत इति । तस्य यौवनाश्वस्य हारितः पुत्रोऽभूत् । इमेऽम्बरीषयौवनाश्वहारिताः मान्धातृप्रवराः मान्धातृवंशस्यावान्तरोत्कर्षप्रवर्तका इत्यर्थः ॥ १ ॥ एवं मान्धातृपुत्रस्याम्बरीषस्य वंशमुक्त्वाऽथ पुरुकुत्सस्य वंशं वक्ष्यंस्तावत्तस्य विवाहादिकमाह— नर्मदेति । भ्रातृभिरुरगैर्नागैर्या नर्मदाख्या नागकन्या पुरुकुत्साय दत्ता तया स रसातलं नागालयं नीतः । किमर्थं तस्य तया रसातलनयनं तत्राह— भुजगेन्द्रप्रयुक्तयेति । स्वशत्रुगन्धर्ववधे तं समर्थं ज्ञात्वा तद्वधाय तन्नयनार्थं भुजगेन्द्रैर्भ्रातृभिः प्रयुक्तया प्रेरितयेत्यर्थः ॥ २ ॥ अतस्तत्र रसातले वध्यान् नागारित्वेन दुष्टत्वेन च वधार्हान् गन्धर्वान् अवधीत् । तत्र सामर्थ्ये हेतुमाह—

**श्रीशुक उवाच ॥ मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ॥ पितामहेन प्रवृतो[1] यौवनाश्वश्च तत्सुतः ॥ हारीतस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे ॥ १ ॥ नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ॥ तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥ २ ॥ गन्धर्वानवधीत्तत्र वध्यान् वै विष्णुशक्तिधृक् ॥ नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥ ३ ॥ त्रसद्दस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ त्रिबन्धनः[2] ॥ ४ ॥ तस्य सत्यव्रतः पुत्रः त्रिशङ्कुरिति विश्रुतः ॥ प्राप्तश्चाण्डालतां शापाद्गुरोः कौशिकतेजसा ॥ ५ ॥**

विष्णुशक्तिधृगिति । भगवदाहितबल इत्यर्थः । ' स वै बलं बलिनां चापरेषा ' ' बलं बलवतामस्मि ' इत्यादिशास्त्रप्रामाण्यादत्र सन्देहो न कर्तव्य इति सूचयति—वा इति । ततश्च नागाल्लब्धो वरो येन तादृशो जातः । तं वर दर्शयति— सर्पादिति । इदं नर्मदया रसातलनयनाद्याख्यानं स्मरतां सर्पादभयमित्यर्थः । गन्धर्वविजयानन्तरं वरं वृणिवति नागैरुक्त एतद्वृत्तान्तं स्मरतां सर्पाद्भयं माभूदित्येवंविधं वरं वृण्वानस्तं लब्धवानिति भावः ॥ ३ ॥ पुरुकुत्सस्यापत्यं त्रसद्दस्युरभूत् । यस्त्रसद्दस्युरनरण्यस्य देहकृत् पिता, त्रसद्दस्योः पुत्रः अनरण्योऽभूदित्यर्थः । तस्य सुतो हर्यश्वः । तस्मात् अरुणो जज्ञे । अथ तस्मादरुणात् त्रिबन्धनः ॥ ४ ॥ तस्य पुत्रः सत्यव्रतः स एव त्रिशङ्कुरिति विश्रुतः प्रसिद्धः, त्रयः शङ्कव इव दुःखहेतवो दोषा यस्येति त्रिशङ्कुरिति नामान्तरनिरुक्तिर्बोध्या । ते च दोषा हरिवंशे उक्ताः— ' पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ॥ अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ' इति । स च गुरोर्वसिष्ठस्य शापाच्चाण्डालतां प्राप्तः पुनश्च कौशिकस्य विश्वामित्रस्य तेजसा तपःप्रभावेण ॥ ५ ॥

१ 'प्रवृत्तः ' इति सुबोधिनीपाठ. । तत्र पितामहेन युवनाश्वेन यौवनाश्व इति नाम्ना प्रसिद्ध कृत इत्यर्थ. । २ ' त्रिबन्धन ' इति पाठ सुबोधिनीकारसम्मत ।

सशरीर एव स्वर्गं गतः सन्नद्यापि दिवि नक्षत्रमण्डले नक्षत्ररूपेण दृश्यते इति द्वयोरन्वयः। ननु कथं चाण्डालस्य स्वर्गे तच्छरीरेणावस्थानमित्यत आह— पातित इति। कौशिकतेजसा स्वर्गं गतस्ततश्च तत्रत्यैर्देवैरवाक्शिराः पातितः पात्यमानः, पुनस्तेन विश्वामित्रेणैव बलात् स्तम्भितः स्वतेजसा स्वर्गान्तरनिर्माणे प्रवृत्ते भीतैर्देवैः पुनस्तत्रैव स्थापित इत्यर्थः ॥ ६ ॥ त्रैशङ्कवः त्रिशङ्कुपुत्रो हरिश्चन्द्रोऽभूत्। तद्वृत्तान्तमाह— यन्निमित्तमिति। यो हरिश्चन्द्रो निमित्तं कारणं यस्य तद्बहुवार्षिकं बहुवर्षपर्यन्तं पक्षिणोः पक्षित्वप्राप्तयोर्विश्वामित्रवसिष्ठयोर्युद्धमभूदित्यन्वयः। विश्वामित्रो राजसूयदक्षिणाछलेन हरिश्चन्द्रस्य सर्वस्वमपहृतवान्। तच्छ्रुत्वा च कुपितो हरिश्चन्द्रगुरुर्वसिष्ठो विश्वामित्रं त्वमाडिर्भवेति शशाप - आडिश्च बलाका - विश्वामित्रोऽपि वसिष्ठं त्वं बको भवेति शशाप, तयोश्च युद्धमभूदिति पुराणान्तरे प्रसिद्धम् ॥ ७ ॥ हरिश्चन्द्रस्यैव चारितान्तरमाह— स इत्यादिना यावदध्यायसमाप्ति। हरिश्चन्द्रोऽनपत्यः पुत्ररहितः अतएव विषण्णः सुदुःखितः आत्मा मनो यस्य स नारदस्योपदेशात् वरुणं शरणं गतः। तत्प्रकार तद्वचनेनैव दर्शयति—

सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ॥ ६ ॥ त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ॥ यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ॥ सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ॥ वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥ ८ ॥ यदि वीरो महाराज तेनैव त्वां यजे इति ॥ तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥ ९ ॥ जातः सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ॥ यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥ १० ॥ निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ॥ दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥११॥

पुत्र इत्यादिना। वरुणमुपगम्य हे प्रभो याचितदाने समर्थ मे मम पुत्रो यथा जायता तथाऽनुगृहाण ॥ ८॥ तेन मम किं स्यादित्यतआह— यदिति। पूर्णस्य तव प्रत्युपकारेऽहं न समर्थ इति सूचयन् सम्बोधयति— महाराजेति। तथापि यदि मे मम वीरः पुत्रो जायेत तर्हि तेनैव पुरुषपशुना त्वां यजे यजामीति भाषाबन्धेन शरणङ्गत इत्यर्थः। ततस्तथास्त्वित्युक्तवता वरुणेन निमित्तेनास्य हरिश्चन्द्रस्य रोहिताख्यः पुत्रो जातः। तुशब्दो निमित्तान्तरव्यावृत्त्यर्थः ॥९ ॥ तदा हि वरुणस्तव पुत्रो जातो हे अङ्ग अनेन मा यजस्वेत्यब्रवीत। तदा स हरिश्चन्द्रोऽपि यदा पशुः पुत्रो निर्दशो निर्गतदशादिनः स्यात अथ तदनन्तरं मेध्यः पवित्रो यागयोग्यो भवेदित्यब्रवीत ॥ १० ॥ स तद्वचनमङ्गीकृत्य गतो वरुणो निर्दशे दशस्वहस्सु व्यतीतेषु सत्सु पुनरागत्य यजस्वेत्याह। तदा स हरिश्चन्द्रो यदा पुरुषपशोर्दन्ता जायेरन्नथ तदा मेध्यो भवेदित्यब्रवीत् ॥ ११ ॥

ततश्च दन्तेषु जातेषु पुनः स वरुणः आगत्य दन्ता जाता अतो यजस्वेति राजान प्रत्याह अथानन्तरं स हरिश्चन्द्रो यदाऽस्य पुरुषपशोः प्रथमजाता दन्ताः पन्तत्यथं तदाऽयं मेध्यो भवेदित्यब्रवीत् ॥ १२ ॥ दन्तेषु पतितेषु सत्सु पुनरागत्य वरुणः पुरुषपशोर्दन्ता निपतिता अतो मां यजस्वेत्याह, तदा स हरिश्चन्द्रो यदा पशोः पुनर्दन्ता जायन्ते अथ तदा पशुः शुचिर्भवतीत्यब्रवीत्॥१३॥पुनर्दन्तेषु जातेषु स वरुण आगत्य राजानं प्रति पुनर्दन्ता जाता अतो मां यजस्वेत्याह, तदा पुनः स हरिश्चन्द्रो हे राजन् वरुण राजन्यः पुरुषपशुर्यदा सान्नाहिकः कवचबन्धनार्हः युद्धयोग्यो भवेत्तदा शुचिः यागार्हो भवेदित्यब्रवीत् ॥ १४ ॥ पुत्रे अनुरागः शोभनाध्यासो यस्य तेन अतएव तस्मिन् यः स्नेहस्तेन यन्त्रितं वशीकृतं चेतो यस्य तेन तं त निर्दशादिरूपं कालं वञ्चयता प्रतिक्षिपता हरिश्चन्द्रेणेत्येवमुक्तः प्रार्थितो वरुणस्तं तं कालं प्रत्यैक्षत ॥ १५ ॥ रोहितोऽपि प्राप्तावबोधावस्थः पितुश्चिकीर्षितं कर्तुमिष्टं तत् आत्मना पशुना वरुणयजनरूपं

जाता दन्ता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ॥ १२ ॥ पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ॥ यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ॥ १३ ॥ पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ सान्नाहिको यदा राजन्राजन्योऽथ पशुः शुचिः ॥ १४ ॥ इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ॥ कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥ १५ ॥ रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ॥ प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ १६ ॥ पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ॥ रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ १७ ॥ भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत् समाम् ॥ १८ ॥ एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ॥ अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह वृत्रहा ॥ १९ ॥

कर्माभिज्ञाय प्राणप्रेप्सुर्जिजीविषुः धनुः पाणौ यस्य तथाभूतः सन् अरण्यं प्रत्यपद्यत जगाम ॥ १६ ॥ तस्मिन् वनंगते सति यागाशाया विच्छेदात् कुपितो वरुणो हरिश्चन्द्रं जग्रास। स च ग्रासस्तस्योदरे जलोदराख्यरोगविशेषोत्पादनं। तथाभूतं पितरं श्रुत्वा रोहितो ग्राममेयाय आगन्तुमुद्यतो जातः तदा तमिन्द्रः प्रत्यषेधत गृहं मागाः कथंचन गमने प्राणहानिरवश्य स्यादित्युक्तवानित्यर्थः ॥ १७ ॥ तर्हि मया किं कर्तव्यमित्यपेक्षायां तीर्थानां क्षेत्राणां च निषेवणैः पुण्यं पुण्यजनकं भूमेः पर्यटनं शक्रो रोहितायादिशत्। स रोहितोऽपि तीर्थादिपर्यटनं कुर्वन् समामेकवर्षं अरण्येऽवसत् ॥ १८ ॥ एवमेव द्वितीयादिवर्षेष्वपि स्थविरो वृद्धो विप्रो भूत्वा वृत्रहा इन्द्रः अभ्येत्याभ्येत्य आगत्यागत्य ग्रामं मागास्तीर्थादिपर्यटनं कुर्विति रोहितायं आहोक्तवान् ॥ १९ ॥

ततश्च पितृदयापरवशो रोहितः षष्ठं संवत्सरं वने चरित्वा पुरमुपव्रजन्नागच्छन् भार्गववंशजादजीगर्तात् तस्य मध्यमं सुतं शुनश्शेपाख्यं अक्रीणात् ॥ २० ॥ तं पित्रे प्रदाय स्वप्रतिनिधितया यागार्थं समर्प्य समवन्दत प्रणनाम। ततश्च हरिश्चन्द्रः पुरुषमेधेन यज्ञेन वरुणादीन् देवानयजत। ततश्च मुक्तं वरुणेन त्यक्तमुदरं यस्य सः महत् यशो यस्य सः महत्तु कथा यस्य तथा बभूव ॥ २१ ॥ तस्मिन् पुरुषमेधे विश्वामित्रो होता अभवत्। आत्मवान आत्मतत्त्वज्ञो जमदग्निश्चाध्वर्युरभूत्। वसिष्ठो ब्रह्माऽभूत्। अयास्याख्यो मुनिः सामग उद्गाताऽभूत् ॥ २२ ॥ एवं पुरुषमेधेन सन्तुष्टः इन्द्रस्तस्मै हरिश्चन्द्राय शातकौम्भमयं स्वर्णविरचित रथं ददौ। ब्राह्मणपुत्रशुनश्शेपस्यालम्भनं कथं देवर्षिक्षत्रियाणामभिमतं जात तत्तु बीभत्स प्रतिभातीत्याशयवन्त राजानमालक्ष्य

षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ॥ उपव्रजन्नजीगर्त्तादक्रीणान्मध्यमं सुतम् ॥ २० ॥ शुनश्शेपं पशुं पित्रे प्रदाय समवन्दत ॥ ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ॥ मुक्तोदरोऽयजद्देवान् वरुणादीन् महत्कथः ॥ २१ ॥ विश्वामित्रोऽभवत्तस्मिन् होता चाध्वर्युरात्मवान् ॥ जमदग्निरभूद्ब्रह्मा वसिष्ठोऽयास्यसामगः ॥ २२ ॥ तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम् ॥ शुनश्शेपस्य माहात्म्यमुपरिष्टात् प्रवक्ष्यते ॥ २३ ॥ सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥ विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ॥ २४ ॥ मनः पृथिव्यां तामद्भिस्तेजसाऽपोऽनिलेन तत् ॥ खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि ॥ २५ ॥

शुनश्शेपो नालभितः किन्तु जीवन्नेव विमुक्तस्तस्य माहात्म्यमुपरिष्टात् विश्वामित्रसुताख्यानप्रसङ्गे प्रवक्ष्यते ॥ २३ ॥ हृतसर्वस्वस्यापि सभार्यस्य भूपतेर्हरिश्चन्द्रस्य सत्यं सत्यप्रतिज्ञत्वमेव सारो बलं यस्यास्तां धृतिं दृष्ट्वा विश्वामित्रो भृशमतिशयेन प्रीतस्तस्मै अविहतां परमार्थविषया गतिं ज्ञानं ददौ ॥ २४ ॥ तामेव गतिं स्पष्टयति— मन इति सार्द्धाभ्याम्। 'मनोमूलो हि संसारः, मनश्चान्नमयं' "अन्नमयं हि सौम्य मनः" इति श्रुतेः, अतोऽन्नशब्दवाच्याया पृथिव्या मनो धारयन् एकीकुर्वन्, ता पृथिवीं अद्भिस्तत्कारणभूताभिः सहैकीकुर्वन्, ता अपस्तेजसैकीकुर्वन्, तत्तेजः अनिलेनैकीकुर्वन्, तं वायुं खे आकाशे धारयन्, तच्च ख भूतादौ तामसाहङ्कारे धारयन् तमहङ्कार महात्मनि महत्तत्त्वे धारयन् ॥ २५ ॥

१ अयास्यश्चासौ सामगश्चेति समास । २ षोडशाध्याये त्रिंशच्छ्लोकादारभ्य यावदध्यायसमाप्ति ।

तस्मिन् महत्सत्त्वात्मके चित्ते ज्ञानकलां चिदात्मकभगवदंशमात्मानं ध्यात्वा तथा प्रकृतिकार्यविविक्तात्मध्यानरूपया आत्मावरकमज्ञानं विनिर्दहन् निरवशेषं निरसन् तामपि ध्यानात्मिका वृत्तिं हित्वा अतएव मुक्तबन्धनः देहेन्द्रियादौ आत्माध्यासरहितः अनिर्देश्येन गुणजात्यादिविशिष्टतया निर्देष्टुमनर्हेण - तत्र हेतुः - अप्रतर्क्येण मनसा तर्कागोचरेण निर्वाणसुखसंविदा सदानन्दचिदात्मना स्वेन भावेन परमार्थनिजस्वरूपेण तस्थौ जीवन्मुक्तो बभूवेत्यन्वयः ॥ २६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता-नवमे तत्र सूर्यवंशनिरूपणे ॥ सप्तमोऽगाद्धरिश्चन्द्रचरितस्य निरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ रोहितस्यान्वये जातः सगरो नृपतिर्महान् ॥ अष्टमे चरितं तस्य यज्ञादिविनिरूप्यते ॥ १ ॥ ॥ रोहितस्य सुतो हरितः । तस्मात्

तास्मिन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् ॥ हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ॥ अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे हरिश्चन्द्रचरितनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ हरितो रोहितसुतश्चम्पस्तस्माद्विनिर्मिता ॥ चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥ भरुकस्तत्सुतस्तस्माद्वृकस्तस्यापि बाहुकः ॥ सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत् ॥ २ ॥ वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती ॥ और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ॥ ३ ॥ आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह ॥ सह तेनैव सञ्जातः सगराख्यो महायशाः ॥ ४ ॥

चम्पो जातः-येन चम्पेनेति शेषः - चम्पापुरी विनिर्मिता । अतः चम्पात् सुदेवो जातः, यस्य च सुदेवस्यात्मजः पुत्रो विजयो जातः ॥ १ ॥ तस्य सुतो भरुकः, तस्मात् वृकः, तस्यापि बाहुकः पुत्रो जातः । तद्वृत्तान्तमाह— स बाहुको राजा आरिभिः शत्रुभिर्हृता भूर्यस्य तथाभूतः सन् सभार्यो वनमाविशत् ॥ २ ॥ तत्र वृद्धं पञ्चतां मरणं प्राप्तं तं बाहुकं तत्पत्नी अनुमरिष्यती अनु मरणं कर्तुमुद्यता सती आत्मानं तद्देहं प्रजावन्तं सगर्भं जानता और्वेण ऋषिणा मरणान्निवारिता ॥ ३ ॥ अतस्तामन्तर्वत्नीमाज्ञाय तत्सपत्नीभिरमर्षेणान्धसा अन्नेन सह अस्यै गरो विषं दत्तः । ततश्च स गर्भस्तेन गरेण सहैव सञ्जातः, अतः स महायशाः सगराख्यो नृप आसीत् ॥ ४ ॥

स च सगरश्चक्रवर्ती सप्तद्वीपाधिपतिरासीत्। यस्य सुतैः सागरः समुद्रः कृतः खनितः। तत्प्रभावातिशयमाह— य इति। यः सगरस्तालजङ्घादि-सञ्ज्ञानक्षत्रियान् यवनान् म्लेच्छान् गुरोः और्वस्य वाक्येन आज्ञया अवधीत्। कांश्चिद्दस्त्वैव विकृतवेषिणो विरूपिणश्चक्रे। नावधीदिति पाठे तु स्वयं हन्तुं प्रवृत्तोऽपि गुरुवाक्येन नावधीत्, किन्तु विकृतवेषिणश्चक्रे ॥५॥ विकृतत्वमेव स्पष्टयति— मुण्डानिति। कांश्चित् मुण्डितान् कांश्चित् श्मश्रुधरान् कांश्चिन्मुक्तकेशान् कांश्चिदर्द्धमुण्डितान् कांश्चिन्न विद्यतेऽन्तर्वासोऽन्तरीयं वस्त्रं येषां तान् तथा न विद्यते बहिर्वासो बहिःपरिधानीयं वासो येषां तथाभूतांश्चक्रे इति पूर्वेणैवान्वयः ॥ ६ ॥ स च सगरः और्वेणोपदिष्टः यो योगः प्रकारस्तेनाश्वमेधैर्हरिं भगवन्तमयजत आराधयामासेत्यन्वयः। तदा-राधनेनैव सर्वाराधनमित्याशयेन तं विशिनष्टि— सर्ववेदसुरात्मकमिति, सर्वे ये वेदाः सुराश्च तदात्मकमित्यर्थः। एतदेव परमार्थतः स्वाराधनमपीत्याशये-

सगरश्चक्रवर्त्यासीत् सागरो यत्सुतैः कृतः ॥ यस्तालजघान् यवनान् शकान् हैहयबर्बरान् ॥ अवधीद्गुरुवाक्येन चक्रे विकृत-
वेषिणः ॥ ५ ॥ मुण्डान् श्मश्रुधरान् कांश्चिन्मुक्तकेशार्द्धमुण्डितान् ॥ अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् ॥ ६ ॥
सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ॥ ७ ॥ तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं
पुरन्दरः ॥ ८ ॥ सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ॥ हयमन्वेषमाणास्ते समन्तान्न्यखनन्महीम् ॥ ९ ॥ प्रागु-
दीच्यां दिशि हयं ददृशुः कपिलान्तिके ॥ एष वाजिहरश्चोर आस्ते मीलितलोचनः ॥ १० ॥ हन्यतां हन्यतां पाप
इति षष्टिसहस्रिणः ॥ उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥

नाह— आत्मानमिति। तदाराधनेनैव सर्वदुःखहानिः परमानन्दप्राप्तिश्च नान्यथेत्याशयेनाह— ईश्वरमिति ॥ ७ ॥ तस्य सगरस्य यज्ञे उत्सृष्टं मुक्तं पशुमश्वं पुरन्दराख्य इन्द्रो जहार हृतवान् ॥ ८ ॥ सगरस्य द्वे भार्ये सुमतिः केशिनी च, तत्र सुमत्याः पुत्राणां षष्टिसहस्रसङ्ख्याकानां प्रभावं मृत्युं चाह— सुमत्या इति षड्भिः। ये सुमत्यास्तनयास्ते दृप्ताः बलेन गर्विताः पितुरादेशकारिणस्तदाज्ञया हयमन्वेषमाणाः समन्ततो महीं न्यखनन् ॥ ९ ॥ एवं महीं खनन्तः प्रागुदीच्यां ऐशान्यां दिशि रसातलस्थस्य कपिलस्यान्तिके - इन्द्रेण स्थापितमिति शेषः - हयमश्वं ते ददृशुः। ततश्चैष एव वाजिहरः अश्वापहर्ता चौरः सन्निमीलिते लोचने येन तथाभूत आस्ते ॥ १० ॥ अतोऽयं पापात्मा हन्यतामिति वदन्तः षष्टिसहस्रिणः षष्टिसहस्रसङ्ख्याकाः उद्यतानि आयुधानि यैस्तथाभूताः सन्तोऽभिययुः हन्तुं तत्सम्मुखं जग्मुः। तदा च मुनिः कपिल उन्मिमेष लोचनोन्मीलनं चकार ॥ ११ ॥

ते च तावन्मुनिलोचनोन्मीलनमात्रेण स्वशरीरस्थेनैवाग्निना तत्क्षणादेव भस्मसादभवन्। ननु स्वशरीराग्निस्तु सदैव तत्रास्ति तेन तदा कथं भस्मीभावस्ततः पूर्वं स कुतो न तत्राह— महतः कपिलस्य यो व्यतिक्रमः अपराधस्तेन हताः सदपराधेनैव सोऽग्निः प्रज्वलितो जात इत्याशयः। तर्हि कथं तदपराधे प्रवृत्ता इत्यत आह— महेन्द्रेति। महेन्द्रेण हृतं स्वमायया मोहितं चेतो येषां ते तथा ॥ १२ ॥ केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयन्ति तन्निराकरोति— नेति द्वाभ्याम्। नृपेन्द्रस्य सगरस्य पुत्राः मुनेः कपिलस्य कोपाग्निना भर्जिता दग्धा इति न साधुवादः,अपितु स्वापराधान्नष्टा इत्येव साधुवादः। कुतस्तत्राह—जगतः पवित्रं दर्शनस्पर्शनादिना विशुद्धिकर आत्मा देहो यस्य तस्मिन्। तत्र हेतुमाह—सत्त्वधामनीति। शुद्धसत्त्वमूर्तौ श्रीकपिले रोषात्मकं तमोगुणोऽज्ञानं वा कथं विभाव्यते असम्भाव्यते। असम्भावनायां दृष्टान्तमाह— खे रजोभुव इति। निर्लेपत्वाद्भूरजस्सम्बन्धरहितमपि खं यथा भ्रान्त्या रजस्वलमिति प्रतीयते तथा स्वापराधान्मृतानामपि मुनिकोपान्मृता इति प्रतीतिर्भ्रान्तिरेवेत्यर्थः ॥ १३ ॥ किञ्च यस्येति। येन श्रीकपिलेनेह

स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ॥ महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥ न साधुवादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्त्वधामनि ॥ कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजोभुवः ॥ १३ ॥ यस्येरिता साङ्ख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ॥ भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥ योऽसमञ्जस इत्युक्तः स केशिन्यां नृपात्मजः ॥ तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ॥ असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ॥ जातिस्मरः पुरा सङ्गाद्योगी योगाद्विचालितः ॥ १६ ॥

लोके साङ्ख्यात्मिका दृढा यदाश्रितानां न पुनः संसारार्णवे निमज्जनं तथाभूता नौरीरिता प्रवर्तिता, यया नावा मुमुक्षुर्दुस्तरमपि भवार्णवं संसारसागरं तरते इत्यन्वयः। दुरत्ययत्वे हेतुमाह— मृत्युपथमिति। मृत्योर्मार्गभूतमित्यर्थः। तस्य विपश्चितः सर्वज्ञस्य। तत्र हेतुः— परात्मभूतस्य पृथङ्मतिः शत्रुमित्रादिभेदबुद्धिः कथं सम्भाव्यते इत्यनुषङ्गः ॥ १४ ॥ तदेवं सुमत्याः पुत्रेषु मृतेषु केशिन्याः पौत्रेणाश्वः समानीतः पितॄणामुद्धारप्रयत्नश्च कृत इति वक्तुं तावदसमञ्जसचरितमाह— य इति चतुर्भिः। योऽसमञ्जस इत्युक्तः लोके प्रसिद्धः सोऽपि केशिन्या जातो नृपस्य सगरस्यात्मजः पुत्र एव। तस्य पुत्रोंऽशुमानिति नाम्ना प्रसिद्धः। पितामहस्य सगरस्य हिते रतः ॥ १५ ॥ एवमंशुमतः पितामहहितत्वकथनेनासमञ्जसस्य तत्प्रतिकूलत्वेऽप्युक्तमित्यनेन केवलमन्यैरेव तथा कथितो वस्तुतस्तु स समञ्जस एवेति च सूचितम्। तदेतद्द्वयं दर्शयस्तद्वृत्तान्तमाह—असमञ्जस इति। असमञ्जसः

पुरा पूर्वजन्मनि योगी सन् सङ्गादेर्योगाद्विचालितः भ्रष्टः । अत इदानीं पौर्वदेहिकयोगप्रभावेण जातिस्मरः पूर्वजन्मवृत्तस्मृतिमान् अतः पुनः सङ्गपरिहारायात्मानमसमञ्जसं प्रतिकूलं यथा तथा लोके दर्शयन् दर्शयितुं गर्हितं निन्दितमतएव ज्ञातीनामप्रियं कर्माऽऽचरन् कुर्वन् जनमुद्वेजयन् भीषयन् क्रीडतो बालानादाय सरय्वां नद्यां प्रास्यत् प्राक्षिपदिति द्वयोरन्वयः ॥ १६ ॥ १७ ॥ यत एवंविधं वृत्तं कर्म यस्य अतः स पुत्रस्नेहमपोह्य त्यक्त्वा पित्रा परित्यक्तः निर्यापित एव । वै अवधारणे । स च स्वयोगप्रभावेण तान् सरय्वां प्रक्षिप्तान् बालान् पुनर्दर्शयित्वा ततः पुरात् वनं ययौ ॥ १८ ॥ तदा पुनरागतान् बालान् दृष्ट्वा अयोध्यावासिनः सर्वे जना विसिस्मिरे विस्मयमाश्चर्यं प्राप्ताः । राजतोऽपि योगिनः प्रभावातिशय सूचयन् सम्बोधयति— राजन्निति । राजा सगरश्चापि तान् बालानागतान् श्रुत्वा अन्वतप्यत अहोऽवज्ञातेन मया ईदृक्प्रभावः पुत्रो वृथैव निर्वासित इत्यनुतापं कृतवान् ॥ १९ ॥ अथांशुमतः कथामाह—अंशुमानित्यादिना । राज्ञा सगरेण चोदित आदिष्टोऽशुमान् तुरङ्गान्वेषणार्थं पितृव्यखातमनु यः पन्थास्तं ययौ ।

आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ॥ सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयन् जनम् ॥ १७ ॥ एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ॥ योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥ १८ ॥ अयोध्यावासिनः सर्वे बालकान् पुनरागतान् ॥ दृष्ट्वा विसिस्मिरे राजन् राजा चाप्यन्वतप्यत ॥ १९ ॥ अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ ॥ पितृव्यखातानुपथं भस्मान्ति ददृशे हयम् ॥ २० ॥ तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ॥ अस्तौत् समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥ अंशुमानुवाच ॥ न पश्यति त्वां परमात्मनो जनो न बुद्ध्यतेऽद्यापि समाधियुक्तिभिः ॥ कुतोऽपरे तस्य मनःशरीरधीविसर्गसृष्टा वयमप्रकाशाः २२ ॥

ततश्च भस्मान्ति भस्मसमीपे हयं ददृशे ॥ २० ॥ तत्रैवासीनं कपिलाख्यमधोक्षजं भगवदवतारभूतं मुनिं वीक्ष्य प्रथमं प्रणतस्ततः प्राञ्जलिः संयोजिताञ्जलिः समाहितमनाः एकाग्रमनाश्च भूत्वा अस्तौत् । यतो महान् विवेकवान् । न तु पितृव्यवदेहाभिमानवानित्याशयः ॥ २१ ॥ तत्कृता स्तुतिमेवाह— नेति षड्भिः । तत्र त्वत्प्रभावाज्ञानादवजानन्तो वयं त्वयाऽनुकम्प्या एवेत्याशयेन तावत्तस्य दुर्ज्ञेयत्वमाह— नेति । आत्मनः स्वस्मात् परं परमेश्वरं त्वामद्याप्यजनोऽजो ब्रह्मापि समाधिनाऽप्यपरोक्षं न पश्यति । तथा युक्तिभिः शास्त्रोक्तैर्विविधतर्कैः परोक्षमपि यथावन्न बुद्ध्यते न जानाति । तदा वयमप्रकाशाः अज्ञाः कुतः पश्यामः कुतो बुद्ध्यामहे । अद्यापीत्यनेन बहुकालसाधनाभ्यासो दर्शितः । अज्ञत्वे हेतुमाह—अपर इति, ततोऽर्वाचीना इत्यर्थः । तत्रापि हेतुमाह— तस्येति । तस्य ब्रह्मणो मनश्च शरीरं च धीश्च सत्त्वतमोरजःकार्याणि ताभिर्ये विविधा देवतिर्यङ्नृणा सर्गास्तेषु सृष्टा इत्यर्थः ॥ २२ ॥

तर्ह्यपरे किं पश्यन्तीत्यपेक्षायामाह— य इति । ये देहभाजो देवमनुष्यादिदेहाभिमानिनस्ते स्वस्मिन् सम्यक्स्वरूपैश्वर्यादिप्रच्युतिराहित्येनैव स्थितमपि त्वां न विदुः, किन्तु जाग्रत्स्वप्नयोर्गुणान् गुणकार्याणि शब्दादिविषयान् उत वा अथवा सुषुप्तौ च तमः अज्ञानमेव पश्यन्तीत्यन्वयः । तत्र हेतुमाह— बहिःप्रकाशा इति । बहिर्विषयेष्वेव प्रकाशो ज्ञानं येषा ते । तत्रापि हेतुमाह— त्रिगुणप्रधाना इति, गुणत्रयाधीना इत्यर्थः । तत्रापि हेतुमाह— यदिति । यत् यस्मात् मायया मोहितं चेतो येषां ते इत्यर्थः ॥ २३ ॥ एवं सामान्यतो लोकस्य परमात्मयाथात्म्याविदितत्वमुक्तं तत्र त्वं विचारेण ज्ञास्यसीत्याशङ्क्याह— तमिति । तं ब्रह्मादिदुर्विज्ञेयं त्वामहं कथं परिभावयामि मनसा विचारयामीत्यन्वयः । तत्र सामर्थ्याभावे हेतुमाह— विमूढ इति, मायामोहित इत्यर्थः । प्रकारान्तरेणापि दुर्ज्ञेयत्वमाह— स्वभावेति । स्वस्य भावोऽनुभवस्तेनैव ध्वस्तौ मायागुणनिमित्तौ भेदमोहौ येषां तैः सनन्दनाद्यैरपि केवलं विभाव्यं विचिन्तनीयमेवेत्यर्थः । तत्रापि हेतुमाह— ज्ञानघनमिति, विशुद्धचैतन्यस्वरूपमित्यर्थः ॥ २४ ॥ एवं भगवज्ज्ञानविचारयो-

**ये देहभाजस्त्रिगुणप्रधाना गुणान् विपश्यन्त्युत वा तमश्च ॥ यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥ तं त्वामहं ज्ञानघनं स्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं विमूढः परिभावयामि ॥ २४ ॥ प्रशान्तमायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम् ॥ ज्ञानोपदेशाय गृहीतदेहं नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥ त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ॥ भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ २६ ॥**

रशक्यत्वमुक्त्वा प्रणमति— प्रशान्तेति । पुराणं सर्वकारणभूतं पुरुषं त्वां नमामहे । पुराणपुरुषत्वे हेतुमाह— अनामरूपमिति, देवमनुष्यादिनामरूपरहितम् । तत्र हेतुमाह— सदसद्विमुक्तमिति, स्थूलसूक्ष्मोपाधिरहितमित्यर्थः । तत्रापि हेतुमाह— प्रशान्तेति । प्रशान्ताः अविद्यमानाः मायागुणाः सत्त्वादयस्तत्प्रयुक्तानि कर्माणि तत्प्रयुक्तानि लिङ्गानि देहा यस्य तम् । तर्हि कथं तथात्वेन प्रतीतिस्तत्राह— ज्ञानोपदेशाय गृहीतः स्वेच्छयैव स्वीकृतो देहो येन तमित्यर्थः ॥ २५ ॥ त्वन्मायामोहितानां संसरतां त्वदेकशरणतया नमस्कारादिभक्त्यैव निस्तारो नान्यथेत्याशयेनाह— त्वन्मायेति । कामो भोगाभिलाषः, लोभः प्राप्तेऽपि भोगेऽलम्बुद्धिराहित्यम्, ईर्ष्या परोत्कर्षासहिष्णुता, मोहः अविवेकः, तैर्विभ्रान्तं चेतो येषां ते त्वन्मायारचिते प्रकृतिकार्यभूते लोके गृहादिषु वस्तुबुद्ध्या परमार्थदृष्ट्या भ्रमन्ति आसक्ता भवन्ति । अतस्त्वामेव नमाम इति पूर्वेणैवान्वयः । आदिपदेन देहापत्यकलत्रादिग्रहणम् ॥ २६ ॥

१ स्वत एव प्रध्वस्तौ इति श्रीधरस्वामिव्याख्यानम् । २ ' हि मूढ ' इति सुबोधिनीभावार्थदीपिकाकारयोः सम्मत पाठान्तरम् ।

तद्दर्शनादात्मनः कृतार्थता आविष्करोति— अद्येति । तत्र सर्वान्तर्यामित्वं हेतुं सूचयन् सम्बोधयति— सर्वभूतात्मन्निति । तत्रापि हेतुमाह— भगवन्निति । अद्य तव दर्शनात् नोऽस्माकं मम मत्पित्रादीनामनुगानां च कामाद्याशयः मूलभूतो मोहो देहेन्द्रियाद्यहमभिमानरूपो दृढः उपायान्तरैर्दुर्निर्मोच्योऽपि छिन्नो निरस्तः । कामो विषयभोगाभिलाषः । तत्प्रयुक्तानि कर्माणि । इन्द्रियाणि तत्र करणभूतानि ॥ २७ ॥ भवानिव सोऽपि भगवत्कृपापात्रमिति सूचयन् सम्बोधयति— नृपेति । इत्थं गीतः संस्तुतोऽनुभावो यस्य स भगवान् सर्वज्ञः कपिलो मुनिः परोपकारतत्परस्तमंशुमन्तं धियाऽनुगृह्येदं वक्ष्यमाणं उवाचेत्यन्वयः ॥ २८ ॥ तत्र स्वस्नेहं सूचयन् सम्बोधयति— वत्सेति । अयमश्वस्तव पितामहस्य यज्ञियः पशुर्नीयताम् । एवमश्वं लब्ध्वाऽपि पितृव्योद्धारोपायं चिन्तयंस्तमाह— इम इति । इमे दग्धास्तव पितरः पितृव्याः गङ्गाम्भ एवार्हन्ति नेतरत् । एषामुद्धारार्थं गङ्गामानीय तदम्भसैव क्रिया कार्या,

अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः ॥ मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥ श्रीशुक उवाच ॥
इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः ॥ अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥ २८ ॥ श्रीभगवानुवाच ॥
अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ॥ इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥ २९ ॥ तं परिक्रम्य
शिरसा प्रसाद्य हयमानयत् ॥ सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥ राज्यमंशुमति न्यस्य निस्स्पृहो
मुक्तबन्धनः ॥ और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे सगरचरितनिरूपणं नामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥

नेतरेणेत्यर्थः ॥ २९ ॥ तमिति शुकोक्तिः । तमेवमुक्तवन्तं कपिलं परिक्रम्य प्रदक्षिणीकृत्य शिरसा प्रणामेन प्रसाद्य अंशुमान् हयमानयत् । सगर इति स्पष्टम् ॥ ३० ॥ ततश्च निस्स्पृहः ऐहिकपारलौकिकभोगेच्छारहितः सगरोऽशुमति राज्यं न्यस्य तं राज्ये संस्थाप्य अनुत्तमां न विद्यते उत्तमा गतिर्यस्यास्तां गतिं मुक्तिं लेभे । तत्र हेतुमाह— । और्वेणोपदिष्टो यो मुक्तिमार्गो भक्त्यादिलक्षणस्तेन मुक्तं निरस्तं बन्धनमविद्यादेहाध्यासादिरूपं यस्य सः ॥ ३१ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशानिरूपणे ॥ अष्टमो विवृतोऽध्यायः सगरवृत्तनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

अथात्रांशुमतो वंशो गङ्गावतरणं तथा ॥ सुदासादिचरित्रं च नवमे विनिरूप्यते ॥ १ ॥ ॥ यथा सगरोऽशुमते राज्यं दत्त्वा स्वयं तपस्तेपे तथाऽशुमांश्चापि गङ्गानयनकामनया स्वपुत्राय राज्यं दत्त्वा स्वयं महान्तं कालं तपस्तेपे तथापि तामानेतु नाशक्नोत्। किन्तु ततस्तदनन्तरं महता कालेन स्वयमेव संस्थितो मृतः ॥ १ ॥ अथ तस्याशुमतः सुतो दिलीपोऽपि तद्वत् पितृवत् पुत्राय राज्य दत्त्वा तपः कुर्वन् गङ्गामानेतुं अशक्त एव कालं मृत्युमेयिवान् प्राप्तः। अथ तस्य दिलीपस्य पुत्रो यो भगीरथः सोऽपि गङ्गामानेतुं सुमहत्तपश्चक्रे ॥ २ ॥ तेन तपसा प्रसन्ना गङ्गा तं आत्मानं दर्शयामास। ततश्च ते तुभ्यं वरदाऽस्मीति तयोक्तो नृपो भगीरथोऽवनतः कृतप्रणामः सन् स्वमभिप्रायं पूर्वजानामुद्धारार्थं भूम्यागमनं शशंस प्रार्थितवान् ॥ ३ ॥ तं च गङ्गोवाच—को न्विति द्वाभ्याम्। महीतले पतन्त्या मे मम वेगं को नु धारयिता धारयिष्यति ?[1]। कोऽपीति पाठान्तरम्। नृपत्वेऽप्यत्र तव सामर्थ्यं नास्तीति सूचयन् सम्बोधयति— नृपेति। अन्यथा धारकाभावे तु भूतलं भित्त्वा रसातलं यास्ये गमिष्यामि ॥ ४ ॥ किञ्चाहं भुवं भूलोकं न यास्ये न गमिष्यामि। तत्र हेतुमाह—

श्रीशुक उवाच ॥ अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया ॥ कालं महान्तं नाशक्नोत्ततः कालेन संस्थितः ॥ १ ॥ दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान् ॥ भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ २ ॥ दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ॥ इत्युक्तः स्वमभिप्रायं शशंसाऽवनतो नृपः ॥ ३ ॥ को नु धारयिता वेगं पतन्त्या मे महीतले ॥ अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम् ॥ ४ ॥ किञ्चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम् ॥ मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यताम् ॥ ५ ॥ भगीरथ उवाच ॥ साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ॥ हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः ॥ ६ ॥

नरा इति। भूमिष्ठा नराः अघं स्वकृतं पापं मयि आमृजन्ति स्नानादिसम्बन्धेन स्थापयिष्यन्ति तदघं तत्पापमहं कुत्र मृजामि प्रक्षेप्स्यामि तत्रोपायो विचिन्त्यताम्। राजत्वान्ममापि भद्रचिन्तन तवावश्यकमिति सूचयन्ती सम्बोधयति— राजन्निति ॥ ५ ॥ अङ्गसङ्गात्ते तव अघं पापं साधवो हरन्ति हरिष्यन्ति, यतस्ते लोकपावना लोकानां पावित्र्यकर्तारः। के ते साधव इत्यपेक्षायामाह— न्यासिन इति, इहामुत्र सुखापेक्षात्यागिन इत्यर्थः। तत्र हेतुमाह— शान्ता इति, रागलोभादिदोषरहिता इत्यर्थः। तत्र हेतुमाह— ब्रह्मिष्ठा इति, भगवदुपासका इत्यर्थः। ननु कथं तेषां पावनत्वं हत्वा तेऽघं क क्षिपन्तीत्यपेक्षायामाह— तेष्विति। हि यस्मात्तेषु हरिः स्वभक्तदोषहरणशीलो भगवानास्ते, अतः स एव तदघं हरतीत्याशयः। तर्हि स क तदघं प्रक्षिपतीत्यपेक्षायामाह— अघभिदिति। अघं भिनत्ति नाशयतीति तथा सः ॥ ६ ॥

---

१ सुबोधिनीभावार्थदीपिकाकारयो प्रधानपाठोऽयम्। तत्र प्रश्नार्थकोऽपिशब्दः।

एवं 'किञ्चाहं न भुवं यास्ये' इत्यस्योत्तरमुक्त्वाऽथ को नु धारयिता वेगमित्यस्योत्तरमाह— धारयिष्यतीति। ते तव वेग तु रुद्रो धारयिष्यति तद्धारणसामर्थ्ये कैमुत्यन्यायं सूचयन् विशिनष्टि— यस्मिन्निदं सर्वं विश्वं ऊर्ध्वतन्तुषु शाटीव पट इव ओतं ग्रथित तिर्यक्तन्तुषु पट इव प्रोतं च। तत्र हेतुमाह—शरीरिणामात्मेति ॥ ७ ॥ इत्येवमुक्त्वा गङ्गानुमतिं चालक्ष्येति शेषः। स नृपो भगीरथस्तपसा शिवमतोषयत्। सोऽपि तपसैव तोषयितुं योग्यो देवत्वादित्याशयेनाह— देवमिति। हे राजन् तस्य तपसाऽल्पीयसैव कालेनेशो रुद्रः समतुष्यत। अत्र च क्वचित् मूले— 'इति तद्वच आकर्ण्य गङ्गा पुनरुवाच तम् ॥ मदम्भसां धारणार्थं महेशानं प्रसादय' इत्येकः श्लोकोऽधिकोऽस्ति तदनन्तरं तच्छ्रुत्वा स नृप इति पाठः, अर्थस्तु स्पष्ट एव ॥ ८ ॥ तदा च राज्ञाऽभिहित गङ्गावेगधारण तथाऽस्त्वित्येवमङ्गीकृत्य अवहितः प्रथमं परमानन्दप्लुतः पुनः सावधानः सन् शिवो गङ्गा दधारेत्यन्वयः। एवं हर्षेण धारणं स्वार्थं परार्थं च तत्र

धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ॥ यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥ ७ ॥ इत्युक्त्वा स नृपो देवं तपसाऽतोषयच्छिवम् ॥ कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत ॥ ८ ॥ तथेति राज्ञाऽभिहितं सर्वलोकहितः[2] शिवः ॥ दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ९ ॥ भगीरथः स राजर्षिर्निन्ये भुवनपावनीम् ॥ यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते ॥ १० ॥ रथेन वायुवेगेन प्रयान्तमनुधावती ॥ देशान् पुनन्ती निर्दग्धानासिञ्चत् सगरात्मजान् ॥ ११ ॥ यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ॥ सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ १२ ॥

परप्रयोजनं सूचयन्नाह— सर्वलोकहिते रत इति। स्वप्रयोजनमाह— हरेः पादावनेजनत्वेन पूतं जलं यस्यास्तामिति। एतेन शिवस्यापि भगवद्भक्तत्वं सूचितं 'शिवः शिवोऽभूत्' इति तृतीयोक्तेः। ततः स राजर्षिर्भगीरथो यत्र भस्मीभूताः स्वपितॄणां देहाः शेरते स्म स्थितास्तत्र भुवनपावनीं गङ्गां निन्ये अनयत् ॥९॥ १० ॥ सा च वायोरिव वेगो यस्य तेन रथेन प्रयान्तं भगीरथमनुधावती अनुगच्छन्ती गङ्गा मार्गस्थान् देशान् पुनन्ती निर्दग्धान् सगरात्मजान् आसिञ्चत् तद्भस्मानि प्लावयामासेत्यर्थः ॥ ११ ॥ प्रसङ्गाद्गङ्गामाहात्म्यमाह— यज्जलेति चतुर्भिः। केवलं देहस्य भस्मभिरेव न तु साक्षात्, यस्या गङ्गाया जलस्य स्पर्शमात्रेण ब्रह्मदण्डेन ब्रह्मणि श्रीकपिले यो दण्डः स्वकृतोऽपराधस्तेन हता दग्धा अपि सगरात्मजा यदि दिवं स्वर्गं जग्मुस्तदा श्रद्धया नित्यं सेवता फलं किं वक्तव्यमिति शेषः ॥ १२ ॥

१ सप्तमश्लोकादनन्तरम्—'इति तद्वच आकर्ण्य गङ्गा पुनरुवाच तम् ॥ मदम्भसा धारणार्थं महेशान प्रसादय' इत्येतट्टीकान्तर्गत' श्लोक तथा 'इति तस्य वच श्रुत्वा गङ्गा त पुनरब्रवीत् ॥ प्रसादय महेशान धारणार्थं मदम्भसाम्' इति वा श्लोकोऽधिक क्वचिद्दृश्यते मूले। तथा अष्टमश्लोकारम्भे 'इत्युक्त्वा' इत्यत्र 'तच्छ्रुत्वा' इति पाठान्तर दृश्यते। पर नाय साम्प्रदायिकः पाठ। २ 'सर्वलोकहिते रत' इत्येवैतट्टीकाकारसम्मत पाठ इति भाति तथा व्याख्यानात्। स मूलस्थपाठेन चिन्त्य एव।

एतदेव स्पष्टयति— भस्मीभूतेति । 'न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ॥ नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गत.'[1] इति तृतीये उक्तत्वान्नारकैरपि निन्द्या ब्रह्मदण्डहताः सगरात्मजा यदि भस्मीभूतानामङ्गाना यो गङ्गाम्भसा सङ्गस्तेनैव यातास्तर्हि ये धृतं व्रतं गङ्गास्नानपानाचमनादिनियमो यैस्तथाभूताः देवीं गङ्गां श्रद्धया सेवन्ते पूजास्तुतिनमस्कारादिभिराराधयन्ति ते दिवं यान्तीति किं पुनर्वक्तव्यमित्यन्वयः ॥ १३ ॥ एतच्छ्वणेनाश्चर्यं मन्यमानान्नालक्ष्याह— नहीति । स्वर्धुन्या गङ्गाया यदिह अत्र स्वर्गप्रापकत्वरूपं माहात्म्यमुदितमुक्तं तदेतत्परमाश्चर्यं अत्यन्तासम्भावित नहि नैव भवति । तत्र हेतुमाह— भवच्छिद इति संसारदुःखनिरासपूर्वकपरमफलमुक्तिरूपभगवच्चरणारविन्दप्रापकत्वादित्यर्थः । तत्र हेतुमाह— अनन्तेति । अनन्तस्य अचिन्त्यस्वरूपगुणस्य भगवतश्चरणाम्भोजात् प्रसूताया इत्यर्थः ॥ १४ ॥ तच्चरणारविन्दप्रसूतत्वेऽपि कथमेवं प्रभाव इत्यपेक्षाया तच्चरणारविन्दस्य तथाप्रभावत्वादित्याह— सन्निवेश्येति । मुनयो मननशीला विवेकिनः अमलं रागलोभादिमलरहितं मनो यस्मिन् भगवच्चरणारविन्दे श्रद्धया

**भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः ॥ किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥ १३ ॥ न ह्येतत् परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ॥ अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥ १४ ॥ सन्निवेश्य मनो यस्मिञ्छ्रद्धया मुनयोऽमलाः ॥ त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ १५ ॥ श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ॥ सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥ ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ॥ दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥ १७ ॥**

प्रेम्णा सन्निवेश्य दुस्त्यजमुपायान्तरैस्त्यक्तुमशक्यमपि त्रैगुण्यं त्रिगुणात्मके देहान्तःकरणादौ आत्मभावं सद्यः शीघ्रमेव हित्वा त्यक्त्वा तदात्मतां अच्युतात्मतां याताः प्राप्ताः, विमुक्ता जाता इत्यर्थः ॥ १५ ॥ एवं भगीरथचरितं गङ्गावतरणं चोक्त्वा भगीरथवंशमाह— श्रुत इति । भगीरथात् श्रुताख्यः पुत्रो जज्ञे । तस्य श्रुतस्य नाभो नाम अपरः पुत्रोऽभवत् । तस्मात् सिन्धुद्वीपः सुतोऽभवत् । ततश्च अयुतायुः पुत्रोऽभूत् ॥ १६ ॥ ततः ऋतुपर्णाख्यः पुत्रो जातः । तं विशिनष्टि— नलसख इति । नलस्य राज्ञः सखा । तयोः परस्परोपकर्तृत्वरूपं सखित्वं दर्शयति— यश्चास्मै नलाय अक्षहृदयं द्यूतशास्त्ररहस्यं दत्त्वा शिक्षयित्वा तस्मान्नलात् स्वयमश्वविद्यां अयात्, अश्वशिक्षाप्रतिपादिका विद्यां प्राप्तवानित्यर्थः । तस्य ऋतुपर्णस्य सुतः सर्वकामाख्यो जज्ञे ॥ १७ ॥

[1] तृतीयस्कन्धे चतुर्दशाध्याये ( श्लोक. ४२ )

आश्चर्यान्तरं शृण्विरयाशयेन सम्बोधयति— नृपेति। ततः सर्वकामात् सुदासो जज्ञे। तस्य पुत्रस्तु य मित्रसहं कल्माषाङ्घ्रिं च जना आहुः स मदयन्तीपतिर्जज्ञे। वै चकारार्थे। स एव क्वचित् वसिष्ठस्य शापात् रक्षो राक्षसोऽभूत्। स्वकर्मणा दोषेणानपत्य औरसपुत्ररहितश्चाभूत् ॥ १८ ॥ एवं सङ्क्षेपतः श्रुतं वृत्तान्तं विस्तरेण श्रोतुं राजा पृच्छति— किमिति। 'यं मित्रसहमाहुः' इत्युक्तेस्तस्य महात्मत्वमपि सूचितमेव। तस्य महात्मनः सौदासस्य गुरोः शापः किन्निमित्त' ?। तच्छापे निमित्तं कि तदेतच्छापनिमित्तं वेदितुमिच्छामि तद्यदि न रहो रहस्यं गोप्यं न भवेत् किन्तु कथितु योग्यं भवेत् तर्हि कथ्यताम् ॥ १९ ॥ सौदासो मृगयां चरन् कश्चित् रक्षो राक्षसं जघान हतवान्। हकारो निश्चयार्थः। तस्य भ्रातरं तु मुमोच तदा स भ्राता

ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृप ॥ आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् ॥ वसिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥ १८ ॥ राजोवाच ॥ किन्निमित्तो गुरोः शापः सौदासस्य महात्मनः ॥ एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ १९ ॥ श्रीशुक उवाच ॥ सौदासो मृगयां किञ्चिच्चरन् रक्षो जघान ह ॥ मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ २० ॥ स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे ॥ गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ २१ ॥ परिवेक्ष्यमाणं भगवान् विलोक्याभक्ष्यमञ्जसा ॥ राजानमशपत् क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ २२ ॥ रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम् ॥ सोऽप्यपोऽञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः ॥ २३ ॥

अथानन्तरं तस्य राज्ञोऽघं भ्रातृहननापराधं सञ्चिन्तयन् प्रतिचिकीर्षया तदपकारकरणेच्छया सूदः पाचकस्तद्रूपधरस्तस्य राज्ञो गृहे गतः सन् नरस्य आमिषं मासं पक्त्वा भोक्तुकामाय गुरवे वसिष्ठाय आनिन्ये इति द्वयोरन्वयः ॥ २० ॥ २१ ॥ ततश्च स भगवान् सर्वज्ञो वसिष्ठः परिवेक्ष्यमाण नरामिषं अतएवाभक्ष्यं भक्षणानर्हमञ्जसा आशु विलोक्य ज्ञात्वा क्रुद्धः सन्नेवं नरमांसभक्षणादिव्यवहारदोषेण त्व रक्ष एव भविष्यसीति राजानं मित्रसहं अशपदित्यन्वयः ॥ २२ ॥ एवमापाततो राजान शप्त्वा पुनस्तदामिषपरिवेषण सूदरूपधरेण रक्षसा कृतं न तु राज्ञा कारितमिति विदित्वा स वसिष्ठ एव स्ववाक्यानृतत्वपरिहाराय तमेव शाप द्वादशवर्षावधिकं चक्रे। तदा स सौदासोऽप्यञ्जलिना अपो जलमादाय गुरुं वसिष्ठं शप्तुं समुद्यतो जातः ॥ २३ ॥

जातस्य शापस्य अन्यथाकर्तुमशक्यत्वात् गुर्वपमानेनानर्थान्तर च स्यादिति मदयन्त्या भार्यया वारितः स नृपः सौदासो दिगादिसर्वमपि स्थान जीवमय पश्यंस्तत्र शापार्थं गृहीतजलप्रक्षेपे तेषा विनाशेन पापाशङ्कया ता रुशतीः तीक्ष्णाः अपः स्वपादयोरेव जहौ त्यक्तवान् ॥ २४ ॥ अतएव स्वपादे कल्माषतां नीलतां गतः । अनेनैव सर्वजीवहितचिन्तनपूर्वकस्ववैरूप्याङ्गीकारेण मित्रसहत्वमपि दर्शितम् । एवं स गुरुशापवशात् राक्षसं भावमापन्नः । एवं शापनिमित्तमुक्त्वा यदुक्तं 'स्वकर्मणाऽनपत्यः' इति तत्कर्म दर्शयति— व्यवायेति । व्यवायकाले मैथुनकाले वनमोको निवासो ययोस्तौ वनौकसौ तौ च तौ दम्पती च भार्यापुरुषौ द्विजौ ब्राह्मणौ ददृशे ददर्श । वनौकाविति पृथक्पदपाठे तु सकारलोप आर्षः ॥ २५ ॥ तदा च क्षुधा अशना तया आर्तः पीडितः राक्षसरूपः सौदासो विप्रं भक्षितुं जगृहे । अकृतार्थवत् दीनवत् तस्य पत्नी आह । तद्वचनं दर्शयति— नेत्यादिना 'एवं करुणभाषिण्या' इत्यतः प्राक्तनेन ग्रन्थेन । भवान् न साक्षात् राक्षसकुलोत्पन्नः किन्तु इक्ष्वाकूणां तत्कुलोत्पन्नाना महारथः श्रेष्ठः मदयन्त्याः पतिः, अतो हे वीर अधर्मं विप्रहननरूपं

वारितो मदयन्त्याऽपो रुशतीः पादयोर्जहौ ॥ दिशः खमवनीं सर्वं पश्यन् जीवमयं नृपः ॥ २४ ॥ राक्षसं भावमापन्नः पादे कल्माषतां गतः ॥ व्यवायकाले ददृशे वनौकौदम्पती द्विजौ ॥ २५ ॥ क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ॥ न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ॥ २६ ॥ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् ॥ देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः ॥ २७ ॥ तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ एष हि ब्राह्मणो विद्वांस्तपश्शीलगुणान्वितः ॥ २८ ॥ आरिराधयिषुर्ब्रह्म महापुरुषसञ्ज्ञितम् ॥ सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः[1] ॥ २९ ॥

पापं कर्तुं नार्हसि ॥ २६ ॥ किन्तु मे मह्यमेनं पतिं देहि । एतद्दाने तव महानुपकारो भविष्यतीत्याशयेनाह— अपत्यकामाया इति । एतद्वधे च तव महाननर्थः स्यादित्याशयेनाह— अकृतार्थमिति । अनुत्पादितपुत्रमिति । तत्रापि द्विजं ब्राह्मणमिति । राक्षसं भाव विहाय क्षात्रस्वभावेन मदुक्तं विचारयेति सूचयती सम्बोधयति— राजन्निति । अयं मानुषो देहः पुरुषस्य जीवस्याखिलानां पुरुषार्थानां साधनभूतः ॥ २७ ॥ यत एवं तस्मात् हे वीर अस्य ब्राह्मणदेहस्य वधः सर्वपुरुषार्थवध उच्यते । ब्राह्मणत्वेऽप्यस्योत्कर्षमाह— एष हि ब्राह्मणो विद्वान् शास्त्रतात्पर्यज्ञः तपआदिभिर्गुणैरन्वितो युक्तः ॥ २८ ॥ सर्वभूतेषु य आत्मभावः परमात्मचिन्तनं तेन महापुरुषसञ्ज्ञं परं ब्रह्म आरिराधयिषुः । सर्वत्र ब्रह्मास्ति चेत् कुतो न प्रकाशते तत्राह—भूतेष्विति । सर्वभूतेषु स्थितमपि गुणैः गुणकार्यैरहङ्कारादिभिरन्तर्हितमलक्ष्यम् ॥ २९ ॥

१ 'अन्तर्हितो गुणैः' इति पाठान्तरे अन्तर्हित सोऽयमित्युत्तरेणान्वय इति श्रीधरस्वामिचरणा ।

सोऽयमेवम्भूतो ब्रह्मर्षिवर्यस्ते त्वत्तः राजर्षिप्रवरात् कथं वधमर्हति? । तत्र दृष्टान्तमाह— यथा पितुः सकाशादात्मजो वधं नार्हति तद्वत् ॥ ३० ॥ साधुत्वेन सम्मतो भवान् तस्यैवंविधस्य वधं कथं साधु मन्यते इत्यन्वयः । असम्मतत्वे दृष्टान्तमाह— यथा बभ्रोरिति । बभ्रोर्धेनोर्वधो यथाऽसम्मतः अनर्थहेतुत्वात्, तथाऽयमपीत्यर्थः । साधोर्मुक्तिसाधनपरस्य । भ्रूणस्याध्ययनादिसम्पन्नस्य । ब्रह्मवादिनो वेदार्थोपदेशे समर्थस्य ॥ ३१ ॥ येन विनाऽहं क्षणमपि न जीविष्ये सोऽयं यदि त्वया भक्ष्यः क्रियते तर्हि पूर्वतस्तद्भक्षणात्प्रागेव मृतकं यथा तथा मामेव खाद अद्धीत्यन्वयः ॥ ३२ ॥ एवं तस्याः करुणभाषिण्याः दैन्यं वदन्त्या अनाथवद्विलपन्त्याः रुदन्त्याश्च सत्याः शापेन मोहितः सौदासो व्याघ्रः पशुमिव द्विजेमखादत् भक्षितवान् ॥ ३३ ॥ एव दिधिषुं

सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ॥ कथमर्हति धर्मज्ञ वधं पितुरिवाऽऽत्मजः ॥ ३० ॥ तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ॥ ३१ ॥ यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ॥ न जीविष्ये विना येन क्षणं च मृतकं यथा ॥ ३२ ॥ एवं करुणभाषिण्या विलपन्त्या अनाथवत् ॥ व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः ॥ ३३ ॥ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ॥ शोचन्त्यात्मानमुर्वीश-मशपत् कुपिता सती ॥ ३४ ॥ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः ॥ ३५ ॥ एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ॥ ३६ ॥ विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ॥ विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ॥ ३७ ॥

गर्भाधानकर्तारं पतिं पुरुषादेन राक्षसेन भक्षितं वीक्ष्य ब्राह्मणी आत्मानं शोचन्ती कुपिता च सती उर्वीशं सौदासमशपत् ॥ ३४ ॥ तच्छापं दर्शयति— यस्मादिति । हे पाप पापाचार । तत्र हेतुं सूचयन्ती पुनः सम्बोधयति— अकृतप्रज्ञ हे दुर्बुद्धे । यस्मात् कामार्ताया मे मम पतिस्त्वया भक्षितः तस्मात् तवाप्याधानादेव मयाऽपि मृत्युर्दर्शित इत्यन्वयः । यदैव त्वं गर्भाधानं कर्तुमुद्युक्तो भविष्यसि तदैव तव मरण भविष्यतीत्यर्थः ॥ ३५ ॥ एवं मित्रसहं शप्त्वा पतिलोकं गन्तुकामा तस्यास्थीनि समिद्धेऽग्नौ प्रास्य प्रक्षिप्य तत्र स्वदेहं निपात्य भर्तुर्गतिं तत्प्राप्तलोकं गता ॥ ३६ ॥ ततो द्वादशाब्दस्यान्ते विगतशापः सौदासो मैथुनायोद्यतः तदा महिष्या मदयन्त्या ब्राह्मणीशापं विज्ञाय निवारितः ॥ ३७ ॥

१ श्रोत्रियस्येत्यर्थ । 'अथ भ्रूणो, गर्भिण्या श्रोत्रिये द्विजे ॥ अर्भके स्त्रैणगर्भे च' इति हैम । २ अध्याहारेण स्वीकृतमेतत्पदम् ।

तत ऊर्ध्वं अनन्तर सः सौदासः स्त्रीसम्भोगसुख तत्याज। एव ब्राह्मणभक्षणेन कर्मणा शापेन सः अप्रजा अभूत्। तदा तेनानुज्ञातः प्रजोत्पादनाय प्रार्थितो वसिष्ठो मदयन्त्या प्रजामधात् गर्भाधानमकरोत् ॥ ३८ ॥ ततः सा वै मदयन्ती सप्त समाः वत्सरान् गर्भमबिभ्रत् तदापि पुत्रो न व्यजायत। तदा वसिष्ठस्तस्या मदयन्त्या उदरमश्मना पाषाणेन जघ्ने। तेनाश्मघातेन निमित्तेन स ततो जातः पुत्रोऽश्मक इति कथ्यते ॥ ३९ ॥ अश्मकान्मूलको जज्ञे। स च परशुरामेण निःक्षत्रे क्षत्रोत्पाटने क्रियमाणे यतः स्त्रीभिः कवचवत् परितो रक्षितो नारीकवच इत्युक्तः। अतएव पुनः क्षत्रकुलस्य मूलत्वान्मूलकाख्योऽभवत् ॥ ४० ॥ ततो दशरथो जातः। तस्मात् ऐलविलः पुत्रो जातः। 'ऐडविडः' इति पाठान्तरम्। ततो राजा विश्वसहो जज्ञे। ततश्च चक्रवर्ती सार्वभौमः

तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः ॥ वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥ ३८ ॥ सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ॥ जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥ ३९ ॥ अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ ४० ॥ ततो दशरथस्तस्मात् पुत्र ऐलविलस्ततः[1] ॥ राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ॥ ४१ ॥ यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः ॥ मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः ॥ ४२ ॥ न मे ब्रह्मकुलात् प्राणाः कुलदैवान्न चात्मजाः ॥ न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ॥ ४३ ॥

खट्वाङ्गोऽभूत् ॥ ४१ ॥ अथ खट्वाङ्गचरितमाह— य इत्यादिना। यः खट्वाङ्गो युधि युद्धे दुर्जयो जेतुमशक्यः, अतएव देवैरर्थितः सहायत्वेन प्रार्थितः सन् दैत्यानवधीत्। ततश्च प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वाङ्गेनोक्तं प्रथमं तावन्ममायुः कथ्यतां ततस्तदनुरूपं वरं ग्रहीष्यामीति। देवैश्चोक्तं तत्तु मुहूर्तमात्रमिति। तज्ज्ञात्वा देवदत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे सन्दधे ॥ ४२ ॥ तस्य स्ववृत्तानुसन्धानपूर्वकनिश्चयेन मनःसन्धानप्रकारं दर्शयति— नेत्यादिना पञ्चभिः। कुलदैवात् कुलपूज्यात् ब्रह्मकुलात्सकाशात् मे मम प्राणादयोऽतिवल्लभाः अतिप्रिया न भवन्ति। लोकवृत्त्या प्रियत्वेऽपीति सूचयितुमतिशब्दः ॥ ४३ ॥

---

१ 'ऐडविडस्तत' इति पाठान्तरम् ( श्री० सु० )

मह्यं मम मतिः क्वचित् आपद्यप्यधर्मे न रमते स्म। उत्तमश्लोकात् भगवतः सकाशादन्यद्वस्तु परमार्थभूतमहं किञ्चनापि नापश्यं न दृष्टवानस्मि ॥ ४४ ॥ यद्यपि त्रिभुवनेश्वरैर्देवैर्मह्यं कामवरः इच्छानुगुणो वरो दत्तस्तथाप्यहं तं कामं वरं न वृणे न वृणुयाम्। तत्र हेतुं सूचयन्नात्मानं विशिनष्टि— भूतभावनभावन इति। भूतानि देवादीनि भावयति पालयतीति भूतभावनो भगवान् तस्मिन्नेव भावना यस्य तथाभूतोऽहं भगवत्प्राप्तिकामं मां प्रति वरान्तरस्यान्तरायरूपत्वादित्याशयः ॥ ४५ ॥ तर्ह्यन्ये कुतः स्वर्गादिसुखमेव कामयन्ते इत्यपेक्षायां परमानन्दात्मकभगवदनुभवाभावादित्याशयेनाह— य इति। ये सात्त्विकत्वेन प्रसिद्धा देवास्तेऽपि शश्वत् सर्वदा स्वहृदि स्थितमपि भगवन्तं न विन्दन्ति न जानन्ति, अपरे राजसतामसस्वभावा मनुष्यादयो न जानन्तीति किमुत वक्तव्यमित्यन्वयः। ज्ञातुं योग्यश्च इत्याह— प्रियमिति। तत्र हेतुमाह—आत्मानमिति। तर्हि कुतो

न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ नापश्यमुत्तमश्लोकादन्यत् किञ्चन वस्त्वहम् ॥ ४४ ॥ देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ न वृणे तमहं कामं भूतभावनभावनः ॥ ४५ ॥ ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ॥ न विन्दन्ति प्रियं शश्वदात्मानं किमुतापरे ॥ ४६ ॥ अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु ॥ रूढं प्रकृत्याऽऽत्मनि विश्वकर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ४७ ॥ इति व्यवसितो बुद्ध्या नारायणगृहीतया ॥ हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥ ४८ ॥

न जानन्ति तत्राह— विक्षिप्तेति। विक्षिप्तानि विपर्ययेण कृष्टानीन्द्रियाणि धीश्च येषां ते ॥ ४६ ॥ यस्मादेवं अथ तस्मात् गन्धर्वपुरोपमेषु आशुविनाशित्वेन गन्धर्वनगरतुल्येषु। तत्र हेतुः— ईशस्य भगवतो मायारचितेषु प्रकृतिकार्येषु गुणेषु शब्दादिविषयेषु प्रकृत्या स्वभावेन प्राप्तं सङ्गमासक्तिं हित्वा विश्वकर्तुर्भगवतो भावेन भक्त्याऽऽत्मनि स्वस्मिन्नेव रूढं स्थितं तं भगवन्तमेवाहं प्रपद्ये शरणं व्रजामीत्यन्वयः ॥ ४७ ॥ नारायणेन गृहीतया नराणां समूहो नारः स अयनं स्थानं यस्य स नारायणोऽन्तर्यामी तेन गृहीतयाऽऽत्मानं प्रत्याकृष्टया बुद्ध्या इत्येवमुक्तप्रकारेण व्यवसितः कृतनिश्चयः सन् अज्ञानं तत्कार्यमन्यभावं देहादौ आत्माभिमान च हित्वा ततस्तदनन्तरमेव स्वभाव स्वं परमार्थरूपं भगवन्तमेव आश्रितः अवाप। 'खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः ॥ मुहूर्तात् सर्वमुत्सृज्य गतवानभयं हरिम्' इति पूर्वोक्तेः ॥ ४८ ॥

प्राप्तं स्वं भावमेव स्पष्टयति— यत्तदिति। परं ब्रह्मेति वेदान्तेषु यत्प्रसिद्धमतः प्रमाणसिद्धत्वादशून्य शशविषाणादिवत्तुच्छ न भवति तथापि वागाद्य-विषयत्वात् शून्यवत्कल्पितम्। अविषयत्वे हेतुमाह— सूक्ष्ममिति। यं च सात्त्वताः सत्त्वप्रधाना भागवता भगवता अनुगृहीता भगवानिति वासुदेव इति च गृणन्ति तदाश्रिता इत्यन्वयः। हीति शास्त्रप्रसिद्धिं द्योतयति ॥ ४९ ॥ इति श्रीवल्लभाचार्यवश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवा-धिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ नवमो विवृतो गङ्गावतारादिनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ खट्वाङ्गस्यान्वये रामप्रादुर्भावोऽनुजैः सह ॥ तच्चरितं च सङ्क्षिप्तं दशमे विनिरूप्यते ॥ १ ॥ ॥ खट्वाङ्गाच्च दीर्घबाहुः, तस्मात् पृथुश्रवाः विपुलकीर्तिः रघुः, ततो महाराजः अजः, तस्माद्दशरथोऽभूत् ॥ १ ॥ तस्य दशरथस्यापि सुरैर्देवैः

यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ॥ भगवान् वासुदेवेति[1] यं गृणन्ति हि सात्वताः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे गङ्गावतरणादिनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥ ॥ ॥ छ ॥ ॥
श्रीशुक उवाच ॥ खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात् पृथुश्रवाः ॥ अजस्ततो महाराजस्तस्माद्दशरथोऽभवत् ॥ १ ॥
तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः ॥ अंशांशेन चतुर्द्धाऽगात् पुत्रत्वं प्रार्थितः सुरैः ॥ २ ॥ रामलक्ष्मण-भरतशत्रुघ्ना इति सञ्ज्ञया ॥ तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः ॥ श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ३ ॥
गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम् ॥ वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भत्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोशलेन्द्रोऽवतान्नः ॥ ४ ॥

प्रार्थितः सन्नेष भगवान् स्वांशांशेन रामादिसञ्ज्ञया चतुर्धा पुत्रत्वमगादित्यन्वयः। औपचारिकभगवत्त्वनिरासायाह—साक्षाद्ब्रह्ममय इति। ननु पूर्णानन्दस्य भगवतो देवप्रार्थनयाऽपि कथं मनुष्यपुत्रत्वाङ्गीकारस्तत्राह— हरिरिति। दुःखहरणशीलत्वाद्देवादीनां रावणादिदुःखनिरासार्थं अयमवतार इत्याशयः ॥ २ ॥ अहो भगवच्चरितश्रोतुस्तव भाग्यमिति सूचयन् सम्बोधयति— राजन्निति। यद्यपि तस्य सीतापतेः श्रीरामस्यानुचरितं तत्त्व-दर्शिभिः परमार्थज्ञैर्वाल्मिक्यादिभिर्ऋषिभिः भूरि विस्तृतं यथा भवति तथा वर्णितं त्वया च मुहुः श्रुतमेव। तथापि सङ्क्षेपेण कथयामीति शेषः। हीत्यव-धारणे ॥ ३ ॥ इदानीमध्यायद्वयेन श्रीरामचरितं विवर्णयिषुस्तावदेकेन श्लोकेन सङ्क्षिप्तस्तत्कर्मकामात्मरक्षां प्रार्थयते— गुर्वर्थ इति। यः गुर्वर्थे त्यक्तराज्यः

[1] वासुदेवेतीति सन्धिरार्षः।

गुरुः पिता दशरथस्तस्य वचसस्सत्यतापालनार्थे त्यक्तं राज्यं येन तथाभूतः सन् पद्मवदतिसुकुमाराभ्यां पद्भ्यां अनुवनं प्रतिवनं व्यचरत् । अनेन धर्ममर्यादापालकत्वं दर्शितम् । सुकुमारत्वमेव स्पष्टयति— प्रियायाः सीतायाः पाणिना स्पर्शोऽपि नास्ति क्षमा सहिष्णुता ययोस्ताभ्या हरीणां वानराणामिन्द्रः सुग्रीवः अनुजो लक्ष्मणः ताभ्यां मृजिता अपनीता पथरुजा मार्गश्रमो यस्य सः । अनेन कृपालुत्व सूचितम् । शूर्पणख्याः राक्षस्याः वैरूप्यात्कर्णनासिकाच्छेदाद्धेतोस्तया प्रलोभितेन रावणेनापहारात् प्रियेण कलत्रेण यो विरहस्तेन या रुट् तया आरोपितयोः कुटिलीकृतयोर्भ्रुवोः विजृम्भणेनैव त्रस्तो भीतोऽब्धिः समुद्रो यस्मातसः । ततस्तद्विज्ञापनेन बद्धः समुद्रे सेतुर्येन सः । खला दुरात्मानो रावणादय एव दवो वन तस्य दहनः स एवम्भूतः कोशलेन्द्रः श्रीरामो नोऽस्मान् अवतात् पातु ॥ ४ ॥ एवं सङ्गृहीतं श्रीरामचरितमादित आरभ्य वर्णयति— विश्वामित्रेत्यादिना यावदुत्तराध्यायसमाप्ति । विश्वामित्रस्याध्वरे यज्ञे येन लक्ष्मणस्य पश्यत एव तमप्यनपेक्ष्यैव निशाचराः निशायामाचरन्तीति तथाभूता नैर्ऋतपुङ्गवाः राक्षसश्रेष्ठा मारीचादयो हताः स कोशलेन्द्रो नोऽवतादिति पूर्वेणान्वयः । एवमग्रेऽपि यच्छब्दानां पूर्वेणैवान्वयः ॥ ५ ॥ इयं च भगवतो राजलीला

**विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ॥ पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ५ ॥ यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरगृहे त्रिशतोपनीतम् ॥ आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥ ६ ॥ जित्वाऽनुरूपगुणशीलवयोङ्गरूपां सीताभिधां श्रियमुरस्यभिलब्धमानाम् ॥ मार्गे व्रजन् भृगुपतेर्व्यनयत् प्ररूढं दर्पं महीमकृत यस्त्रिरराजबीजाम् ॥ ७ ॥**

त्वया सावधानतया श्रोतव्येत्याशयेन सम्बोधयति— नृपेति । यः श्रीरामः सीतायाः स्वयंवरगृहे लोके ये वीरास्तेषां समितौ समाजे उग्रं कठिनं गरिष्ठं च अतएव त्रिशता वाहकानां शतत्रयेणोपनीतं ऐशं श्रीरुद्रसम्बन्धि धनुः आदाय गृहीत्वा सज्जीकृतमारोपितज्यं विकृष्य इक्षुदण्डमिव मध्ये बभञ्ज भग्नमकरोत् । अनायासत्वार्थे दृष्टान्तं सूचयन् विशिनष्टि— बालगजलील इति । बालगजस्य लीलेव लीला यस्य सः । गजो यथेक्षुदण्डं भञ्जयति तथेत्याशयः ॥ ६ ॥ अनुरूपाणि स्वयोग्यानि गुणशीलादीनि यस्यास्तां सीतासञ्ज्ञा जित्वा धनुर्भञ्जनेन स्वाधीना कृत्वा व्रजन् धनुर्भङ्गमहानादश्रवणक्षुभितस्य मार्गे आगतस्य भृगुपतेर्भार्गवमुख्यस्य रामस्य प्ररूढमतिवृद्ध दर्पं गर्वं व्यनयत् अपनीतवानित्यन्वयः । अनुरूपगुणादिमत्त्वे हेतुं सूचयंस्ता विशिनष्टि श्रियमिति । पूर्वं समुद्रमथनात् प्रादुर्भावसमय एव उरसि वक्षसि अभिलब्धो मानः सत्कारो यया ता श्रियं, लक्ष्मीरूपामित्यर्थः । गुणाः स्नेहादयः । शीलं स्वभावः । वयोऽवस्था । अंगं शरीरं । रूपं सौन्दर्यम् । गर्ववृद्धौ हेतुं सूचयंस्तं विशिनष्टि— य इति । त्रिरित्युपलक्षणम् । यो रामः त्रिस्सप्तकृत्वा महीं अराजबीजां राजबीजशून्यामकृत अकरोत्तस्य ॥ ७ ॥

ससामी गुर्वर्थं इति श्लोकं विवृण्वन्नाह— य इति । कदाचित् कैकेय्यासुष्टेन दशरथेन त्वदपेक्षित वरद्वयं दास्यामीति प्रतिश्रुत तत्र श्रीरामस्य यौवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य वनवासश्चेति वरद्वयं प्रार्थितम्, तदा सत्यरूपेण पाशेन परिवीतस्य परिवृतस्य स्त्रैणस्य स्त्रीवश्यस्यापि पितुर्निदेशं वनवासाज्ञां शिरसा जगृहे बहुमानपुरस्सरं अङ्गीकृतवान् । ततश्च सभार्यः सीतासहितः राज्यं राजाधिकारं श्रिय राजसम्पदं प्रणयिनः प्रेमवतो मात्रादीन् सुहृदो मित्राणि निवासं स्थानमयोध्यां च त्यक्त्वा वनं ययौ । दुस्त्यजस्यापि सहर्षत्यागे दृष्टान्तमाह— असूनिवेति । मुक्तसङ्गो विरक्तो योगी यथाऽसून् प्राणान् त्यजति तद्वदित्यर्थः ॥ ८ ॥ रक्षसो रावणस्य स्वसुर्भगिन्याः शूर्पणखायाः रूपं व्यकृत नासादिच्छेदनेन विकृतं अकरोत् । तथाकरणे हेतुमाह— अशुद्धबुद्धेरिति, कामातुरतया सीतायास्तिरस्कारे प्रवृत्ताया इत्यर्थः । ततस्तया प्रेरितान् तस्याः शूर्पणखायाः खरत्रिशिरोदूषणमुख्या बन्धवो येषु तांश्चतुर्दशसहस्र राक्षसान् जघान । तत्र साधन दर्शयन् विशिनष्टि— । अपारणीयं अलङ्घ्यं असह्य कोदण्ड धनुः पाणौ यस्य सः अटमान इतस्ततो वने सञ्चरन् जनशिक्षार्थं कृच्छ्रं कष्टं यथा भवति तथा उवास ॥ ९ ॥ ततश्च शूर्पणख्या मुखात्

**यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ॥ राज्यं श्रियं प्रणयिनः सुहृदो निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ८ ॥ रक्षस्स्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ॥ जघ्ने चतुर्दशसहस्रमपारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९ ॥ सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकन्धरेण ॥ जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो मारीचमाशु विशिखेन यथा कमुग्रः ॥ १० ॥ रक्षोधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् ॥ भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥ ११ ॥**

सीतायाः कथाश्रवणेन दीपितो हृच्छयः कामो यस्य तेन दशकन्धरेण रावणेन सीतां जिघृक्षुणा स्वयं तत्र गन्तु भीतेन सृष्टं प्रेषित मारीचं विलोक्य अद्भुतं स्वर्णमयमेणस्य हरिणस्येव वपुर्यस्य तेन सीतया क्रीडार्थं अपेक्षितेन मारीचेनाश्रमतोऽपकृष्टः सन् विशिखेन बाणेन त मारीचमाशु जघ्ने हतवान् । तत्र दृष्टान्तमाह— यथेति । यथा कं दक्षमुग्रो वीरभद्रो जघान तथेत्यर्थः । भवत इव तस्यापि सा मृगयाऽनर्थकरी जातेति [illegible] दर्शयति— नृपते इति ॥ १० ॥ तदेव दर्शयति— रक्ष इति । रक्षोधमेन रावणेन असमक्षं मृगानयनार्थं रामस्य तद्वृत्तज्ञानार्थं च लक्ष्मणस्य [illegible] वैदेहराजदुहितरि सीतायां अपयापितायां अपहृत्य लङ्कां प्रति प्रापितायां सत्यां तया प्रियया भार्यया वियुक्तो भ्राता [illegible] अकारेण स्त्रीसङ्गिनां दुःखोदर्कां गतिं प्रथयन् प्रख्यापयन् कृपणवत् दुःखिवच्चचारेत्यन्वयः । नित्यानन्दविग्रहस्य दुःखित्वासम्भवात् [illegible] । रावणस्याधमत्वमुपपादयन् दृष्टान्तमाह— वृकवदिति । विपिने रक्षकहीनं मेषं यथा वृको हरति तद्वदित्यर्थः ॥ ११ ॥

१ श्रीरामचन्द्र इत्यर्थोऽप्येवम् ।

आत्मनः स्वस्य कृत्यं प्रयोजनं सीतानिर्मोचनरूपं तदर्थं रावणेन सह युद्धे हतं कृत्यं पौरुषं यस्य तं गृध्रं जटायुषं दग्ध्वा तस्य पारलौकिकीं दाहादिक्रियां कृत्वा कबन्धं स्वग्रहणाय प्रसारितबाहुं राक्षसमहन्। ततः कपिभिः सह सख्यं विधाय अथानन्तरं वालिनि हते सति तैः कपिभिः दयितायाः सीतायाः गतिं बुद्ध्वा स श्रीरामः प्लवगेन्द्राणां वानरश्रेष्ठानां सैन्यैः सह वेलां समुद्रस्य तीरमगात्। ननु वानरसहायस्य तस्य कथमीश्वरत्वमित्यत आह– अजेति। अजभवाभ्यां ब्रह्मरुद्राभ्या अर्चितावङ्घ्री यस्य सः। तर्हि किमर्थं वानरान् सहायीकृतवांस्तत्राह– मनुज इति, मनुष्यनाट्यस्वीकारादित्यर्थः ॥ १२ ॥ तत्र त्रिरात्रमुपवासपूर्वकं प्रतीक्षतोऽपि सिन्धुर्यदा नोपस्थितः आत्मानमवज्ञाय स्थितस्तदा यस्य रोषविभ्रमेण क्रोधलीलया विवृत्तो यः कटाक्षस्तस्य पातेन सम्भ्रान्ता नक्रा मकराश्च यस्मिन् सः अतो भयेन गीर्णः स्तम्भितो घोषो येन सः सिन्धू रूपी मूर्तिमान् सन् अर्हणमर्घादिपूजोपहारं स्वशिरसि परिगृह्य

दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन् कबन्धं सख्यं विधाय कपिभिर्दयितागतिं तैः ॥ बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यै-र्वेलामगात् स मनुजोऽजभवार्चिताङ्घ्रिः ॥ १२ ॥ यद्रोषविभ्रमविवृत्तकटाक्षपातसम्भ्रान्तनक्रमकरो भयगीर्णघोषः ॥ सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥ १३ ॥ न त्वां वयं जडधियोऽनुविदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम् ॥ यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्योश्च भूतपतयः स भवान् गुणेशः ॥ १४ ॥

निधाय तत्पादारविन्दमुपगम्य शरणमागत्य एतद्वक्ष्यमाणं बभाषे इत्यन्वयः ॥ १३ ॥ तव ज्ञानं तु निर्मलान्तःकरणानामपि दुर्लभं जडधिया तथात्वे किं वक्तव्यमित्याशयेन सम्बोधयति– भूमन्निति। जडा मोहिता धीर्येषां ते वयमेतावत्कालपर्यन्तं त्वा नानुविदामः न जानीम इत्यन्वयः। इदानीं कथम्भूतं ज्ञातवानसीत्यपेक्षायामाह– जगतामधीशं नियन्तारमिति। तत्र हेतुमाह– आदिपुरुषमिति, सर्वकारणमित्यर्थः। तर्हि विकारित्वं स्यादित्याशङ्क्याह– कूटस्थमिति, निर्विकारमित्यर्थः। सर्वकारणस्य कथं निर्विकारित्वमित्याशङ्क्याह– यदिति लुप्तषष्ठ्यन्तं पृथक्पदम्। यस्य तव नियमात्सत्त्वतः सत्त्वगुणात् सुरगणा जाताः, रजसो गुणात् प्रजेशाः प्रजापतयो जाताः, मन्योस्तमोगुणात् भूतपतयो रुद्रादयो जाताः, स गुणेशः सत्त्वादिगुणाना-मीशो नियन्ता भवान्, अतो न तव विकारित्वमित्याशयः ॥ १४ ॥

तव तु न किमप्यशक्यमिति सूचयन् सम्बोधयति—हे वीरेति। कामं यथेष्टं जलमाक्रम्यापि प्रयाहि गच्छ, विश्रवसः प्रजापतेरवमेहं पुरीषतुल्य त्रैलोक्यं रावयत्याक्रन्दयतीति तथा तं दशकन्धरं जहि पत्नीं सीता अवाप्नुहि। यद्यपि मदीयं जलं तव प्रतिबन्धकं न भवति तथापि ते तव यशसो वितत्यै विस्ताराय इह जले सेतुं बध्नीहि। सेतुमुपेत्य दुष्करत्वं कर्मावेद्य दिग्विजयिनो भूपास्त्वद्यशो गास्यन्ति ॥ १५ ॥ तद्वाक्यमभिनन्द्य यत्कृतं तदाह—बद्ध्वेति। कपीन्द्राणां करैः कम्पितानि भूरुहाणामङ्गानि शाखादीनि येषु तैर्विविधानामद्रीणां कूटैः शिखरैः उदधौ सेतुं बद्ध्वा रघुपतिः श्रीरामः सुग्रीवादयः प्रमुखाः मुख्याः येषु तैरनीकैः सैन्यैः सह अग्रे सीतान्वेषणसमये हनुमतैव दग्धां लङ्कां विभीषणदृशा तत्प्रदर्शितमार्गेण आविशत् प्रविवेश ॥ १६ ॥ सा ससैन्येन श्रीरामचन्द्रेण प्रविष्टा लङ्का यथा गजकुलैर्ह्रदिनी विलोडिता व्याकुला भवति तथा तैर्विघूर्णिता व्याकुला जातेत्यन्वयः। वान-

कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् ॥ बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ १५ ॥ बद्ध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ॥ सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लङ्कां विभीषणदृशाऽऽविशदग्रदग्धाम् ॥ १६ ॥ सा वानरेन्द्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटङ्का ॥ निर्भज्यमानधिषणध्वजहेमकुम्भशृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ १७ ॥ रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ॥ पुत्रं प्रहस्तमतिकायविकम्पनादीन् सर्वानुगान् समहिनोदथ कुम्भकर्णम् ॥ १८ ॥ तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ॥ सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदर्क्षपनसादिभिरन्वितोऽगात् ॥ १९ ॥ तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः सीताभिमर्शहतमङ्गलरावणेशान् ॥ २० ॥

रेन्द्राणां बलैः सैन्यै रुद्धाः विहारादयो यस्यां सा। तत्र विहारः क्रीडास्थानम्। कोष्ठं धान्यागारादि। श्रीः कोशः। द्वारं गृहादीनाम्। गोपुरं पुरद्वारम्। सदः सभा। वलभी प्रासादादिपुरोभागाच्छादिनी। विटङ्कः कपोतपालिका। निर्भज्यमाना धिषणादयो यस्याः सा। तत्र धिषणं वेदिकादिस्थानम्। शृङ्गाटकं चतुष्पथः ॥ १७ ॥ रक्षःपतिः रावणस्तत् वानरैर्लङ्काविनाशं विलोक्य निकुम्भादीन् पुत्रमिन्द्रजितं प्रहस्तादींश्च सर्वाननुगान् भृत्यान् समहिनोत् प्रायुङ्क्त। अथ तेषां मरणानन्तरं कुम्भकर्णं च समहिनोत् ॥ १८ ॥ तामसिशूलादिभिर्दुर्गां यातुधानानां पृतनां सेनां सुग्रीवादिभिरन्वितः श्रीरामोऽभ्यगात्। मरुत्सुतो हनुमान्। ऋक्षो जाम्बवान् ॥ १९ ॥ ते सर्वे रघुपतेरनीकपाः सेनापतयोऽङ्गदाद्या इभादिभिर्यद्वरूथं रावणसैन्यं तद्द्वन्द्वं यथा भवति तथाऽभिपत्य सङ्गम्य सीताया अभिमर्शः स्पर्शस्तेन हतं मङ्गलं यस्य स रावण ईशो येषां तान् राक्षसान् द्रुमैर्गिरिभिर्गदाभिरिषुभिश्च जघ्नुरित्यन्वयः ॥ २० ॥

अथ रक्षःपती रावणः स्वबलस्य नष्टिं विनाशमवेक्ष्य रुष्टः क्रुद्धः सन् यानकं पुष्पकाख्यविमानमारुह्य श्रीराममभिससार योद्धुमाजगाम। अथ स्वस्यन्दने इन्द्ररथे मातलिना इन्द्रसारथिना उपनीते समानीते द्युमति दीप्तियुते तस्मिन् विभ्राजमानं श्रीरामं क्षुरप्रैः क्षुरधारातुल्याग्रैः निशितैः शरैरहनत्। आर्षः अहनदित्यर्थः ॥ २१ ॥ तमेवं ताडयन्तं रावणं श्रीराम आह। तद्दर्शयति— । हे पुरुषादपुरीष पुरुषादा राक्षसास्तेषां पुरीषतुल्य, नोऽस्माकमसमक्षं असता दुरात्मना त्वया यत्कान्ता हृता तस्य जुगुप्सितस्य कर्मणः फलमद्यैव त्यक्तत्रपस्य निर्लज्जस्य तव यच्छामि ददामीत्यन्वयः। सीताहरणस्य जुगुप्सितत्वं दृष्टान्तेन स्पष्टयति—श्ववदिति। श्वा यथा असमक्षं गृहं प्रविश्य वस्तु हरति तद्वदित्यर्थः। फलदाने दृष्टान्तमाह— काल इति। अधर्मकर्तुः पुंसः तत्फलं यथा कालो यच्छति तथेत्यर्थः। तद्दाने स्वसामर्थ्यमाह—अलङ्घ्यवीर्य इति ॥ २२ ॥ एवमधिक्षिपन् धनुषि सन्धितं बाणमुत्ससर्ज प्रायुङ्क्त। स च बाणो वज्रमिव तस्य रावणस्य हृदयं बिभेद। स रावणो दशभिर्मुखैरसृक् रुधिरं वमन् तत्रत्ये जने हा हेति जल्पति सति विमानात् पुष्पकादपतत्।

रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ॥ स्वस्यन्दने द्युमति मातलिनोपनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥ रामस्तमाह पुरुषादपुरीष यन्नः कान्ताऽसमक्षमसताऽपहृता श्ववत्ते ॥ त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः ॥ २२ ॥ एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ॥ सोऽसृग्वमन् दशमुखैर्न्यपतद्विमानाद्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥ ततो निष्क्रम्य लङ्कायां यातुधान्यः सहस्रशः ॥ मन्दोदर्या समं तस्मिन् प्ररुदत्य उपाद्रवन् ॥ २४ ॥ स्वान्स्वान् बन्धून् परिष्वज्य लक्ष्मणेषुभिरर्दितान् ॥ रुरुदुः सुस्वरं दीना भ्रन्त्य आत्मानमात्मना ॥ २५ ॥ हा हताः स्म वयं नाथ लोकरावण रावण ॥ कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥ २६ ॥

अत्र दृष्टान्तमाह—सुकृती यथा रिक्तः क्षीणपुण्यः स्वर्लोकात् पतति तद्वदित्यर्थः॥ २३ ॥ ततस्तदनन्तरं मन्दोदर्या रावणभार्यया सह प्ररुदन्त्यः सहस्रशो यातुधान्यो लङ्कायां निष्क्रम्य यत्र रावणः पतितस्तस्मिन् देशे उपाद्रवन् आजग्मुः ॥ २४ ॥ तत्र लक्ष्मणस्येषुभिरर्दितान् हतान् स्वान्स्वान् बन्धून् नृपतीन् परिष्वज्य आत्मना स्वेनैव आत्मानं देहं भ्रन्त्यो दीनाः दुःखिताः सुस्वरं रुरुदुरित्यन्वयः ॥ २५ ॥ रोदनप्रकारं दर्शयति— हा हता इति। हे रावण वयं लङ्कावासिनः सर्वे हताः स्म। हेति खेदं द्योतयन्ति। कथमित्यपेक्षायामाह—कमिति। परैः शत्रुभिरर्दिता पीडिता त्वद्विहीना त्वया रहिता लङ्का लङ्कास्थो जनः कं शरणं यायादित्यन्वयः। मद्राहित्येऽपि किमित्याशङ्क्य रक्षकाभावादित्याशयेन सम्बोधयन्ति— नाथेति। अन्यः कश्चित् रक्षकः प्रकल्पनीय इत्याशङ्क्य तत्र सर्वैव समर्थत्वादित्याशयेन पुनः सम्बोधयन्ति—लोकरावणेति, लोकान् जनान् रावयतीति तथा ॥ २६ ॥

भाग्यवशात् बह्वीषु स्त्रीषु सतीष्वप्येवं सीतायामासक्तिर्न युक्तेति सूचयन्त्यः सम्बोधयन्ति— महाभागेति । कामवश गतो भवान् सीतायास्तेजसः प्रभावं नैव वेद नैव ज्ञातवान्, येन तेजोऽनुभावेनेमां दशां मरणावस्थां नीतः प्राप्तोऽसि ॥ २७ ॥ कुलमुख्यस्यैतदत्यन्तमनुचितमित्याशयेन सम्बोधयन्ति— कुलनन्दनेति । वयमेषा लङ्का च त्वया सीतापहारपूर्वकप्राणत्यागेन विधवा कृता । तथा स्वदेहो गृध्राणामन्नं भक्ष्यः कृतः । आत्मा जीवस्तु नरकहेतवे नरकभोगाय कृतः ॥ २८ ॥ ततश्च कोशलेन्द्रेण श्रीरामेणानुमोदितः आज्ञप्तो विभीषणः स्वानां मृताना रावणादीनां पितृमेधविधानेन यत्साम्परायिकमौर्ध्वदेहिकं यत्कर्मोक्तं तच्चक्रे इत्यन्वयः ॥ २९ ॥ ततस्तदनन्तरं भगवान् श्रीरामः अशोकवने य आश्रमस्तस्मिन् शिंशपावृक्षस्य मूलमाश्रिता

नैवं वेद महाभाग भवान् कामवशं गतः ॥ तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥ २७ ॥ कृतैषा विधवा लङ्का वयं च कुलनन्दन ॥ देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥ २८ ॥ श्रीशुक उवाच ॥ स्वानां विभीषणश्चक्रे कोशलेन्द्रानुमोदितः ॥ पितृमेधविधानेन यदुक्तं साम्परायिकम् ॥ २९ ॥ ततो ददर्श भगवानशोकवनिकाश्रमे ॥ क्षामां स्वविरहव्याधिं शिंशपामूलमास्थिताम् ॥ ३० ॥ रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत ॥ आत्मसन्दर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ ३१ ॥ आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ॥ विभीषणाय भगवान् दत्त्वा रक्षोगणेशताम् ॥ लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम् ॥ ३२ ॥ अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ उपगीयमानचरितः शतधृत्यादिभिर्मुदा ॥ ३३ ॥

मूले स्थितां स्वस्य विरहेण विश्लेषेण व्याधिर्यस्याः तां अतएव क्षामां कृशां सीतां ददर्शेत्यन्वयः ॥ ३० ॥ पारवश्येन दीनां आत्मनः स्वस्य सन्दर्शनेन य आह्लादः तेन विकसन्मुखं पङ्कजमिव यस्यास्तां प्रियतमां भार्यां सीतां वीक्ष्यान्वकम्पत कृपां कृतवान् ॥ ३१ ॥ ततश्च तां यानं पुष्पकमारोप्य भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्यां सह हनुमता च युतः स्वयमपि यानमारुरुहे । ततश्च रक्षोगणाधिपत्यमाकल्पान्तमायुर्लङ्कां च विभीषणाय दत्त्वा चीर्णमनुष्ठितं व्रतं पितुरनुशासनरूपं येन स भगवान् रामः पुरीमयोध्यां ययौ प्रतस्थे इत्यर्थः ॥ ३२ ॥ व्रजन्तं वर्णयति— पथि लोकपालैरिन्द्रादिभिः अर्पितैः कुसुमैरवकीर्यमाणः आच्छाद्यमानः तथा शतधृत्यादिभिः ब्रह्मादिभिः मुदा हर्षेण उपगीयमानं चरितं यस्य तथाभूतः पुरीं ययावित्यन्वयः ॥ ३३ ॥

---

१ यथाविधि पूर्वश्लोकस्थक्रियया सम्बन्धः ।

एवं त्वरया गमने हेतुं सूचयन्नाह— गोमूत्रयावकमिति । गोमूत्रपक्वयवान्नभोजिनं वल्कलमेवाम्बरं यस्य तं जटिलं जटाधरं तथा स्थण्डिले दर्भैरास्तीर्णे भूतले भूप्रदेशे शेते इति तथाभूतं भ्रातरं भरतं श्रुत्वा अतप्यत् परितताप । तत्र हेतुमाह— महाकारुणिक इति ॥ ३४ ॥ भरतः अग्रजं ज्येष्ठभ्रातरं श्रीरामं प्राप्तं पुरीमागच्छन्तमाकर्ण्य श्रुत्वा तत्पादुके स्वशिरसि निधाय पौरादिभिः सहितः स्वशिबिरात् रामं विनाऽयोध्यां न प्रवेक्ष्यामि इति सङ्कल्प्य यत्र स्वनिवासं निर्मितवांस्तस्मान्नन्दिग्रामाख्यात्, प्रत्युद्यतोऽभिमुखं ययावित्यन्वयः ॥ ३५ ॥ गीतैः वादित्राणां मृदङ्गादीनां निस्स्वनैः शब्दैः ब्रह्म वेदं घोषेण उच्चस्वरेण मुहुः पठद्भिर्ब्रह्मवादिभिश्च सह ॥ ३६ ॥ स्वर्णरसाक्ताः कक्षाः प्रान्ताः यासां ताः ताभिः पताकाभिर्हैमैः स्वर्णरचितैः चित्रा ध्वजा येषु तैः सन्तोऽश्वा येषु तैः रुक्मनिर्मिताः सन्नाहाः आच्छादनानि येषु तैर्विशेषणचतुष्टयोपेतैः रथैः पुरटवर्मभिः स्वर्णकवचधारिभिर्भटैश्च सह ॥ ३७ ॥ श्रेणीभिः[1] ताम्बूलिकादिभिः तत्तद्वस्तुविक्रयपरैः वराणा समूहो वारः स एव मुख्यो[2] जीविकासाधन यासा ताभिर्वेश्याभिः पदानुगैः पादचारिभिः भृत्यैश्च सह पारमेष्ठ्यानि महाराजार्हाणि च्छत्रचामरादीनि उच्चावचानि पण्यानि उपायनानि चादाय ॥ ३८ ॥ प्रेम्णा प्रक्लिन्नं आर्द्रीभूतं हृदयमीक्षणे नेत्रे च यस्य सः भरतः पादुके न्यस्य निधाय पादयोर्न्यपतत् । ततः प्राञ्जलिः संयोजिताञ्जलिर्बाष्पलोचनश्च सन्नग्रे तस्थाविति शेषेणान्वयः ॥ ३९ ॥ ततश्च श्रीरामस्तं भरतं चिरं यथा भवति तथा आश्लिष्य आलिङ्ग्य नेत्रजैर्जलैरानन्दबिन्दुभिश्च स्नापयन् लक्ष्मणसीताभ्यां सह विप्रेभ्यो ये चार्हसत्तमा नमस्कार्याः कुलवृद्धास्तेभ्यश्च स्वयं नमश्चक्रे, प्रजाभिश्च स्वयं नमस्कृतो बभूवेत्यन्वयः ॥ ४० ॥

गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥ महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम् ॥ ३४ ॥ भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ॥ ३५ ॥ नन्दिग्रामात् स्वशिबिराद्गीतवादित्रनिस्स्वनैः ॥ ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ॥ ३६ ॥ स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ॥ ३७ ॥ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥ पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ॥ ३८ ॥ पादयोर्न्यपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ॥ ३९ ॥ तमाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ॥ रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ॥ तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ ४० ॥

१ श्रेणीभिः तैलिकताम्बूलिकाभिः इति सुबो० । एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषा समूहैरित्यर्थः । २ वार' सङ्केतदिन मुख्य यासां ताभिरिति सुबो० ।

उत्तराः कोशलाः उत्तरकौशलदेशस्था जनाः चिरादागत पतिं श्रीराममवलोक्य मुदा हर्षेण माल्यैः पुष्पैः किरन्तः उत्तरासङ्गान् उत्तरीयान् विधुन्वन्तश्चालयन्तो ननृतुरित्यन्वयः ॥ ४१ ॥ अयोध्याप्रवेशप्रकारमाह— पादुकेति सार्द्धैस्त्रिभिः । भरतः पादुके अगृह्णात् । विभीषणः सुग्रीवश्च चामरव्यजनोत्तमे अगृह्णीताम् । मरुत्सुतो हनुमान् श्वेतच्छत्रमगृह्णात् ॥ ४२ ॥ धनुश्च निषङ्गौ च तान् शत्रुघ्नोऽगृह्णात् । तीर्थजलभृतं कमण्डलुं सीता अबिभ्रत् । खड्गमङ्गदोऽगृह्णात् । हैमं स्वर्णखचितं चर्मखेटं च ऋक्षराट् जाम्बवान् अबिभ्रत् । एवमेव राजवृत्तं च तव विदितमेवेत्याशयेन सम्बोधयति— नृपेति ॥ ४३ ॥ हे राजन् स्त्रीभिः वारमुख्याभिरन्वितः परिवृतो बन्दिभिश्च स्तूयमानः पुष्पकस्थो भगवान् रामः उदितः ग्रहैर्गुरुशुक्रादिभिर्वृतश्चन्द्र इव रेजे इत्यन्वयः ॥ ४४ ॥ भ्रातृभिर्भरतादिभिश्च नन्दितः अनुमोदितः सोऽपि रामः सोत्सवां मार्जनादिपूर्वकध्वजादिभिरलङ्कृतां

धुन्वन्त उत्तरासङ्गान् पतिं वीक्ष्य चिरागतम् ॥ उत्तराः कोशला माल्यैः किरन्तो ननृतुर्मुदा ॥ ४१ ॥ पादुके भरतो
ऽगृह्णाच्चामरव्यजनोत्तमे ॥ विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ ४२ ॥ धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ॥
अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ॥ ४३ ॥ पुष्पकस्थोऽन्वितः स्त्रीभिः स्तूयमानश्च बन्दिभिः ॥ विरेजे भगवान्राजन्
ग्रहैश्चन्द्र इवोदितः ॥ ४४ ॥ भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत्पुरीम् ॥ ४५ ॥ प्रविश्य राजभवनं गुरुपत्नीः
स्वमातरम् ॥ गुरून् वयस्यावरजान् पूजितः प्रत्यपूजयत् ॥ ४६ ॥ वैदेही लक्ष्मणश्चैव यथावत् समुपेयतुः ॥ ४७ ॥
पुत्रान् स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः ॥ आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः ॥ ४८ ॥

प्रमुदितजनपूर्णां पुरीमयोध्यां प्राविशदित्यन्वयः ॥ ४५ ॥ ततो राजभवनं प्रविश्य गुरुपत्नीः कैकेय्याद्याः स्वमातरं कौशल्यां गुरून् वसिष्ठादीन् वयस्यान् समानवयस्कानवरजांश्च यथोचितं तैः पूजितः सन्मानितस्तान् इत्यर्थः ॥ ४६ ॥ तथा वैदेही लक्ष्मणश्च यथावद्यथायोग्य पूजितौ तान् पूजितवन्तौ च समुपेयतुः सम्यक् राजभवनं विविशतुरित्यन्वयः ॥ ४७ ॥ स्वमातरः कौशल्यादयः पुत्रान् समीक्ष्योत्थिताः सत्यः अङ्के आरोप्य बाष्पौघैः हर्षजन्याश्रुसङ्घैरभिषिञ्चन्त्यः शुचस्तद्विरहशोकान् विजहुः त्यक्तवत्यः । उत्थाने दृष्टान्तमाह— प्राणानिति । तन्वः प्राणरहिताः मूर्छिता देहाः यथा प्राणान् प्राप्योत्थिता भवन्ति तथा रामादिविरहेण मूर्छितास्तान् दृष्ट्वोत्थिता जाता इत्यर्थः ॥ ४८ ॥

अथ गुरुर्वसिष्ठः कुलवृद्धः समं सह रामस्य जटा निर्मुच्य चतुस्सिन्धुजलादिभिर्विधिवद्राममभ्यषिञ्चत्, राज्येऽभिषिक्तवानित्यन्वयः । तत्र दृष्टान्त-माह— यथेति । पूर्वमृषयो यथेन्द्रं राज्येऽभ्यषिञ्चंस्तथैवेत्यर्थः । आदिशब्देन गङ्गायमुनादिजलग्रहणम् ॥ ४९ ॥ एवं कृतं शिरस्स्नानं येन सः शोभने वाससी यस्य सः स्रग्वी माळाधारी अन्यैश्च भूषणैरलङ्कृतः तथा सुवासोभिः सुष्ठ्वलङ्कृतैश्च भ्रातृभिः अलंकृतया भार्यया सीतया च सह श्रीरामो बभौ अत्यशोभत ॥ ५० ॥ ततो भ्रात्रा भरतेन प्रणिपत्य प्रसादितः प्रार्थितः सन् राजासनमग्रहीत् ॥ ५१ ॥ श्रीरामराज्यगुणान्वर्णयति—प्रजा इति । स्वधर्मनिरता इति स्वाधिकारवासिन्यः प्रजाः यथा पिता पुत्रान्पाति, तथा रामो जुगोप । ताश्च तं रामं पितरं मेनिरे । प्रजानां धर्मनिरतत्वमेव स्पष्ट-यति— वर्णानामाश्रमाणां च ये गुणाः पञ्चमहायज्ञादयस्तैरन्विता इति ॥ ५२ ॥ तदा रामे राजनि त्रेताया वर्तमानायां त्रिपाद्धर्मयुक्ते त्रेतायुगे

जटा निर्मुच्य विधिवत्कुलवृद्धैः समं गुरुः ॥ अभ्यषिञ्चद्यथैवेन्द्रं चतुस्सिन्धुजलादिभिः ॥ ४९ ॥ एवं कृतशिरस्स्नानः
सुवासाः स्रग्व्यलङ्कृतः ॥ स्वलङ्कृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥ ५० ॥ अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसा-
दितः ॥ ५१ ॥ प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥ जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥ ५२ ॥ त्रेतायां
वर्तमानायां कालः कृतसमोऽभवत् ॥ रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥ ५३ ॥ वनानि नद्यो गिरयो वर्षाणि
द्वीपसिन्धवः ॥ सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ॥ ५४ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥
मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे ॥ ५५ ॥

वर्तमानेऽपि चतुष्पाद्धर्मयुक्तकृतयुगसमः कालोऽभवत् । श्रीरामप्रवर्तित एव चतुष्पाद्धर्मः प्रवृत्त इत्याशयेन तं विशिनष्टि— धर्मज्ञ इति । कथं तेन धर्मः प्रवर्तित इत्यपेक्षायामाह— सर्वभूतसुखावह इति । दुःखितानामेव प्रायेणाधर्मप्रवृत्तिः भवति, रामेण तु सर्वसुखसम्पादनात् कस्याप्यधर्मे प्रवृत्तिर्नाभूत् इत्याशयः ॥ ५३ ॥ महत्कुलोत्पन्नत्वात्तवात्र विश्वासो युक्त इत्याशयेन सम्बोधयति— भरतर्षभेति । अधोक्षजे अचिन्त्यभावे रामे राजनि सति वना-दयः सर्वे प्रजानां कामदुघा मनोरथपूरका आसन्नित्यन्वयः । आधिर्मनोव्यथा व्याधिः शरीरजा ग्लानिः दैन्यं दुःखं प्रियविनाशजः सन्तापः शोकः अनुपपत्त्या निर्वाहोपायचिन्तनं भयमागाम्यनिष्टज्ञानात् व्याकुलता क्लमः श्रमः, प्रजानामाध्यादयो नासन् अनिच्छतां मृत्युश्च नासीत् ॥ ५४ ॥ ५५ ॥

१ निर्मुच्य बापयित्वेति सुबोधिन्याम् । २ श्लोकद्वयस्यान्वयोऽयमवसेयः ।

एकपत्नीव्रतधरः स्त्र्यन्तरपरिग्रहरहितः राजर्षीणां महतामेव चरित यस्य सः शुचिः रागलोभादिदोषरहितोऽपि श्रीरामः गृहमेधीय गृहस्थ प्रति विहितं स्वधर्म लोकस्य शिक्षयन् स्वयमाचरन् अनुष्ठितवान् ॥ ५६ ॥ प्रश्रयेण विनयेन अवनता नम्रा धिया सूक्ष्मबुद्ध्या भावज्ञा अभिप्रायज्ञा च सती सीता प्रेमादिभिर्भर्तुः श्रीरामस्य मनोऽहरत् वशीकृतवतीत्यन्वयः । तत्र प्रेम प्रीत्यतिशयः, अनुवृत्तिः परिचर्या, शीलं सुखभावो, ह्रीर्लज्जा ॥ ५७ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ दशमो विवृतो रामप्रादुर्भावो निरूपितः ॥ ३ ॥ ॥ ७ ॥ ॥ अयोध्यामावसन्नामो भ्रातृभिर्भरतादिभिः ॥ यज्ञादि कृतवान् यत्तदेकादशे निरूप्यते ॥ १ ॥ ॥ तस्य धर्माचरणमेव दर्शयति— भगवानित्यादिना । राम आचार्यवान्

एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन् ॥ ५६ ॥ प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ॥ धिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणे नवम-स्कन्धे सूर्यवंशनिरूपणप्रकरणे श्रीरामप्रादुर्भावनिरूपणं नाम दशमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ भगवानात्मनाऽऽत्मानं राम उत्तमकल्पकैः ॥ सर्वदेवमयं देवमीजे आचार्यवान् मखैः ॥ १ ॥ होत्रेऽददाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ॥ अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥ आचार्याय ददौ शेषां यावती भूस्तदन्तरा ॥ मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निस्स्पृहः ॥ ३ ॥ इत्ययं तदलङ्कारवासोभ्यामवशेषितः ॥ तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥

सन् उत्तमकल्पकैः उत्तमसाधनैः मखैरात्मना स्वयमेव आत्मानमेव ईजे पूजितवानित्यन्वयः । ननु मखैर्देवा एवेज्यन्ते तैः कथमात्मयजन-मित्याशङ्क्याह— सर्वदेवमयमिति, देवाना तदङ्गत्वादित्यर्थः । तत्र हेतुः— भगवानिति । भगवतः कथं मनुष्येषु जन्म तत्राह— देवमिति । मनुष्य-क्रीडारतमित्यर्थः ॥ १ ॥ तद्दत्तां दक्षिणामाह— होत्र इति त्रयेण ॥ २ ॥ तदन्तरा तासां दिशामन्तरा मध्ये यावती भूरवशिष्टा तामाचार्याय ददौ । एवं सर्वस्वदाने तदभिप्रायमाह— इद कृत्स्न भूमण्डलं ब्राह्मणः प्रतिग्रहीतुमर्हतीति मन्यमान इति । एवमभिप्रायेऽपि हेतुमाह— निस्स्पृह इति । परमा-नन्दस्वरूपलाभेनैव विषयभोगेषु निस्स्पृह इत्यर्थः ॥ ३ ॥ इत्येवं दानेनायं श्रीरामस्तदा शरीरस्यालङ्कारवासोभ्यामेव अवशेषितः तद्व्यतिरिक्तं सर्वं ददावित्यर्थः । तथा रामवत् राज्ञी सीताऽपि देहादप्यलङ्कारानुत्तार्य प्रदाय केवलं सौमङ्गल्यमात्रेण नासाभरणवस्त्राद्यावश्यकेनावशेषिता बभूव ॥ ४ ॥

ते होत्रादयो ब्राह्मणा एव देवा देववदाराध्या यस्य तस्य श्रीरामस्य सत्सु सदाचारनिष्ठेषु तद्वदान्यत्वयुक्तं वात्सल्यं प्रीतिं वीक्ष्य प्रीताः प्रसन्नचित्ताः क्लिन्नधियः स्नेहार्द्रचित्तास्तस्मै रामाय प्रत्यर्प्य समर्प्य वयं भूमिपालनेऽसमर्थाः अतस्त्वमेव पालयेति विज्ञाप्येदं वक्ष्यमाणं बभाषिरे ॥ ५ ॥ तद्भाषणमेव दर्शयति— अप्रत्तमिति । सर्वदाने सामर्थ्यं सूचयन्तः सम्बोधयन्ति— परमेश्वरेति । तदुपपादयन्तः सम्बोधयन्ति— भगवन्निति । त्वया नोऽस्मभ्यं किं नु अप्रत्तं किं न दत्तं ? अपितु सर्वमेव दत्तमित्यर्थः । तत्र हेतुमाहुः— यदिति । यस्मान्नोऽस्माकमन्तर्हृदयं प्रविश्य स्वरोचिषा स्वप्रकाशेन तमः ससारदुःखहेतुं परमपुरुषार्थमोक्षप्रतिबन्धकमज्ञानं हंसि नाशयसि ॥ ६ ॥ एवमुक्त्वा तस्मै परमोपकारिणे प्रत्युपकारेऽसामर्थ्यमालक्ष्य नमस्कुर्वन्ति— नम इति । ब्रह्मणि ब्रह्मकुले साधवो ब्रह्मण्यास्तेषु देवः स्वतेजसा दीप्यमानः श्रेष्ठ इति ब्रह्मण्यदेवस्तस्मै, अकुण्ठा देशकालवस्त्वपरिच्छिन्ना मेधा ज्ञानं यस्य तस्मै, उत्तमः

**ते[2] तु ब्राह्मणदेवस्य वात्सल्यं वीक्ष्य सत्सु तत् ॥ प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥ ब्राह्मणा ऊचुः ॥ अप्रत्तं[1] नस्त्वया किं नु भगवन् भुवनेश्वर ॥ यन्नोऽन्तर्हृदयं विश्य तमो हंसि स्वरोचिषा ॥ ६ ॥ नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ॥ उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये ॥ ७ ॥ कदाचिल्लोकजिज्ञासुर्गूढो[3] रात्र्यामलक्षितः ॥ चरन् वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ॥ ८ ॥ नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ॥ स्त्रीलोभी बिभृयात् सीतां रामो नाहं भजे पुनः ॥ ९ ॥**

श्लोको यशो येषा तेषां धुर्याय मुख्याय, न्यस्तदण्डैः भूतद्रोहरहितैः सर्वभूतसुहृद्भिरर्पितौ चित्ते निहितावङ्घ्री यस्य तस्मै श्रीरामाय नमः ॥ ७ ॥ कदाचिल्लोकजिज्ञासुर्लोकः किं वदतीति ज्ञातुमिच्छुः अतएव गूढः प्रच्छन्नवेषः अतएवेतरैरलक्षितः रात्र्यां तत्र पुर्यां चरन् कस्यचित्पुरुषस्य स्वभार्यामुद्दिश्य उच्यमाना वाचोऽशृणोत् ॥ ८ ॥ ता वाचो दर्शयति— नेति । अह त्वा न बिभर्मि न धारयामि न पुष्णामि च । तत्र हेतुमाह— दुष्टामिति । दुष्टत्वमेवाह— असतीमिति, व्यभिचारिणीमित्यर्थः । व्यभिचारमेव स्पष्टयति— परवेश्मगामिति, परस्य पुरुषान्तरस्य वेश्म गृहं गच्छतीति तथा तामित्यर्थः । ननु रावणवेश्मगां सीतां रामः कथमबिभ्रदित्याशङ्क्याह— स्त्रीलोभीति । कामपारवश्याद्रामः परवेश्मगामपि सीतां बिभृयात् अबिभ्रत् । अहं तु पुनः स्त्रीपारवश्यरहितस्त्वां न भजे, नाङ्गीकुर्यामित्यर्थः ॥ ९ ॥

१ अज्ञानं वा । २ ' ते तु ब्रह्मण्यदेवस्य वात्सल्य वीक्ष्य सत्सुतम ' इति क्वचित्पाठ । ३ शुकोक्तिरियम् ।

इत्येवं बहुमुखात् नानाविधवादिनः तथापि दुराराध्यात् प्रबोधयितुमशक्यात् । तत्र हेतुमाह— असविदः अतत्त्वज्ञात् लोकात् जनाद्भीतेन पत्या श्रीरामेण त्यक्ता सीता प्राचेतसस्य वाल्मीकेराश्रम प्रापेति ॥ १० ॥ अन्तर्वत्नी गर्भिणी प्रसवकाले आगते सति यमौ सहजौ द्वौ कुशो लव इति ख्यातौ लोकप्रसिद्धौ सुतौ सुषुवे । तयोः सुतयोः क्रियाः जातकर्मादिरूपाः मुनिर्वाल्मीकिश्चक्रे ॥ ११ ॥ तथाऽङ्गदादयः द्वौ द्वौ पुत्रौ लक्ष्मणादीना बभूवतुः । स्पष्टमन्यत् ॥ १२ ॥ दिशां विजये भरतः कोटिशो गन्धर्वान् जघ्ने हतवान् । तदीयं धनमानीय सर्वं राज्ञे श्रीरामाय न्यवेदयत् ॥ १३ ॥ तथा शत्रुघ्नो मधोरसुरस्य पुत्रं लवणाख्यं राक्षसं हत्वा तस्मिन् मधुवने मथुरां नाम प्रसिद्धां पुरीं निर्ममे ॥ १४ ॥ सीता यतोऽन्तर्वत्नी भर्त्रा रामेण विवासिता अतः प्रसवपर्यन्तमेव स्थिता, तदनन्तरं तु तनयौ कुशलवौ मुनौ वाल्मीकौ निक्षिप्य तदधीनौ कृत्वा रामस्य चरणौ ध्यायन्ती भुवो विवरं प्रविवेश । एवं निरपराधायास्तस्याः

इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥ अन्तर्वत्न्या गते काले यमौ सा सुषुवे सुतौ ॥ कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥ ११ ॥ अङ्गदश्चित्रकेतुश्च लक्ष्मणस्याऽऽत्मजौ स्मृतौ ॥ तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ॥ १२ ॥ गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् ॥ तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥ १३ ॥ शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ॥ हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥ १४ ॥ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ॥ ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥ तच्छ्रुत्वा भगवान्रामो रुन्धन्नपि धिया शुचः ॥ स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥ १६ ॥ स्त्रीपुम्प्रसङ्ग एतादृक् सर्वत्रैव भयावहः ॥ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः ॥ १७ ॥

निस्सारणस्य विवरप्रवेशरूपायाश्चेश्वरलीलाया आश्चर्यं द्योतयन्नाह— हेति ॥ १५ ॥ तस्याः विवरप्रवेशं श्रुत्वा शुचः जातानि शोकाश्रूणि धिया विवेकेन रुन्धन्नपि रामः ईश्वरः विषयेष्वनासक्तो जितेन्द्रियोऽपि तस्यास्तांस्तान् सौशील्यादिगुणान् स्मरन् रोद्धुं नाशक्नोदित्यन्वयः । जितेन्द्रियत्वे हेतुमाह— भगवानिति ॥ १६ ॥ ननु जितेन्द्रियो भगवान् किमभिप्रायः सन्नेवं रोदननाट्यं कृतवानित्यपेक्षायामाह— स्त्रीपुमिति । स्त्रीपुंसयोः प्रसङ्गः आसक्तिरेतादृक् इति प्रदर्शयितुमिति शेषः । कीदृगित्यपेक्षायां तद्विवृणोति— ईश्वराणामपि सर्वत्रैव भयमावहतीति तथा । गृहे एव चेतो यस्य तस्य ग्राम्यस्य गृहस्थस्य भयावह इति तु किमुत किं वक्तव्यम् ? । भयशब्दः शोकमोहादेरप्युपलक्षकः । सर्वत्र त्रासमावह इति पाठान्तरम् । विभक्तेर[1]लुगार्षः ॥ १७ ॥

१ 'त्रासमावह' इत्येकपदपाठेऽलुक्समास इत्यर्थः ।

ततऊर्ध्वं सीताविवरप्रवेशश्रवणानन्तरं ब्रह्मचर्यं धारयन् स्त्र्यन्तरपरिग्रहं वर्जयन् प्रभुः श्रीरामः त्रयोदशाब्दानां साहस्रमखण्डितमविच्छिन्नं यथा स्यात्तथा अग्निहोत्रमजुहोदित्यन्वयः। न च रामायणे 'दशवर्षसहस्राणि दशवर्षशतानि च ॥ रामो राज्यमुपासित्वा' इत्येकादशवर्षसहस्राणि रामराज्यमुक्तं अत्र तु त्रयोदशाब्दसहस्राणीति विरोधः शङ्क्यः कल्पभेदेन तत्परिहारात् ॥ १८ ॥ ततश्च रामः स्मरता तद्भक्तानां हृदि स्वपादपल्लवं विन्यस्य संसारसागरोत्तरणाय ध्येयत्वेनावलम्बं विधाय स्वयमात्मज्योतिः प्रकाशात्मकं स्वलोकमगात्। चतुर्विधफलाकाङ्क्षिभिस्तु श्रीरामचरणकमलमवश्यमेव ध्येयं तस्य भक्तवश्यतया तन्मनोरथपूरकत्वात्, भक्तवश्यत्व तु दशरथाज्ञापालकतया दण्डकारण्यादिदुःखसहनान्निश्चेयमित्याशयेन पादपल्लवं विशिनष्टि— विद्धं दण्डककण्टकैरिति ॥ १९ ॥ यद्यपि कविभिरिदं कपिसहायेन कृतं जलधिबन्धनमस्त्रपूगैश्च रक्षसा वध आश्चर्यमिव वर्णितं तथापि तस्य रघुपतेरिदं यशः स्तुतियोग्यं न भवति। तत्र हेतुमाह— अधिकसाम्याभ्यां विमुक्तं धाम प्रभावो यस्य तस्य किं शत्रुहनने कपयः सहाया इति। तर्हि

**ततऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः ॥ त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥ स्मरतां हृदि विन्यस्य विद्धं दण्डककण्टकैः ॥ स्वपादपल्लवं राम आत्मज्योतिरगात्ततः ॥ १९ ॥ नेदं यशो रघुपतेः सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः ॥ रक्षोवधो जलधिबन्धनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥ यस्यामलं नृपसदस्सु यशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ॥ तं नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥ २१ ॥**

किमिति सहायतयाऽङ्गीकृतवास्तत्राह— सुराणा याच्ञया आत्ता स्वीकृता लीलार्था तनुर्येन तस्येति। भक्तवात्सल्यप्रदर्शनार्थं लीलया कप्यादीना सहायतया ग्रहणं, न तु स्वस्यासामर्थ्येन रक्षसा वधार्थमेवेति भावः ॥ २० ॥ एवंविधलीलाऽपि किमर्थमित्यपेक्षायां तत्प्रयोजनं दर्शयन् शरणं व्रजति— यस्येति। यस्यामलं शुद्धं शास्त्राविरुद्धं यशोऽधुनाऽपि नृपाणा सदस्सु सभासु ऋषयो मार्कण्डेयादयो गायन्ति, तं नाकपालाः स्वर्गपाला देवा वसुपालाः कुबेरादयः पृथ्वीपालास्तेषां किरीटैर्जुष्टं पादाम्बुजं यस्य तं रघुपतिं शरणं प्रपद्ये इत्यन्वयः। तमित्यत्र तदिति जुष्टेत्यत्र जुष्टमिति रघुपतिमित्यत्र रघुपतेरिति च पाठे तत्तस्य रघुपतेर्नाकपालादिजुष्टं पादाम्बुजं शरणं प्रपद्ये इत्यन्वयः। गानफलं सूचयन्नाह— अघघ्नमिति, वक्तृश्रोतॄणा पापविनाशकमित्यर्थः। अतएव दिगिभेन्द्रपट्टमिभेन्द्राणा पट्टवदाभरणरूपं सर्वतो गतित्वेन तत्पर्यन्तव्याप्तमित्यर्थः ॥ २१ ॥

१ 'तन्नाकपालवसुपालकिरीटजुष्ट पादाम्बुज रघुपते शरण प्रपद्ये' इत्येवरूपे पाठे।

तदानीं यैर्जनैः श्रीरामः सस्पर्शादिविषयीकृतः ते सर्वेऽपि कोशलदेशवासिनो यत्र यत्स्थान योगिनो गच्छन्ति तत्स्थान ययुः, मुक्ता बभूवुरित्यर्थः। संविष्टः उपवेशितः ॥ २२ ॥ तच्चरितश्रवणफलमाह— पुरुष इति। त्वया बहुशः श्रुतमतः कृतार्थोऽसीति सूचयन् सम्बोधयति— राजन्निति। आनृशंस्य-परः क्रौर्यादिदोषरहितः पुरुषः रामचरितं श्रवणैः श्रोत्रेन्द्रियवृत्तिभिरुपधारयन् हृदि स्थापयन् कर्मबन्धैः संसारहेतुभिः पुण्यपापात्मकैर्विमुच्यते ॥ २३ ॥ एवं सङ्क्षेपतो रामादिवृत्तं श्रुत्वाऽपि पुनस्तद्विस्तरेण श्रोतुं पृच्छति— कथमिति। स भगवान्रामः आत्मनः स्वस्य भ्रातॄन् प्रति कथमवर्तत? तथा स्वयं वा कथमवर्तत? तथा तस्मिन्नीश्वरे ते भ्रातरः प्रजाः पौराश्च कथमन्ववर्तन्त? इति प्रश्नत्रयम् ॥ २४ ॥ तत्र भ्रात्रादिषु श्रीरामस्य वृत्तिप्रकार-

यैः संस्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ॥ कोशलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥ २२ ॥ पुरुषो रामचरितं श्रवणैरुपधारयन् ॥ आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते ॥ २३ ॥ राजोवाच ॥ कथं स भगवान्रामो भ्रातॄन् वा स्वयमात्मनः ॥ तस्मिन्वा तेऽन्ववर्तन्त प्रजाः पौराश्च ईश्वरे ॥ २४ ॥ श्रीशुक उवाच ॥ अथाऽऽदिशद्दिग्वि-जये भ्रातॄंस्त्रिभुवनेश्वरः ॥ आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥ आसिक्तमार्गां गन्धोदैः करिणां मदसीकरैः ॥ स्वामिनं प्राप्तमालोक्य मत्तां वा[2] सुतरामिव ॥ २६ ॥ प्रासादगोपुरसभाचैत्यदेवगृहादिषु ॥ विन्यस्त-हेमकलशैः पताकाभिश्च मण्डिताम् ॥ २७ ॥

माह— अथेति। अथ राजसिंहासनस्वीकारानन्तरं त्रिभुवनेश्वरः श्रीरामो दिग्विजयाय भ्रातॄन् भरतादीन् आदिशत्। अनेनैव भ्रातॄणामपि तदाज्ञानुसा-रित्वं सूचितम्। स्वानां पौरादीनामात्मान दर्शयन् सानुगः पुरीमयोध्या सर्वत ऐक्षत ॥ २५ ॥ तां रामेण दृष्टां पौरैरलङ्कृता पुरीं वर्णयति— त्रिभिः। गन्धोदैः चन्दनादिसुगन्ध्युदकैः करिणां हस्तिनां मदशीकरैर्मदबिन्दुभिश्च सिक्ता मार्गा यस्या ताम्। स्वामिन श्रीरामं प्राप्तमालोक्य सुतरां मत्तामिव सम्मृद्धाम्। जनैरालोकनं पुर्यामुपचर्यते इति सूचनार्थ इवशब्दः। वेति वितर्के। वासितगामिवेति पाठे कामोन्मत्ता गामिवेत्यर्थः ॥ २६ ॥ प्रासादादिषु विन्यस्तैः स्वर्णकलशैः पताकाभिश्च मण्डितां शोभिताम् ॥ २७ ॥

१ 'स य स्पृष्ट 'इत्यपि क्वचित्पाठः। २ 'वासितगामिव' इति पाठान्तरम्।

सवृंतैः पुष्पफलादियुक्तैः पूगै रम्भाभिः सुष्ठु वाससां पट्टिकाभिर्ध्वजविशेषैश्च मण्डितामिति पूर्वेणैवान्वयः। आदर्शैर्दर्पणैः अंशुकैः स्रग्भिश्च कृतानि कौतुकेन उत्साहेन तोरणानि यस्यां तां पुरीमैक्षतेति पूर्वेणैवान्वयः ॥ २८ ॥ तस्मिन् पौराणां वृत्तिमाह— तमिति। अर्हणानि पूजासाधनानि पाणिषु येषां ते पौरास्तत्र त राममुपेयुः उपजग्मुः। ततश्च हे देव प्राग्वराहावतारे त्वयोद्धृतामिमां भूमिं पाहीति प्रार्थयमाना आशिषो युयुजुश्च ॥ २९ ॥ तस्मिन् प्रजानामनुवृत्तमाह— तत इति। चिरादागतं पतिं श्रीरामं दिदृक्षया द्रष्टुमिच्छया उत्सृष्टा गृहा गृहकार्याणि याभिस्ताः स्त्रियो नराश्च प्रजाः हर्म्याण्यारुरुहुः। तमरविन्दलोचनं वीक्ष्य न तृप्तानि नेत्राणि यासां ताः कुसुमैरवाकिरन् आच्छादितवन्त्य इत्यन्वयः ॥ ३० ॥ स्वय कथमवर्ततेत्यस्योत्तरमाह— अथेति यावदध्यायसमाप्ति। अथ पुरीदर्शनानन्तरं स्वगृहं प्रविष्टः सन् रामः सीतया सह रेमे इति पञ्चमेनान्वयः। तद्गृहं वर्णयति—जुष्ट-

पूगैः सवृंतै रम्भाभिः पट्टिकाभिः सुवाससाम् ॥ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८ ॥ तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ॥ आशिषो युयुजुर्देव पाहीमां प्राक् त्वयोद्धृताम् ॥ २९ ॥ ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः ॥ आरुह्य हर्म्याण्यरविन्दलोचनमतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ॥ अनन्ताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥ विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः ॥ स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिकभित्तिभिः[1] ॥ ३२ ॥ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैः कान्तकामोपपत्तिभिः ॥ ३३ ॥ धूपदीपैः सुरभिभिर्मण्डितं पुष्पमण्डनैः ॥ स्त्रीपुंभिः[2] सुरसङ्काशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥

मिति। पूर्वराजभिरिक्ष्वाकुप्रभृतिभिः जुष्टं सेवितम्, अतएवानन्ता निरवधिका ये अखिला रत्नादीना कोशास्तैराढ्यं समृद्धम्। अनर्घ्या उरवः परिच्छदा यस्मिंस्तत् ॥ ३१ ॥ विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारैरित्यादितृतीयान्तानां माण्डितमिति तृतीयेनान्वयः। वैदूर्यमणिमयस्तम्भानां पङ्क्तिभिः। स्वच्छैः मरकतमणिमयैः स्थलैः। भ्राजन्तो ये स्फटिकास्तन्मयीभिः भित्तिभिश्च ॥ ३२ ॥ चित्राभिः स्रग्भिः। पट्टिकाभिर्ध्वजविशेषैः। वाससां मणिगणानां चांशुकैः दीप्तिभिः। चित् चैतन्यं तद्दुल्लासैरुज्ज्वलैर्मुक्ताफलैर्वैदूर्यस्तम्भादिषु यथाशोभं स्थितैः। कान्ताः कमनीयाः कामोपपत्तयो भोगसाधनानि ताभिः ॥ ३३ ॥ सुरभिभिर्धूपैर्दीपैश्च। पुष्पाणां मण्डनैरलङ्कारैश्च। तथा भूषणानामपि भूषणभूतैः शोभातिशययुक्तैः अतएव सुरसङ्काशैर्देवतुल्यैः स्त्रीपुम्भिश्च जुष्टम् ॥ ३४ ॥

१ 'भातस्फटिकभित्तिभि' इति पाठान्तर क्वचिद्दृश्यते। २ स्त्रीभि पुरुषैश्चेत्यर्थ।

सीतायास्तदानुकूल्यमाह— स्निग्धया स्नेहातिशयवत्या अतएव प्रिया चेष्टा आचारो यस्यास्तया । एवमुक्तौ प्रतीता विषयासक्तिं वारयन् विशिनष्टि— स्वारामेति । स्वस्मिन्नात्मन्येवारमन्तीति स्वारामास्ते च ते धीरा विनिर्जितेन्द्रियान्तःकरणाश्च तेषामृषभः श्रेष्ठ इत्यर्थः । तत्र हेतुमाह—भगवानिति । तस्य जितेन्द्रियत्वं बहुशास्त्रसम्मतमित्याशयेनाह—किलेति ॥ ३५ ॥ नृणां नृभिः अभिध्यातावङ्घ्रिपल्लवौ यस्य सः श्रीरामः धर्ममपीडयन् वर्णाश्रमाधिकारप्राप्तं स्वधर्ममजहन् बहून् वर्षपूगान् संवत्सरसमूहान् यथाकामं यथेष्टं कामान् विषयांश्च बुभुजे इत्यन्वयः ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ एकादशो विवृतोऽध्यायो रामवृत्तनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ कुशस्य रामपुत्रस्य श्रीशुकेन समासतः ॥

तस्मिन् स भगवान्रामः स्निग्धया प्रियचेष्टया ॥ रेमे स्वाराममधीराणामृषभः सीतया किल ॥ ३५ ॥ बुभुजे च यथाकालं कामान् धर्ममपीडयन् ॥ वर्षपूगान् बहून्नृणामाभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे रामवृत्तनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ॥ पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत्ततः ॥ १ ॥ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ॥ ततो बलः स्थलस्तस्माद्वज्रनाभोऽर्कसम्भवः ॥ २ ॥ स्वगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥ शिष्यः कौशल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥ योगं महोदयमृषिर्हृदयग्रन्थिभेदनम् ॥ ४ ॥

अन्वयस्तु सुमित्रान्तो द्वादशे विनिरूप्यते ॥ १ ॥ ॥ कुशस्य चातिथिः सुतोऽभवत् । तस्मान्निषधः । तस्य नभः । अथानन्तरं तत्पुत्रः पुण्डरीकः । ततश्च क्षेमधन्वाऽभवत् ॥ १ ॥ ततो देवानीकः । अथ ततः अनीहः । तत्सुतः पारियात्रः । ततो बलः । तस्मात्स्थलः । तस्माद्वज्रनाभोऽभूत्, स चार्कसम्भवः अर्कस्यांशात्सम्भूतः ॥ २ ॥ तत्सुतो वज्रनाभसुतः स्वगणः । तस्माद्विधृतिः सुतोऽभवत् । ततो हिरण्यनाभाख्योऽभूत , स एव जैमिनेः शिष्यो योगाचार्य इति प्रसिद्धः ॥ ३ ॥ यतो हिरण्यनाभात् कौसल्यो याज्ञवल्क्यऋषिराध्यात्मं योगमध्यगात् अधिगतवान् । तं योगं विशिनष्टि—महोदयमिति । महानुदयोऽभ्युदयो यस्मात्तं तथा हृदयग्रन्थिमज्ञानं भिनत्तीति तथाभूतम् ॥ ४ ॥

---

१ 'स्वगण' इति 'शङ्खण' इति च क्वचित्पाठौ । २ 'हृदयग्रन्थिभेदकम्' इति पाठ. ।

हिरण्यनाभस्य सुतः पुष्योऽभूत् । ततो ध्रुवसन्धिरभवत् । अथ तस्मात्सुदर्शनोऽभवत् । तस्मात् अग्निवर्णः । तस्य पुत्रः शीघ्रः । तस्य सुतो मरुः ॥ ५ ॥ तं विशिनष्टि— योऽसौ योगेन सिद्धः विनिर्जितमृत्युः कलापग्रामवासिभिः सह तत्रास्ते । तत्प्रयोजनमाह— कलेर्युगस्यान्तेऽवसाने नष्टं सूर्यवंशं पुनर्भावयिता स्वपुत्रपौत्रादिपरम्परया प्रवर्तयिष्यते इत्यर्थः ॥ ६ ॥ तस्मान्मरोः प्रसुश्रुतः । तस्य सुतः सन्धिः । तस्याप्यमर्षणः । तत्सुतो महस्वान् । तस्माद्विश्वबाहुरजायत ॥ ७ ॥ ततो विश्वबाहोः प्रसेनजित् । तस्मात् पुनस्तक्षको भविता । ततो बृहद्बलः, यस्तु बृहद्बलः समरे युद्धे ते तव पित्रा अभिमन्युना हतः । एते हि अतीता इक्ष्वाकुवंशजा भूपालाः कथिताः, अथानागतान् भाविनः इक्ष्वाकुवंशजान् भूपालान्मया कथयिष्यमाणान् शृणु ॥ ८ ॥

पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ॥ सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥ योऽसावास्ते योगसिद्धः[1] कलापग्रामवासिभिः ॥ कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥ तस्मात् प्रसुश्रुतस्तस्य सन्धिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्वि[2]श्वबाहुरजायत ॥ ७ ॥ ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः ॥ ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ ८ ॥ बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ उरु[3]क्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ॥ ९ ॥ प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः ॥ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ॥ १० ॥ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ॥ भविता मरुदेवोऽथ सु[4]नक्षत्रोऽथ पुष्करः ॥ ११ ॥

बृहद्बलस्य सुतो नाम्ना बृहद्रणो भविता । तस्य च उरुक्रियः । उरःक्षत इति पाठान्तरम् । तस्य वत्सवृद्धो भविष्यति । वत्सप्रीत इति पाठान्तरम् ॥ ९ ॥ ततः प्रतिव्योमः । ततो भानुः । ततो दिवाकः, स च वाहिन्याः देवसेनायाः पतिर्भविष्यति । ततः सहदेवः । ततो बृहदश्वः, सोऽपि वीरः । अथ तस्माद्भानुमान् ॥ १० ॥ भानुमतः पुत्रः प्रतीकाश्वः । अथानन्तर तत्सुतः सुप्रतीकः । अथ तस्मात् मरुदेवः सुतो भविता । तस्मात्सुनक्षत्रः । सुरक्षत्र इति पाठान्तरम् अथ तस्मात्पुष्करः । ऋक्षक इति पाठान्तरम् ॥ ११ ॥

१ 'कलापग्राममाश्रित' इति पाठान्तरम् । २ 'विश्वबाह्वोऽन्वजायत' इति क्वचित्पाठ । ३ 'उरःक्षतस्ततस्तस्य वत्सप्रीतः' इति पाठान्तरम् । ४ 'सुरक्षत्रोऽथ ऋक्षक' इति पाठान्तरम् ।

तस्य पुत्रोऽन्तरिक्षः । तस्य पुत्रः सुतपाः । सुतप इति पाठान्तरम् । तस्मादमित्रजित् । तस्य बृहद्राजः । बृहद्राज इति पाठान्तरम् । तस्यापि पुत्रो बर्हिः । तस्मात्कृतञ्जयः । धनञ्जय इति पाठान्तरम् ॥ १२ ॥ तस्य सुतो रणञ्जयः । ततः तस्मात्सञ्जयो भविता । तस्मात् शाक्यः । शक्य इत्यपि पाठः । अथ तस्मात् शुद्धोदः । तत्सुतो लाङ्गलः स्मृतः ॥ १३ ॥ रुणक इत्यत्र कुणक इत्यपि पाठः ॥ १४ ॥ तस्मात्सुमित्रो नाम प्रसिद्धः, स च निष्ठान्तः निष्ठा वंशस्य स्थितिस्तस्या अन्तोऽवधिभूतः । एते बृहद्बलस्य भवितेत्यादिनोक्ता बृहद्बलगोत्रजा भवितारो नृपाः ॥ १५ ॥ सुमित्रस्य निष्ठान्तत्वमेवाह— इक्ष्वाकूणामिति । अयमिक्ष्वाकूणा वंशः सुमित्रान्तोऽवधिर्यस्य तथाभूतो भविष्यति । तत्र हेतुमाह— यत इति । यस्मात्तं राजान सुमित्रं प्राप्य

तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ॥ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतञ्जयः ॥ १२ ॥ रणञ्जयस्तस्य सुतः सञ्जयो भविता ततः ॥ तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ॥ १३ ॥ ततः प्रसेनजित्तस्मात् क्षुद्रको भविता ततः ॥ रुणको[1] भविता तस्मात् सुरथस्तनयस्ततः ॥ १४ ॥ सुमित्रो नाम निष्ठान्त एते बार्हद्बलान्वयाः ॥ १५ ॥ इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे कुरुवंशनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ॥ आरभ्य सत्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः ॥ १ ॥

कलौ युगे संस्थामुच्छेदमेव प्राप्स्यति । वंश इत्यनुषङ्गः ॥ १६ ॥ इति श्रीवल्लभाचार्यवश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे ॥ द्वादशो विवृतोऽध्यायो कुशवंशनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ ब्रह्मज्ञा जज्ञिरे यत्र जनकाद्यास्त्रयोदशे ॥ इक्ष्वाकुतनयस्यात्र निमेर्वंशो निरूप्यते ॥ १ ॥ ॥ अथ निमेर्वंशं विवक्षुस्तावत्तस्यौरस्यः पुत्रो नाभूदिति दर्शयितुं तत्कथामाह— निमिरित्यादिना अराजकभयमित्यतः प्राक्तनेन ग्रन्थेन । इक्ष्वाकुतनयो निमिः कदाचित् सत्रमारभ्य वसिष्ठं ऋत्विजमवृत त्वमृत्विग्भवेति प्रार्थितवान् । तदा स वसिष्ठोऽपि भोः हे निमे त्वद्वरणात्प्रागेवाहं शक्रेण वृतोऽस्मि ॥ १ ॥

[1] 'रणक.' इति 'कुणक.' इति च क्वचित्पाठौ ।

अतस्तं शक्रमखं निर्वर्त्य समाप्याहं आगमिष्यामि तावत्पर्यन्तं त्वं प्रतिपालय यज्ञानुष्ठानप्रतिरोधं कृत्वा मां प्रतीक्षस्वेति । ततो गृहपतिर्निमिः तूष्णीमासीत् । स वसिष्ठोऽपि इन्द्रस्य मखमकरोत् ॥ २ ॥ निमिश्च यावद्गुरुर्वसिष्ठो नागतस्तावदन्यैरेव ऋत्विग्भिः सत्रमारभतेत्यन्वयः । तत्र हेतुमाह— इदं जीवितं चलमनित्य विद्वान् जानन् । तत्रापि हेतुमाह— आत्मवानिति, आत्मानात्मविवेकवानित्यर्थः ॥ ३ ॥ तत इन्द्रस्य यज्ञं निर्वर्त्य समाप्य आगतो गुरुर्वसिष्ठः शिष्यस्य व्यतिक्रमं स्वाज्ञोल्लङ्घनं वीक्ष्य पण्डितमानिनः आत्मानं पण्डितं मन्यमानस्य निमेरयं देहः पततादित्यशपत् इत्यन्वयः ॥ ४ ॥ तदाकर्ण्य निमिरपि लोभात् इन्द्रतः मत्तश्च वित्तग्रहणाभिलाषरूपाद्धर्ममजानतः देहस्य नश्वरत्वेन धर्मे विलम्बो न कार्य इति सिद्धान्तमुपेक्षमाणस्य तवापि देहः पततादित्यधर्मवर्तिने गुरवे प्रतिशापं ददावित्यन्वयः ॥ ५ ॥ इत्येवं वदन् निमिः स्वदेहमुत्ससर्ज तत्याज । तस्य

तं निर्वर्त्याऽऽगमिष्यामि तावत्त्वं प्रतिपालय ॥ तूष्णीमासीद्गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥ निमिश्चलमिदं विद्वान् सत्रमारभताऽऽत्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद्यावता गुरुः ॥ ३ ॥ शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ॥ अशपत् पतताद्देहो निमेः पण्डितमानिनः ॥ ४ ॥ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ॥ तवापि पतताद्देहो लोभाद्धर्ममजानतः ॥ ५ ॥ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥ गन्धवस्तुषु तं[2] देहं निधाय मुनिसत्तमाः ॥ समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥ ८ ॥

देहत्यागे क्लेशो नाभूदित्याशयेन तं विशिनष्टि— अध्यात्मेति, आत्मविद्यायां निपुण इत्यर्थः । तथाऽस्मत्प्रपितामहो वसिष्ठोऽपि त्यक्तदेहः पुनर्मित्रावरुणयोः पुत्रतया उर्वश्यामुर्वशीदर्शनात् स्कन्नं रेतस्ताभ्यां[3] कुम्भे निषिक्तं तस्मात्कुम्भाज्जज्ञे इत्यर्थः ॥ ६ ॥ मुनिसत्तमाः निमेः ऋत्विजस्त निमिना त्यक्तं देहं गन्धवस्तुषु सुगन्धितैलेषु निधाय अथानन्तरं सत्रयागे समाप्ते सति तत्र समागतान् देवान् ऊचुः ॥ ७ ॥ तदेव दर्शयति— राज्ञ इति । यदि यूयं प्रभवो वरदाने समर्थाः प्रसन्नाश्च तर्हि राज्ञो निमेरयं देहः जीवत्विति । ततो देवैस्तथेत्युक्ते जीवत्वित्युक्ते सति निमिराह— तद्दर्शयति— मा भूदित्यादिना । मे मम देहबन्धनं देहसम्बन्धो मा भूदित्यर्थः ॥ ८ ॥

१ 'तावन्मात्' इति क्वचित्पाठो दृश्यते । २ 'तद्देहम्' इत्यपि पाठ क्वचित् । ३ मित्रावरुणाभ्याम् ।

तत्र हेतुमाह— यस्येति । मुनयो मननशीला विवेकिनो वियोगभयकातराः देहयोगे सति तद्वियोगस्य मरणस्यावश्यम्भावित्वात्ततो भीता यस्य देहस्य योगं सम्बन्धं न वाञ्छन्ति किन्तु हरति देहसंयोगवियोगादिसंसारदुःखमिति तथाभूता मेधा यस्य तस्य भगवतश्चरणारविन्दमेव देहयोगादिनिवृत्त्यर्थं भजन्ति ॥ ९ ॥ अतो दुःखादिनिमित्तभूत देहमहं नावरुरुत्से अवरोद्धुं गृहीतुं नेच्छामि । यतो देहग्रहणात् अस्य देहिनः सर्वत्र मृत्युर्भवति न कुत्रापि ततो निस्तारः । तत्र दृष्टान्तमाह— यथा उदके वसता मत्स्यानां सर्वत्रैव मृत्युस्तथेति ॥ १० ॥ एवमुक्ता देवा उचुः—निमिर्विदेह एव सन् शरीरिणां लोचनेषु कामं यथेष्टमुष्यतां वसतु । एवं सति युष्माभिः प्रार्थितमस्य जीवितमनेनोक्तो देहसम्बन्धाभावश्च भविष्यति इति भावः । स च निमिरध्यात्मसंस्थितो लोचनयोः स्थितः सन्नुन्मेषणनिमेषाभ्यां तत्प्रवर्तकत्वेन लक्षितो वर्तते इति शेषः ॥ ११ ॥ तदेवं मृतादपि निमेर्देहाद्वंशप्रवृत्तिं

यस्य योगं न वाञ्छन्ति वियोगभयकातराः ॥ भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥ ९ ॥ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम् ॥ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥ देवा ऊचुः ॥ विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ॥ उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥ अराजकभयं नृणां मन्यमाना महर्षयः ॥ देहं ममन्थुः स्म निमेः कुमारः समजायत ॥ १२ ॥ जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः ॥ मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥ तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्द्धनः ॥ ततः सुकेतुस्तस्यापि देवरातो महीपते ॥ १४ ॥ तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृतिपिता ॥ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥

दर्शयति—अराजकेति । नृणामराजकत्वनिमित्तं भयं मन्यमानाः सम्भावयन्तो महर्षयः सर्वथा राजोत्पादने समर्थाः निमेर्देहं ममन्थुस्ततः कुमारः समजायत ॥ १२ ॥ तस्यान्वर्थानि त्रीणि नामान्याह— जन्मनेति । जन्मना अग्रे वंशोत्पादनेन स जनकशब्दाभिधेयोऽभूत् । विदेहो निमिस्तद्वंशजत्वात् स एव वैदेहशब्दवाच्योऽभूत् । यतो मथनाज्जातोऽतो मिथिलशब्दवाच्योऽभूत् । येन मिथिलापुरी निर्मिता । मिथिलेन निर्मितत्वात् साऽपि मिथिलाख्या जातेत्यर्थः ॥ १३ ॥ तस्मान्मिथिलादुदावसुर्व्यजायत । तस्य उदावसोर्नन्दिवर्धनः पुत्रोऽभूत् । ततो नन्दिवर्धनात् सुकेशोऽभूत् । तस्य सुकेशस्यापि हे महीपते देवरातः पुत्रोऽभूत् ॥ १४ ॥ तस्माद्देवरातात् बृहद्रथः । तस्य महावीर्यः । तं विशिनष्टि—सुधृतिपितेति । तत्पुत्रः सुधृतिसञ्ज्ञकोऽभूदित्यर्थः । सुधृतेर्धृष्टकेतुरभूत् । अथ तस्मात् हर्यश्वो जातः । ततो मरुः ॥ १५ ॥

१ उदकेऽन्येभ्यो जलचरेभ्यो मत्स्याना मृत्युर्भवति, निरुदके स्थले च स्वभावादेव तेषां मृत्युर्भवतीत्यर्थ । २ सुधृत् सुधृति तस्य पितेत्यर्थ । सुधृतेर्धृष्टकेतुरित्युक्तत्वात् ।

मरोः पुत्रः प्रतीपकः । तस्मात्कृतरथो जातः । यतः कृतरथाद्देवमीढो जातः । तस्य सुतो विश्रुतः । अथ तस्मात् महाधृतिः॥ १६॥ ततः कृतिरातः । तस्मान्महारोमा । अथानन्तरं तस्य सुतः स्वर्णरोमा । तस्य सुतो ह्रस्वरोमा व्यजायत ॥ १७ ॥ ततः सीरध्वजो जज्ञे । तस्य सीरध्वजशब्दवाच्यत्वे हेतुमाह—यज्ञेति । यस्मात्तस्य यज्ञार्थं महीं कर्षतः सतः सीराग्रात् लाङ्गलाग्रात् सीता जाता प्रादुर्भूता तस्मात् स सीरध्वजो सीर एव ध्वजवत्कीर्तिकरो यस्य स तथा स्मृतः कथितः ॥ १८ ॥ तस्य सीरध्वजस्य कुशध्वजः पुत्रः । ततो हे नृप धर्मध्वजो जातः । धर्मध्वजस्य कृतध्वजमितध्वजौ द्वौ पुत्रौ बभूवतुः ॥ १९ ॥ कृतध्वजात् केशिध्वजो जातः । मितध्वजात्तु खाण्डिक्यः पुत्रो जातः । हे राजन् कृतध्वजसुतः केशिध्वजः आत्म-

मरोः प्रतीपकस्तस्माज्जातः कृतरथो यतः ॥ देवमीढस्तस्य सुतो विश्रुतोऽथ महाधृतिः ॥ १६ ॥ कृतिरातस्ततस्तस्मा-
न्महारोमाऽथ तत्सुतः ॥ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥ ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो
महीम् ॥ सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥ १८ ॥ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ॥ धर्म-
ध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥ कृतध्वजात् केशिध्वजः खाण्डिक्यस्तु मितध्वजात् ॥ कृतध्वजसुतो
राजन्नात्मविद्याविशारदः ॥ २० ॥ खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद्गतः ॥ भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु
तत्सुतः ॥ २१ ॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ॥ ऊर्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः ॥ २२ ॥
अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ॥ ततश्चित्ररथो यस्य क्षेमधिर्मिथिलाधिपः ॥ २३ ॥

विद्यायां ब्रह्मविद्याया विशारदो निपुणः जातः॥ २० ॥ खाण्डिक्यस्तु कर्मतत्वज्ञः कर्मविद्यायां निपुणः स च केशिध्वजाद्भीतः सन् गतो गृहान्निर्गतः। तस्य केशिध्वजस्य भानुमान् पुत्रोऽभूत् । तस्य सुतस्तु कृतद्युम्नोऽभूत् ॥ २१ ॥ तस्य तनयः शुचिः । तस्मात्सनद्वाजोऽभूत् । ततः सनद्वाजादूर्ध्वकेतुः । अथ तस्मादजः । तस्य पुरुजित् ॥ २२ ॥ तस्य पुरुजितोऽपि सुतोऽरिष्टनेमिः। तस्यापि श्रुतायुः। तस्य सुपार्श्वकः। ततश्चित्ररथः, यस्य सुतः क्षेमधिः मिथिलाधिपः । इदं पूर्वेषामपि विशेषणम्॥ २३ ॥



१ ‘ कृतिरथ ’ इति क्वचित्पाठ । २ ‘ विसृत ’ इति पाठ क्वचित् । ३ ‘ द्रुत ’ इति पाठ परिदृश्यते क्वचित् ।

तस्मात्क्षेमधेः हेमरथः सुतो जातः। समरस इति पाठान्तरम्। तस्य सुतः सत्यरथः। ततस्तस्मात् उपगुरुरासीत्। तस्मादुपगुप्तः आसीत्। स चाग्निसम्भवः अग्नेरंशात्सम्भूतः॥ २४ ॥ अथ तत उपगुप्तात् श्वसनः। वस्वनन्त इति पाठान्तरम्। तत्पुत्रः सुवर्चाः। युयुधानादिति पाठान्तरम्। यत् यस्मात् सुभाषणो जज्ञे। ततः श्रुतः। ततो जयः। तस्माद्विजयः। अस्मात् धृतः सुतो जातः। ऋत इति पाठान्तरम्॥ २५॥ तस्य शुनकः सुतो जज्ञे। ततो वीतहव्यः। ततो धृतिः। धृतेः पुत्रो बहुलाश्वः। विपुलाश्व इति पाठान्तरम्। तस्य कृतिः। तस्य महावशी जज्ञे ॥२६॥ तथा* त्वमिति सूचयन् सम्बोधयति— हे राजन्निति। एते पूर्वोक्ता मिथिला मिथिलवंशजा राजानो गृहे स्थिता अपि द्वन्द्वैर्दुःखसुखहर्षशोकादिभिः विमुक्ता एव जाता इत्यन्वयः। तत्र हेतुमाह— योगेश्वराणा याज्ञवल्क्यादीना प्रसादेन प्रीत्योपदेशेन आत्मविद्याया आत्मानात्मविवेके विशारदा निपुणा इत्यर्थः॥ २७॥ इति श्रीव-

तस्मात्क्षेमरथस्तस्य[1] सुतः सत्यरथस्ततः॥ आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः ॥ २४ ॥ श्वसेनस्त्वथ[2] तत्पुत्रो सुवर्चा यत्सुभाषणः॥ श्रुतस्ततो जयस्तस्माद्विजयोऽस्माद्धृतः सुतः॥२५॥ शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः॥ बहुलाश्वो धृतेस्तस्य कृतिस्तस्य[3] महावशी ॥ २६ ॥ एते वै मिथिला[4] राजन्नात्मविद्याविशारदाः ॥ योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सूर्यवंशनिरूपणप्रकरणे निमिवंशनिरूपणं नाम त्रयोदशोऽध्यायः॥ १३ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्त्तयः॥ १ ॥

ल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २ ॥ रचिता नवमे तत्र सूर्यवंशनिरूपणे॥ त्रयोदशो गतो वृत्तिं निमिवंशनिरूपकः॥ ३ ॥ छ ॥ ॥ एवं त्रयोदशाध्याये सूर्यवंशो निरूपितः॥ एकादशभिरध्यायैश्चन्द्रवंशो निरूप्यते॥ १ ॥ तत्र चतुर्दशेऽध्याये तारायां सोमतो बुधः॥ जातः पुरूरवास्तस्माच्चद्वृत्तं विनिरूप्यते॥ २॥ सावधानतार्थं सम्बोधयति— राजन्निति। अथ सूर्यवंशकथनानन्तरं अतोऽग्रे मया कथ्यमानः सोमस्य वंशो त्वया श्रूयताम्। अवश्यश्रोतव्यत्वे हेतुमाह— पावन इति, वक्तृश्रोतॄणा पवित्रकर इत्यर्थः। तत्रापि हेतुमाह— यस्मिन्निति। यस्मिन् सोमवंशे पुण्या वक्तृश्रोतॄणां पुण्यजनिका पापनिवर्तिका कीर्तिर्यशो येषां ते तथाभूता ऐलादयो भूपाः कीर्त्यन्ते॥ १ ॥

१ ' समरथ ' इति पाठान्तरम्। २ ' वस्वनन्तोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ॥ श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृत सुत ' इति पाठान्तरम्। ३' कृतिरस्य ' इति वा पाठ। ४ ' मैथिला ' इति पाठान्तरम्। *गृहस्थोऽपि द्वन्द्वैर्मुक्त आत्मविद्याविशारदश्चेत्यर्थ.।

एवं चन्द्रवंशनिरूपणं प्रतिज्ञाय तन्मूलत आह— सहस्रशिरस इति । सहस्रं शिरांसि यस्य तस्य पुंसो गर्भोदके शयानस्य श्रीनारायणस्य नाभिरेव ह्रदस्तस्मिन्नेव यदुत्पन्नं सरोरुहं जगदात्मकं पद्मं तस्माज्जातस्य धातुश्चतुर्मुखस्य सुतोऽत्रिरासीत् । स च गुणैः सत्यशौचसौशील्यादिभिः पितृसम आसीत् ॥ २ ॥ तस्यात्रेर्दृग्भ्यः आनन्दाश्रुभ्यः सोमश्चन्द्रः पुत्रोऽभवत् । दृश इति पाठे तु नेत्रादित्यर्थः । अतएवामृतमयः । किलेत्याश्चर्ये । न च " चन्द्रमा मनसो जातः " इति श्रुतिविरोधः समुद्रमथनोत्पत्तिश्रवणविरोधश्चेति शङ्कनीयं भगवन्मनस उत्पन्नस्यैव कल्पभेदेन तत्र तत्र प्रादुर्भावकप्रकारभेदकथनात् । न च ' अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान् ॥ सोमं दुर्वाससं दत्तमात्मेशब्रह्मसम्भवान् ' इति चतुर्थस्कन्धे अनसूयाजन्यत्वोक्तिविरोधः अत्रिजन्यत्वेनोपचारतज्जन्यत्वकथने विरोधाभावात् । वक्ष्यमाणदर्पहेतुं सूचयन्नाह—विप्रेति ॥ ३ ॥ स सोमो भुवनत्रयं विजित्य राजसूय-

सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ॥ जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥ तस्य दृग्भ्योऽभवत्
पुत्रः सोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥ सोऽयजद्राजसूयेन विजित्य भुवन-
त्रयम् ॥ पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात् ॥ ४ ॥ यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ॥ नात्यजत्तत्कृते
जज्ञे सुरदानवविग्रहः ॥ ५ ॥ शुक्रो बृहस्पतेर्द्वेषादग्रहीत् सासुरोडुपम् ॥ हरो गुरुसुतं स्नेहात् सर्वभूतगणावृतः ॥ ६ ॥

यागेनायजत् । सोमस्य पुत्रो बुध इति तत्प्रसङ्गमाह— पत्नीमिति सार्धैर्नवभिः । बृहस्पतेः गुरोः पत्नीं तारा दर्पात् विप्रादिपतित्वजन्यगर्वाद्धेतोर्बलादहरत् ॥ ४ ॥ स सोमो यदा देवाना गुरुणा बृहस्पतिना अभीक्ष्णशः पुनः पुनः याचितोऽपि मदात् गर्वात् तारा नात्यजत् न प्रददौ तदा तत्कृते एतन्निमित्तं सुराणां दानवाना च विग्रहो विरोधो जज्ञे जातः ॥ ५ ॥ सुरासुरविरोधप्रकारमाह—शुक्र इति । बृहस्पतेर्द्वेषाद्धेतोः सासुरः असुरैः सहितः शुक्रः उडुपमुडूनि नक्षत्राणि पातीति तथा तं सोममग्रहीत् स्वपक्षपातिनमकरोदित्यर्थः । सन्धिरार्षः । तथा सर्वैर्भूतगणैरावृतः हरः अङ्गिरसः सकाशात् प्राप्तविद्यः अतो गुरोरङ्गिरसः सुतं बृहस्पतिं स्नेहादग्रहीत् ॥ ६ ॥

१ प्रथमाध्यायस्य पञ्चदश श्लोकोऽयम्, । २ ' दृश. ' इति पाठान्तरम् । ३ ' सासुरोडुपम् ' इत्यत्र ।

तथा सर्वैर्देवगणैरुपेतो युक्तो महेन्द्रो गुरु बृहस्पतिमन्वयात् अनुससार । एव सति तदा सुराणामसुराणा च विनाशो यत्र तथाभूत. तारकामयः तारानिमित्तः समरः सङ्ग्रामोऽभूत् ॥ ७ ॥ अथ चाङ्गिरसा निवेदितो विज्ञापितवृत्तान्तो विश्वकृत् ब्रह्मा सोम निर्भर्त्स्य तारा स्वभर्त्रे बृहस्पतये प्रायच्छत् अदापयत् । तदा च पतिर्बृहस्पतिस्ता स्वभार्यामन्तर्वत्नीं अवैत् गर्भिणीमबुद्ध्यत । आह चेति शेषः ॥ ८ ॥ तद्वचनमाह— गर्भमिति । त्वयाऽपि गर्भधारणमनुचितं कर्म कृतमिति सूचयन् सम्बोधयति— दुष्प्रज्ञे इति । मत्क्षेत्रभूतायां त्वयि परैः शत्रुभिराहितं स्थापितं गर्भमाशु शीघ्र मत्क्षेत्रात्त्यज निष्कासय । त्यजत्यजेति पाठान्तरम् । अनेन दोषेण भस्मकरणयोग्यैव त्वमित्याशयेन सम्बोधयति— असतीति । तथाप्यहं न भस्मसात् कुर्याम् । तत्र हेतुमाह— स्त्रियं सन्तानहेतुभूतामिति । अहं च सान्तानिकः सन्तानाभिलाषी । सान्तानिके इति पाठे तु सान्तानिके सन्तत्याधायके

सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् ॥ सुरासुरविनाशोऽभूत्समरस्तारकामयः ॥ ७ ॥ निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् ॥ तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत्पतिः ॥ ८ ॥ गर्भं त्यजाशु[1] दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ॥ नाहं त्वां भस्मसात् कुर्यां स्त्रियं सान्तानिको[2]ऽसति ॥ ९ ॥ तत्याज व्रीडिता तारा कुमारं जनकप्रभम्[3] ॥ स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ॥ १० ॥ ममायं न तवेत्युच्चैस्तस्मिन् विवदमानयोः ॥ पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता तु सा ॥ ११ ॥ कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ किं न वोचस्यसद्वृत्ते आत्मावद्यं वदाशु मे ॥ १२ ॥

पुत्रेऽसति अविद्यमाने सति । अन्यत्समानम् ॥ ९ ॥ ततो व्रीडिता लज्जिता तारा जनकस्य सोमस्येव प्रभा यस्य तं कुमारं तत्याज असूत । कनकप्रभमिति पाठान्तरम् । तस्मिन्नेव कुमारे क्षेत्रजत्वादाङ्गिरसो बृहस्पतिः वीर्यजत्वाच्च सोमश्च स्पृहा चक्रे ॥ १० ॥ एव स्पृहया ममैवाय पुत्रो न तवेत्येवं तस्मिन् पुत्रनिमित्ते उच्चैराङ्गिरससोमयोर्विवदमानयोः सतोर्देवा ऋषयश्च ता पप्रच्छुः । सा तारा तु व्रीडिता सती बृहस्पतेः सोमस्य वा पुत्र इति नैवोचे न उवाच ॥ ११ ॥ तदा च कुपितः सन् कुमारो मातरं प्राह । तदेवाह— हे असद्वृत्ते दुरिते अलीकलज्जया व्यर्थया लज्जया किं न वोचसि न वदसि ? आत्मनः स्वस्यावद्य दुष्कर्म कुतो गर्भधारण कृतं तदाशु शीघ्र मे मह्य वदेति ॥ १२ ॥

---

१ त्यज त्यज ' इति पाठे तु गर्भमित्युपरिष्टादानेयम् । २ ' सान्तानिके ' इति पाठान्तरम् । तत्र हे सत्पुत्रे इति ताराया सम्बोधन श्रीधरस्वामिसम्मतम् । ३ कनकप्रभमिति पाठान्तरम्

एवं पृष्टाऽपि सा यदा नोक्तवती तदा ब्रह्मा तां रहः एकान्ते आहूय सान्त्वयन् आश्वासयन् समप्राक्षीत्। सा च शनकैः सोमस्य पुत्र इत्याह। तावत् ततस्तु तं कुमार सोमोऽग्रहीत्॥ १३॥ हे नृपेति सम्बोधनेन तव वंशे पूर्वेत एव बुद्धिमत्त्वमागतमिति सूचयति। आत्मयोनिर्ब्रह्मा तस्य कुमारस्य बुध इत्यभिधां नाम अकृत कृतवान्। तथानामकरणे हेतुमाह—बुद्ध्येति। गम्भीरया सूक्ष्मया बुद्ध्या युक्तेन येन पुत्रेण उडुराट् चन्द्रो मुदं हर्षमाप ॥ १४ ॥ ततो बुधात् य इलायामुदाहृतः सुद्युम्नरूप विहाय स्त्रीरूपेण स्थिताया जात इति पूर्वमुक्तः स पुरूरवा जज्ञे । पुरूरवसः उर्वश्यामायुःप्रमुखाः पुत्रा जाता इति वक्तु तत्प्रसङ्गकथामाह—तस्येत्यादिना यावदध्यायसमाप्ति। तस्य पुरूरवसो रूपादीन् इन्द्रभवने सुरर्षिणा नारदेन गीयमानान् श्रुत्वा स्मरशरार्दिता कामपीडिता देवी देवाप्सरा उर्वशी तस्य पुरूरवसोऽन्तिक समीपमुपेयाय आजगामेति द्वयोरन्वयः। तत्र रूपं सौन्दर्यम्। गुणाः

ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन् ॥ सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ॥ १३ ॥ तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण्मुदम् ॥ १४ ॥ ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥ १५ ॥ श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ तदन्तिकमुपेयाय देवी स्मरशरार्दिता ॥ १६ ॥ मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ॥ धृतिं विष्टभ्य ललना उपतस्थे तदन्तिके ॥ १७ ॥ स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ॥ उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ १८ ॥ राजोवाच ॥ स्वागतं ते वरारोहे आस्यतां करवाम किम् ॥ संरमस्व मया साकं रतिर्नो शाश्वतीः समाः ॥ १९ ॥

गाम्भीर्यधैर्यादयः। औदार्यं वदान्यता। शीलं सुस्वभावः। द्रविणं धनम्। विक्रमः पराक्रमः॥ १५॥ १६॥ ननु देवी कुतो मनुष्यान्तिकमुपगच्छेत्तत्राह—मित्रावरुणयोः शापात् नरलोकतां मनुष्यतां मनुष्यभावमापन्ना प्राप्ता सतीति। सा च ललना उर्वशी कन्दर्पमिव रूपिणमतिसुन्दरं पुरुषश्रेष्ठ पुरूरवस निशाम्य दृष्ट्वा धृतिं धैर्यं विष्टभ्य अवलम्ब्य तस्य पुरूरवसः अन्तिके उपतस्थे स्थितवती॥ १७॥ स नृपतिस्तां विलोक्य हर्षेणोत्फुल्ले विकसिते लोचने यस्य सः तथा हृष्टानि उदञ्चितानि तनूरूहाणि रोमाणि यस्य तथाभूतः सन् श्लक्ष्णया मधुरया वाचा देवीं तामुर्वशीमुवाच ॥ १८ ॥ तद्वचनमाह—स्वागतमिति। स्वमनःक्षोभं सूचयन् सम्बोधयति—वरारोहे इति। ते त्वया स्वागतम्। आस्यतामत्रोपविश्यताम्। किं त्वदभिलषितं वयं करवाम तद्विधेहि। मया साकं सह त्वं संरमस्व। नौ आवयोः रतिः शाश्वतीः समाः बहून् संवत्सरानस्तु ॥ १९ ॥

एवमुक्तोर्वशी आह— कस्या इति। साऽपि स्वचित्तक्षोभ सूचयन्ती सम्बोधयति— सुन्दरेति। कस्याः स्त्रियो मनो दृष्टिश्च त्वयि न सज्जेत? अपितु सर्वस्यापि मनो दृष्टिश्च त्वयि प्रसज्जेतैवेत्यर्थः। आसक्तौ हेतुमाह— यदिति। यस्य तवाङ्गान्तर वक्षः आसाद्य दृष्ट्या प्राप्य दृष्ट्वा रिरंसया रन्तुमिच्छया विवेकधैर्यादिक सर्वं च्यवते अपयातीत्यर्थः। ह इत्याश्चर्ये॥ २०॥ मित्रावरुणशापावसाने भाषाभङ्गमिषेण पुनः स्वर्ग जिगमिषोस्तस्या भाषाबन्धमाह— एताविति। मदपेक्षितसम्पादने तव सामर्थ्यमस्तीति सूचयन्ती सम्बोधयति—राजन्निति। यदि मत्सम्मानमिच्छसि तदा मदुक्तमङ्गीकुर्विति सूचयन्ती पुनः सम्बोधयति—मानदेति। एतौ द्वौ उरणकौ मेषौ मया पुत्रतया पालितौ न्यासौ निक्षेपरूपौ मया त्वदन्तिके निहितौ त्वं रक्षस्व। यावदिमौ भवात्रक्षिता तावद्भवता सहाहं रंस्ये रमणं करिष्ये, देवभोग्या देवी त्वं कथं मया मनुष्येण सह रमणं करिष्यसीति मा शङ्कीः। यतो रूपौदार्यादिगुणैः श्लाघ्यः स एव स्त्रीणामप्सरसामस्माकं

उर्वश्युवाच॥ कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर॥ यदङ्गान्तरमासाद्य च्यवते ह रिरंसया॥ २०॥ एतावुरणकौ राजन्न्यासौ रक्षस्व मानद॥ संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः॥ २१॥ घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात्॥ विवाससं तत्तथेति प्रतिपेदे महामनाः॥ २२॥ अहो रूपमहो भावो नरलोकविमोहनम्॥ को न सेवेत मनुजो देवीं त्वा स्वयमागताम्॥ २३॥ तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः॥ रेमे सुरविहारेषु कामं चैत्ररथादिषु॥ २४॥

वरः पतिः स्मृतः कथितः॥ २१॥ मयि त्वद्वीरत्वमकिञ्चित्करं भविष्यतीति सूचयन्ती सम्बोधयति— वीरेति। देवानाममृताशित्वात् "अमृत वा आज्यम्" इति श्रुतेर्घृतस्यामृतत्वात् घृतमेव मे मम भक्ष्यं स्यात्। मैथुनादन्यत्र काले त्वा त्वां विवाससं नग्नं नेक्षे नेक्षिष्ये। यदा त्वं मैथुनादन्यत्रात्मान नग्नं दर्शयिष्यासि तदैवाहं गमिष्यामीत्यर्थः। एवमुक्तः पुरूरवाः महामनाः हृष्टचेताः सन् तत्तदुक्तं भाषाबन्धनं तथास्त्विति एवं प्रतिपेदे अङ्गीचकार॥ २२॥ अन्यच्च वचसा तत्सम्मानं कृतवांस्तदाह— अहो इति। अहोऽत्याश्चर्यं तवेदं रूपं सौन्दर्यम्, अहो भावः तव चातुर्यम्, उभयमपि नरलोकं विमोहयतीति तथाभूतमतः स्वयमागतां देवीं देवभोग्यां त्वां मनुजः को वा न सेवेतेति। सर्वोपि त्वत्कृपया सेवेतैवेति भावः॥ २३॥ यथार्हतः यथापेक्ष्यं रमयन्त्या क्रीडन्त्या तया उर्वश्या सह स पुरुषश्रेष्ठः पुरूरवाः सुरा देवा विहरन्ति येषु तेषु सुरविहारेषु चैत्ररथादिषूपवनेषु कामं यथेष्टं रेमे। आदिपदेन नन्दनपारिभद्रादिसङ्ग्रहः॥ २४॥

पद्मकिञ्जल्कस्य गन्ध इव गन्धो यस्यास्तया देव्या उर्वश्या सह नित्यं रममाणः तस्याः मुखामोदेन मुषितः प्रलोभितः सन् बहूनहर्गणान् मुमुदे ॥ २५ ॥ ततश्च कदाचिदुर्वशीमपश्यन्निन्द्रः उर्वशीरहितं मह्यं ममास्थानं नातीव शोभते इति मन्यमानस्तामानेतुं गन्धर्वान् समनोदयत् प्रेरयामास ॥ २६ ॥ ततस्ते गन्धर्वा महारात्रे—'महानिशा द्वे घटिके रात्रौ मध्यमयामयोः' इति स्मृतेः—मध्यरात्रे अतएव तमसि अन्धकारे प्रत्युपस्थिते सम्प्राप्ते सति उपेत्य आगत्य राजनि पुरूरवसि जायया उर्वश्या न्यस्तौ निक्षेपतया स्थापितौ उर्वश्या उरणौ मेषौ जह्रुः अपहृतवन्तः ॥ २७ ॥ तदा नीयमानयोः पुत्रयोः पुत्रवत् पालितयोर्मेषयोराक्रन्दितं रोदनं निशम्य श्रुत्वा देवी उर्वशी आहेति शेषः। जिगमिषोस्तस्याः परुषोक्तिमेवाह— हताऽस्मीति सार्द्धेन। नपुसा नपुंसकेन पुरुषार्थहीनेन वीरमानिना वृथैवात्मानं वीरं मन्यमानेन कुत्सितेन नाथेन स्वामिनाऽहं हताऽस्मि ॥ २८ ॥ उक्तमेवोपपादयति— यदिति।

रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया ॥ तन्मुखामोदमुषितो मुमुदेऽहर्गणान् बहून् ॥ २५ ॥ अपश्यन्नुर्वशीमिन्द्रो
गन्धर्वान् समनोदयत् ॥ उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २६ ॥ त उपेत्य महारात्रे तमसि प्रत्युपस्थिते ॥
उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २७ ॥ निशम्याऽऽक्रन्दितं देवी पुत्रयोर्नीयमानयोः ॥ हताऽस्म्यहं
कुनाथेन नपुंसा वीरमानिना ॥ २८ ॥ यद्विश्रम्भादहं नष्टा हृतापत्या च दस्युभिः ॥ यः[1] शेते निशि सन्त्रस्तो यथा नारी
दिवा पुमान्[2] ॥ २९ ॥ इति वाक्सायकैर्विद्धः प्रतोत्रैरिव कुञ्जरः ॥ निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥
ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः ॥ आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३१ ॥

यस्य विश्रम्भात् वीरोऽयं मत्पुत्रौ रक्षिष्यतीति विश्वासादहं नष्टा। तत्र हेतुमाह— दस्युभिः हृते अपत्ये यस्यास्तथाभूतेति। नपुंसकत्वमेव स्पष्टयति— य इति। यो निशि नारीवत् सन्त्रस्तो भीतः सन् शेते, दिवा दिवसे तु पुमान् पुरुषवद्व्यवहरति ॥ २९ ॥ इत्येवम्भूतैर्वाग्रूपैः सायकैरिषुभिर्विद्धः पुरूरवाः निस्त्रिंशं खड्गमादाय रुषा क्रोधेन विवस्त्रो नग्न एव निशि रात्रौ अभ्यद्रवत् गन्धर्वाननुजगामेत्यर्थः। विद्धत्वे दृष्टान्तमाह— प्रतोत्रैरङ्कुशैः कुञ्जरो यथा विद्धः सन् क्रुद्धो भवति तथेति ॥ ३० ॥ तदा च ते गन्धर्वा उरणौ तत्रैव विसृज्य त्यक्त्वा विद्युतः तडितो व्यद्योतन्त प्रकाशितवन्तः। अनेन ते भाषाबन्धनं ज्ञात्वा तद्भङ्गार्थमिन्द्राज्ञया विद्युतोऽपि सहैवानीतवन्त इति ज्ञेयम्। तदा च मेषावादायाऽऽयान्तं पतिं पुरूरवसं सा उर्वशी नग्नमैक्षत ददर्श। ततश्च भाषाभङ्गात् सा निर्जगामेति ज्ञेयम् ॥ ३१ ॥

१ 'मुमुहे' इति पाठान्तरं कुत्रचित्। २ यः पुमान् सन्नपि यथा नारी तथा निशि दिवा च सन्त्रस्तः सन् शेते इति वाऽर्थश्चिन्त्यः। ३ एतदग्रे— 'मुञ्च मुञ्चाश्वपसर बाहू मद्राग्रेभिवितौ ॥ अतीव कातरो हा त्वं मायया योऽतिलम्पट' इत्येकः श्लोकोऽधिकः क्वचित् (ग० कृ० पुस्तके टिप्पण्याम्)

तत ऐलः पुरूरवाः शयने शय्याया जायामुर्वशीमपश्यन् विमनाः अन्तःकरणशून्य इव जातः। एतदेव सहेतुक स्पष्टयति— तदिति । यत. तस्यामेव चित्त यस्य तथाभूतः अतस्तां विना विह्वलो व्याकुलचित्तः तत्प्राप्तिः कथं स्यादिति शोचन् उन्मत्तवन्महीं बभ्राम ॥ ३२ ॥ एवं पृथ्वीं पर्यटन् स पुरूरवाः कुरुक्षेत्रे सरस्वतीतीरे तामुर्वशीं प्रहृष्टानि वदनानि यासां तथाभूतास्तत्सखीश्च पञ्च वीक्ष्य सूक्तं शोभनं वचनं प्राह ॥ ३३ ॥ तदाह— अहो इति । स्वस्य तस्या स्नेहसत्त्वेऽपि तस्याः स्वस्मिन् स्नेहाभावमालक्ष्याश्चर्यं करोति— अहो इति । अपीति पाठान्तरम् । तत्त्वव्ययं सम्बोधनस्य कोमलत्वद्योतकम् । भार्यायाः पतित्यागो न युक्त इत्याशयेन सम्बोधयति— जाये इति । अद्याप्यनिर्वृत्य मत्कृतां निर्वृतिमनवाप्य—अनिर्वर्त्येति पाठे तु मा स्वकृता निर्वृत्तिमगमयित्वा स्वभोगजन्यसुखेन तृप्तमकृत्वा— घोरे विरहदुःखे त्यक्तुं पातयितुं त्वं नार्हसीत्यन्वयः । अतस्तिष्ठतिष्ठ वचासि कृणवावहै गोष्ठीः करवावहै । वीप्साऽऽदरार्था ॥ ३४ ॥ एवमुक्ते आत्मानं पश्यन्त्या तस्यां दयामुत्पादयन् आह— सुदेहोऽयमिति । देवतारूपाया त्वयि दयैव

**ऐलोऽपि शयने जायामपश्यन् विमना इव ॥ तच्चित्तो विह्वलः शोचन् बभ्रामोन्मत्तवन्महीम् ॥ ३२ ॥ स ता वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ॥ पञ्च प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः ॥ ३३ ॥ अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि ॥ मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै ॥ ३४ ॥ सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया ॥ खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३५ ॥ उर्वश्युवाच ॥ मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाऽद्युर्वृका इमे ॥ क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥ ३६ ॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ॥ घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत ॥ ३७ ॥**

युक्ता न क्रौर्यमिति सूचयन्सम्बोधयति— देवीति। अयं मदीयः सुष्ठु कमनीयो देहोऽत्रास्मिन्नेव स्थाने पतति । तत्र हेतुमाह— त्वया विदूरं हृतस्त्यक्त इति। अतो मयि प्रसादं कुर्विति शेषः। त्वत्प्रसादस्यास्पद विषयो न भविष्यति चेत्तर्ह्येनमत्र पतितं देहं वृका गृध्राश्च खादन्ति खादिष्यन्तीत्यन्वयः ॥ ३५ ॥ एवमुक्तोर्वश्याह— मेति । मा मृथाः न म्रियस्व । यतस्त्वं पुरुषोऽसि अतो धैर्यमावह । अत इमे प्रसिद्धा वृकास्त्वा मा स्म अद्युः न भक्षयेयुः । मामेवं प्रबोधयसि चेत्तर्हि त्वमेव कृपां कुतो न करोषि इत्याशङ्क्याह— क्वापीति । स्त्रीणां क्वापि सख्यं नैवास्ति । तत्र हेतुमाह— यथा क्रूरं वृकाणां हृदयं तथैव स्त्रीणां हृदयमिति ॥ ३६ ॥ तदेव प्रपञ्चयति— स्त्रिय इति। अकरुणाः कृपारहिताः, क्रूराः क्रूरस्वभावाः, दुर्मर्षाः क्षमारहिताः, प्रिये निमित्ते साहसं स्वसामर्थ्यं लोकपरलोकहान्यादिकमविचार्यैव प्रवृत्तिर्यासां ताः, अतोऽल्पार्थे स्वल्पप्रयोजनेऽपि निमित्ते सति विस्रब्ध विश्वासप्राप्तं पतिं भ्रातरमपि घ्नन्ति, अन्यान् घ्नन्तीति किमुत वक्तव्यम्? । अत्र सन्देहो नास्ति लोके प्रसिद्धत्वादित्याशयेनाह— हीति ॥ ३७ ॥

किञ्च अज्ञेषु स्त्रीस्वभावानभिज्ञेषु अलीकविश्रम्भं कपटेन विश्वासं विधाय अतस्त्यक्तसौहृदाः स्नेहरहिताः पुंश्चल्यः व्यभिचारिण्यः नवं नवं कान्तमभीप्सन्त्यः कामयमानाः स्वैरं यथेच्छं वृत्तिर्यासां तथा भवन्ति। अतो मत्सख्यं त्यजेत्याशयः ॥ ३८ ॥ एवमुक्तेऽपि तच्छान्तिमदृष्ट्वाऽऽह— संवत्सरान्त इति। भो ईश्वर समर्थ तव धैर्यमेव युक्तं संवत्सरान्ते एकरात्रं भवान् मया सह वत्स्यति। तथा सति ते तवापराण्यपि अपत्यानि भविष्यन्तीत्यन्वयः। हीति निश्चये, अत्र सन्देहो न कर्तव्य इत्यर्थः। अपराणीति वचनात् स्वस्या अन्तर्वत्नीत्वं सूचितम् ॥ ३९ ॥ ततस्तां देवीमुर्वशीमन्तर्वत्नीं गर्भिणीमुपालक्ष्य ज्ञात्वा स पुरूरवाः स्वपुरं प्रययौ। ततः पुनः अब्दान्ते संवत्सरावसाने तत्र कुरुक्षेत्रे स गतः सन् वीरमातर पुत्रेण सहागता उर्वशीमुपलभ्य दृष्ट्वा मुदा हर्षेण युक्तस्तया सह ता निशा सम्यगुवास ॥ ४० ॥ अथ निशावसाने स्वविरहेण स्वविश्लेषेण आतुर व्याकुलं अतएव

विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः ॥ नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ३८ ॥ संवत्सरान्ते हि भवानेकरात्रं मयेश्वर ॥ वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भो ॥ ३९ ॥ अन्तर्वत्नीमुपालक्ष्य देवी स प्रययौ पुरम् ॥ पुनस्तत्र गतोऽब्दान्त उर्वशीं वीरमातरम् ॥ उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ ४० ॥ अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥ गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति ॥ ४१ ॥ तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ॥ उर्वशीं मन्यमानस्तां सोऽबुद्ध्यत चरन्वने ॥ ४२ ॥ स्थालीं न्यस्य वने गत्वा गृहानाध्यायतो निशि ॥ त्रेतायां सम्प्रवृत्तायां मनसि त्र्यव्यवर्तत ॥ ४३ ॥

कृपण दीनमेनं पुरूरवसमुर्वशी प्राह। तद्वचनमाह— त्वमिमान् गन्धर्वान् उपधाव स्तुत्यादिना प्रीतान् कुरु, ते च तुभ्य मा दास्यन्तीति ॥ ४१ ॥ तव तथा मोहो नास्तीति सूचयन्सम्बोधयति— नृपेति। तस्य पुरूरवसः संस्तुवतः सतस्तुष्टाः प्रीता गन्धर्वास्तस्मै अनेनाग्निनोर्वशीलोकप्राप्तिसाधनं कर्म कृत्वा ततः उर्वशीं प्राप्स्यतीति अभिप्रायेणाग्निस्थालीं पात्रविशेष ददुः। ततः स ता स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन् नेयमुर्वशी किन्तु अग्निस्थालीत्यबुद्ध्यत ॥ ४२ ॥ ततश्च ता स्थालीं वने एव न्यस्य निधाय गृहे गत्वा निशि नित्यं तामेव ध्यायतस्तस्य मनसि त्रेताया सम्प्रवृत्तायां त्रेतायुगारम्भे त्र्यव्यवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूदित्यर्थः ॥ ४३ ॥

ततश्च स स्थालीस्थापनस्थलं गतः सन् शम्या गर्भे जातमश्वत्थ विलक्ष्य दृष्ट्वाऽस्मिन्नग्निरस्तीति च ज्ञात्वा तेनाश्वत्थेन द्वे अरणी मथनकाष्ठे कृत्वा उर्वशीलोकप्राप्तिकाम्यया ॥ ४४ ॥ अधरारणिमुर्वशीं ध्यायन् उत्तरामरणिं चात्मान ध्यायन् उभयोर्मध्ये यत्काष्ठ तत्प्रजननं पुत्र ध्यायन् प्रभुः पुरूरवाः मन्त्रतः अग्निमन्थनप्रकाशकमन्त्रप्रयोगपूर्वकमग्निं ममन्थेति शेषेण द्वयोरन्वयः । तस्य तेन कृतान्निर्मन्थनात् जातवेदा जात वेदो धन भोग्यं यस्मात्तथाभूतः विभावसुरग्निर्जातः । स च त्रय्या विद्यया तद्विहितेनाधानसंस्कारेण त्रिवृत् आहवनीयः गार्हपत्यः दक्षिणाग्निरिति त्रिरूपः सन् पुण्यलोकप्रापकत्वात् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः ॥ ४५ ॥ ४६ ॥ तत उर्वशीलोकमन्विच्छन् पुरूरवास्तेन साधनभूतेनाग्निना यज्ञेशं यज्ञफलदातारं अयजतेत्यन्वयः । कोऽसौ यज्ञेशस्तत्राह—भगवन्तामिति । ननु यज्ञेनेन्द्रादिदेवाराधनं प्रसिद्धं कथं तेन भगवदाराधनं तत्राह— सर्वदेवमयामिति । कथं तस्य सर्वदेवमयत्वमित्यपेक्षाया सर्वान्तर्यामित्वादित्याशयेनाह—अधोक्षजामिति, अधः अक्षजं ज्ञानं यस्मात्तम्। कथं तस्य यज्ञफलदातृत्वमित्यपेक्षायामाह—

स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ॥ तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४४ ॥ उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्ये यत्तत्प्रजननं प्रभुः ॥ ४५ ॥ तस्य निर्मन्थनाज्जातो जातवेदा विभावसुः ॥ त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितास्त्रिवृत् ॥ ४६ ॥ तेनायजत यज्ञेशं भगवन्तमधोक्षजम् ॥ उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४७ ॥ एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ॥ देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ४८ ॥ पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप ॥ अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ४९ ॥
इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चन्द्रवंशनिरूपणप्रकरणे ऐलवृत्तनिरूपणं नाम चतुर्दशोऽध्यायः॥ १४ ॥ ॥

हरिमिति आश्रितार्तिहरमित्यर्थः ॥ ४७ ॥ नन्वनादिवेदबोधितः कर्ममार्गः कथमाधुनिक इव निरूप्यते इत्याशङ्क्य कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वे भगवद्ध्याननिष्ठा एव जना अतोऽनादिरपि तदा न प्रवृत्तः। रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन पुरूरवसः सकाशात् प्रकटो जात इत्याशयेनाह— एक इति सार्धेन। पुरा कृतयुगे सर्वासां वाचा बीजभुतः प्रणव एक एव वेद आसीत्। तथा देवोऽप्येको नारायण एवासीत्, नान्यः। अग्निश्चैको लौकिक एव। वर्णश्चैको हंसाख्य एव ॥ ४८ ॥ हे नृप त्रयी वेदत्रयं तु त्रेतामुखे पुरूरवसः सकाशादेवासीत् । ततो राजा पुरूरवाः अग्निना प्रजया परलोकसाधनभूतेन पुत्रत्रयाङ्गीकृतेन गान्धर्वलोकमेयिवान् जगाम ॥ ४९ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिंधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ चतुर्दशो गतो वृत्तिमैलवृत्तनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

ऐलपुत्रान्वये जातो गाधिस्तत्तनयासुतः ॥ रामः पञ्चदशे तस्य चरितं विनिरूप्यते ॥ १ ॥ ॥ एवमैलचरितं निरूप्य तद्वंशं निरूपयति— ऐलस्येति। वंशश्रवणे सावधानतार्थं सम्बोधयति— नृपेति । ऐलस्य पुरूरवसः उर्वशीगर्भात् षट् आत्मजा पुत्राः आसन् जाताः । तेषां नामान्याह—आयुरित्यादि ॥ १ ॥ तेषां षण्णां वंशानाह— श्रुतायोः पुत्रो वसुमान्। सत्यायोः पुत्रश्च श्रुतञ्जयः । धनञ्जय इति पाठान्तरम्। रयस्य सुतः एकः एकसञ्ज्ञः । श्रुत इति पाठे तु श्रुतसञ्ज्ञः एकसञ्ज्ञश्चेति द्वौ पुत्रौ । जयस्य तनयो विभुः । अमित इति पाठान्तरम् ॥ २ ॥ विजयस्य पुत्रो भीमः । अथ तस्य तु काञ्चनः । ततश्च होत्रको जातः।तस्य सुतो जह्नुः । त विशिनष्टि— यो जह्नुर्गङ्गां गण्डूषीकृत्य अपिबत्सः॥ ३ ॥ जह्नोस्तु पुत्रः पूरुः। तस्य पुत्रो बलाकः। तस्य चात्मजः पुत्रः अजकः । ततः कुशो जातः । कुशस्यापि कुशाम्बुः मूर्तयो वसुः कुशनाभश्चेति चत्वारः पुत्रा जाताः । कुशाम्बुतो गाध्याख्यः पुत्र

श्रीशुक उवाच ॥ ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ॥ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥ १ ॥
श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतञ्जयः ॥ रयस्य सुत एकश्च जयस्य तनयो विभुः ॥ २ ॥ भीमस्तु विजयस्याथ
काञ्चनो होत्रकस्ततः ॥ तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ॥ ३॥ जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजो-
ऽजकः ॥ ततः कुशः कुशस्यापि कुशाम्बुर्मूर्तयो वसुः ॥ कुशनाभश्च चत्वारो गाधिरासीत्कुशाम्बुजः ॥ ४ ॥ तस्य
सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ५ ॥ एकतः श्यामकर्णानां हयानां
चन्द्रवर्चसाम् ॥ सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम् ॥ ६ ॥

आसीत् ॥ ४ ॥गाधेः पुत्रोऽपि विश्वामित्रो ब्रह्मर्षिरासीदिति 'गाधेरभून्महातेजाः' इत्यादिनोत्तराध्यायान्ते वक्ष्यति तत्र तावत्तदुपोद्घातत्वेन भृगुवंशप्रभवस्य ऋचीकस्य चरित प्रसक्तानुप्रसक्त्या परशुरामावतारतच्चरितादिकं चाह— तस्य सत्यवतीमित्यादिना । तस्य गाधेः सत्यवत्याख्या कन्यामृचीकाख्यो द्विजो ब्राह्मणोऽयाचत । गाधिस्तं वरं विसदृशं कन्याया अननुरूपं मत्वा भार्गवमृचीकमब्रवीत् ॥ ५ ॥ तद्वचनमाह— एकत इति । दक्षिणवामपार्श्वयोर्मध्ये एकतः एकस्मिन् पार्श्वे श्यामः कर्णो येषां तेषा तथा सर्वे देहे चन्द्रस्येव वर्चो येषां तेषा हयानां सहस्रं मे कन्यायाः शुल्क विवाहोचितं देयं दीयतां तर्हि कन्यां दास्यामि । ननु कथमेवं कन्याया महत्त्वं येनैतद्देयमित्याशङ्क्याह—कुशिका वयमिति। यतो वयं कुशिका अतिकुलीनाः, अतोऽस्मत्कन्या दुर्लभेत्यर्थः ॥ ६ ॥

१ 'तनयोऽमित ' इति क्वचित्पाठ । २ 'मूर्तय' ' इति 'तनय ' इति 'मूर्तज' ' इति च पाठत्रयम् । तत्र तनयसञ्ज्ञ एक पुत्र । ३ षोडशाध्याये [ श्लोक २८ ]

इत्येव गाधिनोक्तः स ऋचीकः तस्य गाधेर्मतं मामननुरूपं मत्वा एवम्भूतानामश्वानां दुर्लभत्वात् मा प्रतारयितुमेव वदतीति ज्ञात्वा वरुणस्यान्तिकं गतः, ततो याचित्वा तास्तदुक्तविधानश्वान् आनीय दत्त्वा वरमाननं यस्यास्तां सत्यवतीमुपयेमे विवाहितवान् ॥ ७ ॥ ततः कदाचित् स ऋषिः ऋचीकः अपत्यकाम्यया आत्मनः पुत्रेच्छया् पत्न्या सत्यवत्या श्वश्र्वा तन्मात्रा च प्रार्थितः उभयैर्ब्राह्मैः क्षात्रैश्च मन्त्रैश्चरुं श्रपयित्वा तत्र स्वस्य ब्राह्मणत्वात् पत्न्याः पुत्रार्थं ब्राह्ममन्त्राभिमन्त्रितमेकं चरुं श्वश्र्वाश्च क्षत्रियत्वात् तत्पुत्रार्थं क्षात्रमन्त्राभिमन्त्रितमपरं चरुं श्रपयित्वेत्यर्थः। स्वयं तु मुनिः स्नातुं गतः ॥ ८ ॥ यावत्स्नात्वा मुनिर्निर्गतस्तावत् भार्यायां भर्तुः स्नेहाधिक्यात् सत्यवत्याश्चरुं श्रेष्ठं मत्वा तया मात्रा याचिता सती सत्यवती ब्रह्ममन्त्राभिमन्त्रितं स्वचरुं स्वमात्रे अयच्छत्। मातुस्तु चरुं क्षात्रमन्त्राभिमन्त्रितं स्वयमदत् आदत् भक्षितवती ॥९॥ ततः स्नात्वा आगतो मुनिः तच्चरुविपर्ययरूपं कर्म ज्ञात्वा पत्नीं प्राह। तदाह-

इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ॥ आनीय दत्त्वा तानश्वानुपयेमे वराननाम् ॥ ७ ॥ स ऋषिः प्रार्थितः
पत्न्या श्वश्र्वा चापत्यकाम्यया ॥ श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥ तावत् सत्यवती मात्रा स्वचरुं याचिता
सती ॥ श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे मातुरदत्स्वयम् ॥ ९ ॥ तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ॥ घोरो दण्डधरः
पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥ प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ॥ अथ तर्हि भवेत्पौत्रो जमदग्निस्ततो
ऽभवत् ॥ ११ ॥ सा चाभूत्सुमहापुण्या कौशिकी लोकपावनी ॥ रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥
तस्यां वै भार्गवऋषेः सुता वसुमदादयः ॥ यवीयान् जज्ञ एतेषां राम इत्यभिविश्रुतः ॥ १३ ॥

त्वं चरुविनिमयरूपं कष्टं जुगुप्सितं कर्म अकारषीः अकार्षीः कृतवत्यसि। अतस्तव पुत्रो दण्डधरः शस्त्रधारी घोरः क्रूरस्वभावश्च भविता। तव भ्राता तु ब्रह्मवित्तमो भविता ॥ १० ॥ ततश्चैवं मा भूदित्येवं सत्यवत्या प्रसादितः प्रार्थितो भार्गवः ऋचीकः अथ यद्येवं पुत्रो न भविता तर्हि तव पौत्रस्त-थाविधो भवेत्, इत्याहेति शेषः। ततश्च सत्यवत्यां जमदग्निः शान्तस्वभावोऽभवत् ॥ ११ ॥ सा च सत्यवती लोकपावनी लोकपापविनाशकरी यतो महापुण्या महापुण्यावहा कौशिकी नदी अभूत्। अथ जमदग्निर्या रेणोः सुतां रेणुकाख्यामुवाह तस्यां वै रेणुकायां भार्गवऋषेर्जमदग्नेर्वसुमदादयो सुता जज्ञिरे इति शेषेण द्वयोरन्वयः। एतेषां वसुमदादीनां यः यवीयान् कनीयान् स राम इत्यभिविश्रुतः प्रख्यातः ॥ १२ ॥ १३ ॥

तं विशिनष्टि— यमिति । यं रामं वासुदेवस्य भगवतोऽशमंशावतारमाहुः । तदवतारप्रयोजनमाह— हैहयानां सहस्रार्जुनादीनां कुलस्य अन्तं नाशं करोतीत्यन्तकस्तम् । यो राम इमां महीं त्रिस्सप्तकृत्वः एकविंशतिवारं निःक्षत्रियां क्षत्रबीजरहितां चक्रे ॥ १४ ॥ एवं च भुवो भारमनीनशत् नाशयामास । भारभूतत्वादेव फल्गुनि अल्पेऽप्यंहसि अपराधे कृते सर्वं क्षत्रमहन् । कथं तस्य भारत्वमित्यपेक्षायामाह— दुष्टमिति । दृप्तमिति पाठान्तरम् । अतएव अब्रह्मण्यं ब्राह्मणेष्वसाध्विति । तत्र हेतुमाह— रजस्तमोभ्यां वृतमिति । अब्रह्मण्यमधार्मिकमिति पाठे त्वेक एवान्वयः ॥ १५ ॥ फल्गुन्यप्यंहसि कृते क्षत्रमहन् इत्युक्त्या लब्धावसरो राजा पृच्छति— किमिति । अकृतात्मभिः अवशीकृतान्तःकरणैः राजन्यैः तस्य भगवतः किमंहः कृतं? येन हिंसाहेतुनाऽभीक्ष्णशः पुनः पुनः क्षत्रियाणां कुलं नष्टम् ॥ १६ ॥ एव पृष्टः शुकः कार्तवीर्यार्जुनकृतमपराधं वक्तुं तस्य गर्वहेतुमैश्वर्यादिकमाह— हैहयानामिति षड्भिः । हैहयाना यादवविशेषाणा देशविशेषाणा वा अधिपतिः क्षत्रियेषु ऋषभः श्रेष्ठः अर्जुनः कार्तवीर्यः परिकर्मभिः परिचर्यादिभिर्दत्तं दत्तात्रेयमाराध्य दशशतं सहस्रं बाहून् तथा अरातिषु शत्रुषु दुर्धर्षत्वं शत्रुभिरपराजितत्व अव्याहतमिद्रियादिकं च योगेश्वरत्वमैश्वर्यं च लेभे लब्धवान् । अतो यथा पवनःअव्याहतगतिर्लोकेषु विचरति तथा अव्याहतगतिर्लोकेषु चचारेति त्रयाणामन्वयः । ननु दत्ताराधनेन कथमेतदुर्लभं लेभे इत्याशङ्क्याह— नारायणस्यांशमिति । इन्द्रियादीना समाहारद्वन्द्वः, ततोऽव्याहतशब्देन कर्मधारयः । तत्र ओजः इन्द्रियबलम्, श्रीर्धनम्, तेजः शरीरकान्तिः, वीर्य बुद्धिबलम्,यशः कीर्तिः, बलं शरीरबलम् । ऐश्वर्यं विशिनष्टि— यत्रेति । यस्मिन्नैश्वर्ये अणिमादयो गुणाः सन्ति तत् ॥ १७ ॥ १८॥१९॥

यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम् ॥ त्रिस्सप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १४ ॥ दुष्टं क्षत्रं भुवो भारमब्रह्मण्यमनीनशत् ॥ रजस्तमोवृतमहन् फल्गुन्यपि कृतेंऽहसि ॥ १५ ॥ राजोवाच ॥ किं तदंहो भगवतो राजन्यैरजितात्मभिः ॥ कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १६ ॥ श्रीशुक उवाच ॥ हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ॥ दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ १७ ॥ बाहून् दशशतं लेभे दुर्द्धर्षत्वमरातिषु ॥ अव्याहतेन्द्रियौजः श्रीतेजोवीर्ययशोबलम् ॥ १८ ॥ योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥१९॥

१ ' नारायणाशाश 'इत्यपि पाठ ।

स कदाचित् स्त्रिय एव रत्नानि तैरावृतः परिवेष्टितः वैजयन्तीं नवरत्नरचितां स्रज माला बिभ्राणः रेवाम्भसि नर्मदाजले क्रीडन् भुजैः सरित रुरोध। ननु पुण्यतीर्थे एव स्त्रीभिः क्रीडाया निषिद्धत्वात् कथं तत्र ताभिः क्रीडितवान् ? कुतो वा सरितं रुरोध तत्राह— मदोत्कट इति, उत्सिक्तमद इत्यर्थः ॥ २० ॥ तदा दिग्विजयाय निर्गतो दशाननो रावणो माहिष्मत्याः समीपतो नर्मदातीरे देवपूजां कुर्वंस्तेन प्रवाहस्यावरोधात् प्रतिस्रोतसः परावृत्तप्रवाहायाः सरितो नर्मदायाः जलैः स्वशिबिरं स्वसेनानिवासस्थान विप्लावितमालक्ष्य तस्य तद्वीर्यं नद्यवरोधसामर्थ्यं नामृष्यत् न सेहे। तत्र हेतुमाह— वीरमानीति। तस्मादप्यात्मानं वीरं मन्यमान इत्यर्थः ॥ २१ ॥ ततश्च कृतकिल्बिषः क्रीडन्तमभिभवितुं प्रवृत्तः सन् स्त्रीणा समक्षं येनार्जुनेन लीलयाऽनायासेनैव गृहीतो माहिष्मत्यां स्वपुर्यां सन्निरुद्धः पश्चान्मुक्तश्च। तत्र दृष्टान्तमाह— कपिर्यथेति। यथा कपिः स्वेच्छया गृह्यते विमुच्यते च तद्वदित्यर्थः ॥ २२ ॥

स्त्रीरत्नैरावृतः क्रीडन्नेवाम्भसि मदोत्कटः ॥ वैजयन्तीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥ २० ॥ तदा[3] कुर्वन् देवपूजां माहिष्मत्याः समीपतः ॥ विप्लावितं स्वशिबिरं प्रतिस्रोतस्सरिज्जलैः ॥ नामृष्यत्तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥ गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ॥ माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥ स एकदा तु मृगयां विचरन् गहने[4] वने ॥ यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥ तस्मै स नरदेवाय मुनिरर्हणमाहरत् ॥ ससैन्यामात्यवाहाय हविष्मत्या तपोधनः ॥ २४ ॥ स वीरस्तत्र तद्दृष्ट्वा आत्मैश्वर्यातिशायनम् ॥ तन्नाद्रियता-मिहोत्र्यां साभिलाषः सहैहयः ॥ २५ ॥

एवम्प्रभावोऽप्यर्जुनो भगवता रामेणानायासेनैव निहत इत्याशयेन तत्कृतमपराधं सप्रसङ्गमाह— स एकदेत्यादिना। सोऽर्जुनः एकदा कदाचित् गहने गह्वरे वने मृगयां विचरन् कुर्वन् यदृच्छया जमदग्नेराश्रमपदं स्थानमुपाविशत् ॥ २३ ॥ स मुनिस्तस्मै आगताय नरदेवायार्जुनाय सैन्यामात्यवाहनसहिताय हविष्मत्या कामधेन्वाऽर्हणमातिथ्यमाहरत् चक्रे। तत्र हेतुमाह— तपोधन इति, तप एव धनं यस्य। अतो लौकिकन्यायोपार्जितं धनं यतो नास्तीत्याशयः ॥ २४ ॥ ततश्च सहैहयः हैहयैः सह वर्तमानः सोऽर्जुनस्तत्र मुन्याश्रमे आत्मन ऐश्वर्यादप्यतिशायिनमतिशययुक्तं तत्कामधेन्वा सम्पादितमैश्वर्यं दृष्ट्वा तन्मुनिकृतं आतिथ्यं नाद्रियत तस्मिन्नातुष्यत्। तत्र हेतुः— अग्निहोत्र्यां होमधेनौ साभिलाषः। ननु कथं परपदार्थेऽभिलाष कृतवांस्तत्राह— वीर इति। यतो वीराभिमानवानित्यर्थः ॥ २५ ॥



१ तस्य सहस्रार्जुनस्य। २ रावण इत्यर्थाज्ज्ञेयम्। ३ 'तदा' इत्ययमर्धश्लोकः कुत्रचिन्न दृश्यते। ४ 'विपिने' इति 'विजने' इति च क्वचित्पाठौ।

अतो दर्पादेव ऋषेः सकाशात् हविर्धानीं कामधेनुं हर्तुं नरान् स्वभटान् अचोदयत् । ते च भटाः सवत्सां क्रन्दतीं तां बलात् माहिष्मतीं पुरीं प्रति निन्युः ॥ २६ ॥ अथानन्तरं राजनि अर्जुने निर्याते गते सति पूर्वं क्वचिद्गतो रामः पितुराश्रममागतः तस्यार्जुनस्य तद्गोहरणरूपं दौरात्म्यं दौर्जन्यं श्रुत्वा आहतस्ताडितोऽहिः सर्प इव चुक्रोध ॥ २७ ॥ ततश्च घोरं भीषणं परशुं सतूणं कार्मुकं चर्म चादाय गृहीत्वा तमन्वधावत । तत्र दृष्टान्तमाह— मृगेन्द्रः सिंहो यूथपं गजं यथाऽनुधावति तद्वदित्यर्थः । तत्र हेतुमाह— दुर्धर्ष इति, मृगेन्द्र इव धर्षयितुमशक्य इत्यर्थः ॥ २८ ॥ तं भृगुवर्यं राममोजसा वेगेनापतन्तमागच्छन्तं पुरीं विशन्नर्जुनो ददर्शेत्यन्वयः । तं विशिनष्टि— धनुर्धरम्, बाणपरश्वधौ आयुधे यस्य तम्, ऐणेयं चर्म कृष्णाजिनमम्बरं यस्य, अर्क-

हविर्धानीमृषेर्दर्पान्नरान् हर्तुमचोदयत् ॥ ते च माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २६ ॥ अथ राजनि निर्याते राम आश्रममार्गतः[1] ॥ श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाऽहिरिवाऽऽहतः ॥ २७ ॥ घोरमादाय परशुं सतूणं चर्म कार्मुकम् ॥ अन्वधावत दुर्धर्षो[2] मृगेन्द्र इव यूथपम् ॥ २८ ॥ तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ॥ ऐणेयचर्माम्बरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं विशन् ॥ २९ ॥ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥ यतो यतोऽसौ प्रहरत्परश्वधो मनोनिलौजाः परचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥

स्येव धाम तेजो यासां ताभिर्जटाभिर्युतमिति ॥ २९ ॥ ततोऽर्जुनो हस्त्यादिभिर्गदादिशस्त्रविशेषैश्चातिभीषणाः सप्तदशाक्षौहिणीः सेना अचोदयत् प्रेषितवान् । तास्तु रामः एकः असहाय एव असूदयत् जघान । तत्सामर्थ्ये हेतुं सूचयन्नाह— भगवानिति । अक्षौहिणीप्रमाणं तु प्रथमस्कन्ध एवोक्तं ज्ञेयम् ॥ ३० ॥ प्रहरन् परश्वधो यस्य सः, मनश्च अनिलश्च तयोरिव ओजः वेगो यस्य सः, परेषां शत्रूणां चक्रं सैन्यं सूदयति नाशयति इति तथा ऽसौ रामो यतो यतो यत्र यत्र सैन्ये विचक्रमे ततस्ततः तत्र तत्र उर्व्यां रणभूमौ छिन्ना भुजा उरवः कन्धराश्च येषां तथा हताः सूता वाहनानि च येषां ते वीरा निपेतुः ॥ ३१ ॥

१ 'आश्रम आगत' इति कुत्रचित्पाठ । २ 'दुर्मर्ष' इति पाठान्तरम् ।

ततो रामस्य कुठारेण परशुना सायकैश्च विवृक्णाः छिन्नाः चर्मादयो यस्य तथाभूतं स्वसैन्य रुधिरस्यौघेन कर्दमो यस्मिंस्तस्मिन् रणाजिरे युद्धाङ्गणे निपातितं दृष्ट्वा हैहयोऽर्जुनो रुषा क्रोधेन आपतत् स्वयमेव योद्धुमाजगामेत्यन्वयः ॥ ३२ ॥ अथ स सहस्रभुजोऽर्जुनः पञ्चशतेषु धनुष्षु पञ्चशत-सङ्ख्याकैर्बाहुभिः पञ्चशतसङ्ख्याकान् बाणान् रामाय रामं हन्तुं युगपत्सन्दधे । एकं धनुरेव सहायभूतं यस्य स एकधन्वा रामस्तानि धनूंषि इषुभिः स्वप्रयुक्तबाणैः सममेकदैव तत्क्षणमेवाच्छिनत् । तत्र सामर्थ्यमाह— अस्त्रभृतां समग्रणीः मुख्य इति ॥ ३३ ॥ पुनः स्वहस्तैः अचलान् पर्वतान् अङ्घ्रिपान् वृक्षांश्चोत्क्षिप्य उपादाय मृधे सङ्ग्रामभूमौ वेगादभिधावतस्तस्यार्जुनस्य भुजान् कठोरनेमिना तीक्ष्णधारेण कुठारेण रामः प्रसभं बलात् युधि

दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ॥ विवृक्णचर्मध्वजचापविग्रहं निपातितं हैहय आपतद्रुषा ॥ ३२ ॥ अथार्जुनः पञ्चशतेषु बाहुभिर्धनुष्षु बाणान् युगपत्स सन्दधे ॥ रामाय, रामोऽस्त्रभृतां समग्रणीस्तान्येकधे-न्वेषुभिराच्छिनत्समम् ॥ ३३ ॥ पुनः स्वहस्तैरचलान् मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ॥ भुजान् कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥ कृत्तबाहोः शिरस्तस्य गिरेः शृङ्गमिवाहरत् ॥ हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ॥ समुपेत्याऽऽश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥ ३६ ॥ स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ॥ वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥

चिच्छेद । तत्र दृष्टान्तमाह— अहेरिवेति । अहेः फणानिवेत्यर्थः । तुशब्दो रामप्रभावस्याश्चर्यद्योतनार्थः ॥ ३४ ॥ ततश्च कृत्ताः छिन्ना बाहवो यस्य तस्यार्जुनस्य शिर आहरत् चिच्छेद । तत्र दृष्टान्तमाह— गिरेः सकाशात् शृङ्गमिवेति । एवं पितरि अर्जुने हते सति अयुतसङ्ख्याकास्तस्यार्जुनस्य पुत्रा भयात् दुद्रुवुः पलायिता जाताः ॥ ३५ ॥ ततश्च परवीरहा रामः परिक्लिष्टां पराकर्षणेनातिदुःखितां सवत्सामग्निहोत्रीं धेनुमुपावर्त्य परावर्त्य स्वाश्रमं समुपेत्य आगत्य पित्रे समर्पयत् ॥ ३६ ॥ रामः तदर्जुनवधादिकृतं स्वकर्म पित्रे भ्रातृभ्यश्च वर्णयामास । एवकारस्तस्याभिमानसूचकः । तद्रामवर्णितमर्जुनवधं श्रुत्वा जमदग्निस्तमभाषत ॥ ३७ ॥

---

१ एकमेव धनुर्यस्य स. । पाठान्तरे ( एकधन्वेषुभिरित्येवरूपे ) एक एव धन्ध सन्धान येषा तैरिषुभि इति श्रीधरस्वामिचरणाः ।

तन्नाषणमेव दर्शयति—रामरामेति यावदध्यायसमाप्ति। सम्बोधनवीप्सया स्वखेदं सूचयति। अचिन्त्यशक्तिमतोऽपि तव पापाचरणमनुचितमेवेति सूचयन् पुनः सम्बोधयति—महाबाहो इति। भवान् पापमकार्षीत्। अत्र रेफोत्तराकार आर्षः। किं तत्पापमित्यत आह—अवधीदिति। नरदेवमर्जुनं यदवधीत्। यद्यपि प्राणिमात्रस्य हिंसा निषिद्धा तथापि राजहिंसाया आधिक्यं सूचयन्नाह—सर्वदेवमयमिति। तेनास्मद्धेनुहरणाद्धत इति चेत्तथापि तपोधनानामस्माकं तां धेनुं विनाऽपि कार्यनिर्वाहात्तदर्थं तद्धननं वृथैवेत्याशयेनाह—वृथेति ॥ ३८ ॥ ननु तथापि अस्मज्जीविकादिहेतुभूतधेनुहरणेन आततायित्वात् कथं तद्धनने पापं भवति 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति तत्र दोषनिषेधादित्याशङ्क्य तथापि क्षमारूपमुख्यधर्मनाशकत्वेन तदस्माकं नोचितमित्याशयेनाह—वयमिति। तव स्नेहवशाद्धितमेवोपदिश्यते इत्याशयेन सम्बोधयति—तातेति। हीति निश्चये। वयं ब्राह्मणाः क्षमयैवार्हणतां पूज्यतां गताः प्राप्ताः। क्षमामेव स्तौति—ययेति। यया क्षमया सर्वलोकानां गुरुः पूज्यो देवो ब्रह्मा पारमेष्ठ्यं सर्वोत्कृष्टं पद स्थानमगात्

राम राम महाबाहो भवान् पापमकारषीत् ॥ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥ ३८ ॥ वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः ॥ यया लोकगुरुर्देवः पारमेष्ठ्यमगात् पदम् ॥ ३९ ॥ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ॥ क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४० ॥ राज्ञो मूर्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः ॥ तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥ ४१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे परशुरामचरितनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥

प्राप्तवान् ॥ ३९ ॥ क्षमयैव ब्राह्मी ब्राह्मणकुलसम्बन्धिनी लक्ष्मीः शमदमादितेजो रोचते प्रकाशते। यथा सौरी सूर्यस्य प्रभा रोचते तथा। किं बहुना? हरिः स्वाश्रितानां संसारक्लेशहर्ता। तत्र सामर्थ्यमाह—ईश्वरः। तत्र हेतुः—भगवान् क्षमिणा क्षमावतामेवाशु तुष्यते प्रसन्नो भवतीत्यर्थः ॥ ४० ॥ हे अङ्ग यतो मूर्धाभिषिक्तस्य[1] अभिषेकपूर्वकं राज्यं स्थापितस्य राज्ञो वधो ब्रह्मवधादपि गुरुः ब्राह्मणवधपापादप्युत्कटपापजनकः, तस्मात्त्वमच्युते भगवति चेतना चित्तं यस्य तथाभूतः सन् तीर्थाना गङ्गादीना सम्यक् सेवया अंहोऽर्जुनवधपापं जहि अपाकुरु। सम्पदेन दमादिपूर्वकत्वं सूचयति। यथोक्तम्—'यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ पापं न कुरुते यस्तु वाङ्मनोभ्यां शरीरतः ॥ यथाशक्त्या च दानेन स तीर्थफलमश्नुते' इति ॥ ४१ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ पञ्चदशो गतो वृत्तिं रामवंशनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

[1] 'जातो विप्रात् क्षत्रियाया नाम्ना मूर्धावसिक्तक' इति स्मृतिरिति सुबोधिनीकाराः।

क्षत्रवधश्च रामेण यज्ञादिकरणं तथा ॥ विश्वामित्रान्वयश्चापि षोडशे विनिरूप्यते ॥ १ ॥ ॥ एवं पित्रोपशिक्षित आदिष्टो रामस्तथास्त्विति अङ्गीकृत्य संवत्सरपर्यन्त तीर्थचर्यां चरित्वा कृत्वा पुनराश्रममाययौ । पित्राद्याज्ञापालन तु तवापि सम्मतमेवेतीत्याशयेन सम्बोधयति—कुरुनन्दनेति ॥ १ ॥ एवं स्थिते कदाचिद्रेणुका उदकाहरणार्थ नदीं गङ्गां गता, तत्र गङ्गायां गङ्गातीरे अप्सरोभिः सह क्रीडन्तं पद्ममालिनं गन्धर्वराज चित्ररथाख्यमपश्यत् । तं क्रीडन्तं विलोकयन्ती सती किञ्चिदीषच्चित्ररथे स्पृहा यस्याः सा होमवेलां न सस्मार विस्मृतवती ॥ २ ॥ ३ ॥ ततश्च त कालात्ययं होमकालातिक्रमं विलोक्य मुनेः जमदग्नेः शापाच्छङ्किता भीता रेणुका त्वरया आगत्य जमदग्नेः पुरोऽग्रे जलकलशं निधाय कृताञ्जलिः संयोजिताञ्जलिः सती तस्थौ ॥ ४ ॥ ततो मुनिः योगप्रभावेणैव पत्न्या रेणुकायाः व्यभिचारं चित्ररथेन भोगेच्छात्मकं ज्ञात्वा प्रकुपितः सन् पुत्रानब्रवीत । हे पुत्रकाः पापां

श्रीशुक उवाच ॥ पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन ॥ संवत्सरं तीर्थचर्यां[1] चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥ कदाचिद्रेणुका याता[2] गङ्गायां पद्ममालिनम् ॥ गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥ विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ॥ होमवेलां न सस्मार किञ्चिच्चित्ररथस्पृहा ॥ ३ ॥ कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ॥ आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥ ४ ॥ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ॥ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ॥ ५ ॥ रामः सञ्चोदितः पित्रा भ्रातॄन् मात्रा सहावधीत् ॥ प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥ वरेण च्छन्दयामास प्रीतः सत्यवतीसुतः ॥ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ७ ॥

परपुरुषे दत्तचित्तामेनां स्वमातरं घ्नत मारयत । ते पुत्रा इत्येवमुक्ता अपि मातृवधं न चक्रिरे ॥ ५ ॥ ततः पित्रा सञ्चोदितः आज्ञोल्लङ्घिना भ्रातृणा मातुश्च वधे प्रेरितो रामः भ्रातॄन्मात्रा सह अवधीत् । कथमेवमकृत्य कृतवान् इत्याशङ्क्याह— प्रभावज्ञ इति । स मुनेर्यः समाधिस्तपश्च तयोः सम्यक् प्रभावं जानातीति तथा । यदि न हन्यां तर्हि कोपेन मामपि शप्तुं शक्तः, यदि वा हन्या तर्हि प्रसादितः सन् मृतानपि पुनर्जीवयितुं समर्थ इति जानन्नित्यर्थः ॥ ६ ॥ ततः प्रीतः सन् सत्यवतीसुतः जमदग्निस्तं वरेण च्छन्दयामास वरं वृणीष्वेति चोदयामास । तदा रामोऽपि हतानां भ्रात्रादीनां पुनर्जीवनं तेषामात्मवधेऽस्मृतिं च वव्रे ॥ ७ ॥

---

१ 'तीर्थयात्राम्' इति पाठान्तरम् । २ गङ्गाया जलमध्ये याता प्रासेत्यर्थश्चिन्त्यः, टीकाया यातेत्यस्यार्थस्यादर्शनात् ।

ततस्ते भ्रातरः निद्रान्त इव अञ्जसा अनायासेन कुशलिनः पुनर्जीवन्तः सन्तः उत्तस्थुः। एवं रामचरितमुपसंहरति— एवं पितुस्तपो वीर्यं विद्वान् रामः सुहृदां भ्रात्रादीनां वधं चक्रे इति ॥ ८ ॥ इदानीं सर्वक्षत्रियवधे कारणमाह— येऽर्जुनस्येत्यादिना। राजवृत्तस्य क्रौर्यं सूचयन् सम्बोधयति— राजन्निति। अर्जुनस्य ये सुताः रामवीर्येण पराभूताः पलायितास्ते स्वपितुर्वधं रामकृतं स्मरन्तः क्वचिदपि शर्म सुखं न लेभिरे ॥ ९ ॥ एकदा तु सभ्रातरि भ्रातृभिः सहिते रामे स्वाश्रमाद्वनं गते सति लब्धं छिद्रं जमदग्निवधावसरो यैस्ते वैरं सिसाधयिषवः तद्वधेन प्रतिकर्तुमिच्छवोऽर्जुनसुतास्तदाश्रममुपागमन् ॥ १० ॥ पापे तद्धनने एव निश्चयो येषा ते तत्राभ्यगारे अग्निशालायां आसनिमुत्तमश्लोके अविद्यानिवर्तकयशसि भगवति आवेशिता स्थिरीकृता धीः

उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा ॥ पितुर्विद्वांस्तपो वीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥ येऽर्जुनस्य सुता राजन्
स्मरन्तः स्वपितुर्वधम् ॥ रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥ एकदाऽऽश्रमतो रामे सभ्रातरि वनं
गते ॥ वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥ दृष्ट्वाऽभ्यगार आसीनमावेशितधियं मुनिम् ॥ भगवत्युत्त-
मश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥ याच्यमानाः कृपणया राममात्राऽतिदारुणाः ॥ प्रसह्य शिर उत्कृत्य निन्युस्ते
क्षत्रबन्धवः ॥ १२ ॥ रेणुका दुःखशोकार्ता निघ्नन्त्यात्मानमात्मना ॥ राम रामेहि तातेति विचुक्रोशोच्चकैः सती ॥ १३ ॥
तदुपश्रुत्य दूरस्थो हा रामेत्यार्तवत्स्वनम् ॥ त्वरयाऽऽश्रममासाद्य ददृशे पितरं हतम् ॥ १४ ॥

येन तं मुनिं जमदग्निं दृष्ट्वा जघ्नुर्हतवन्तः ॥ ११ ॥ तदा च कृपणया दीनया राममात्रा रेणुकया याच्यमाना मैनं मारयतेति प्रार्थ्यमाना अपि ते[2] प्रसह्य बलात् तस्य शिर उत्कृत्य छित्त्वा निन्युः स्वपुरीं नीतवन्तः। तत्र हेतुमाह—अतिदारुणा अतिक्रूरस्वभावा इति। तथापि ब्राह्मणभक्ताना क्षत्रियाणां कथमेवं ब्राह्मणं प्रति क्रौर्यं सम्भवति तत्राह— क्षत्र[3]बन्धव इति। क्षात्रधर्मशून्या इत्यर्थः ॥ १२ ॥ दुःखं पतिवियोगजसन्तापः शोकोऽग्रे कथं तद्विना निर्वाह इति चिन्ता ताभ्यामार्ता पीडिता अतएव आत्मनाऽऽत्मानं हस्ताभ्यां शिरादि निघ्नन्ती ताडयन्ती सती रेणुका हे राम हे राम हे तात एहि शीघ्रमागच्छेत्येवं उच्चकैः विचुक्रोश जुहाव ॥ १३ ॥ ततस्तस्याः हा रामेत्यार्तवत्स्वनं पीडोपलक्षितं शब्दं दूरस्थो रामः उपश्रुत्य त्वरया आश्रममासाद्य हतं पितरं ददृशे ॥ १४ ॥

१ आर्तवत् स्वन शब्द तदुपश्रुत्येति सु० । अत्र तु तदित्यव्ययम्, तस्यार्थस्तस्या इति । २ कार्तवीर्यार्जुनस्य पुत्रा । ३ क्षत्रबन्धव क्षत्रियाधमा इति सु० ।

तत्तदा दुःखादीनां वेगेन विमोहितो रामः हा तात हे साधो हे धर्मिष्ठ अस्मान् त्यक्त्वा भवान् स्वर्गत एवं विलप्य रक्षार्थं पितुर्देहं भ्रातृषु निधाय स्वयं परशुं प्रगृह्य क्षत्रान्ताय क्षत्रियकुलविनाशाय मनो दधे सङ्कल्पं कृतवानिति द्वयोरन्वयः। तत्र दुःखं सन्तापः, रोषः क्रोधः, अमर्षः अपराधासहिष्णुता, आर्तिः दैन्यम्, शोकः भाविचिन्ता ॥ १५ ॥ १६ ॥ ततश्च स रामो माहिष्मतीं पुरीं गत्वा तन्मध्ये तेषां क्षत्रियाधमाना शीर्षभिश्छिन्नैः शिरोभिः महागिरिं चक्रे। ते स्वपापेनैव नष्टाः रामस्तु निमित्तमात्रमीश्वरत्वेन सर्वत्र समत्वादिति सूचयन् पुरीं विशिनष्टि— ब्रह्मेति । ब्रह्मघ्नैर्निमित्तभूतैर्विहता श्रीर्यस्यास्तामित्यर्थः। तथा दोषस्तव नास्तीति सूचयन् सम्बोधयति— राजन्निति ॥ १७ ॥ तेषा रक्तेन अब्रह्मण्याना भयावहा घोरा यतो रुधिरप्रवाहेण भयङ्करीं नदीं चक्रे। तथापि सर्वक्षत्रवधे किं कारणमित्यपेक्षायामाह— हेतुमिति सार्धेन। क्षत्रे अमङ्गलकारिणि अन्यायवर्तिनि सति पितृवधं हेतुं

तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ॥ हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥ १५ ॥ विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ॥ प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे ॥ १६ ॥ गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ॥ तेषां स शीर्षभी राजन् मध्ये चक्रे महागिरिम् ॥ १७ ॥ तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ॥ हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥ त्रिस्सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ॥ स्यमन्तपञ्चके चक्रे शोणितोदान् ह्रदान्नृप ॥ १९ ॥ पितुः कायेन सन्धाय शिर आदाय बर्हिषि ॥ सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥

निमित्तं कृत्वा प्रभुर्भगवान् रामः त्रिस्सप्तकृत्वः एकविंशतिवारं पृथ्वीं निःक्षत्रियां क्षत्रियबीजरहितां कृत्वा स्यमन्तपञ्चकाख्ये देशे शोणितोदान् ह्रदान् चक्रे इति द्वयोरन्वयः। ह्रदान्नृपेति पाठे नृपेति सम्बोधनम्। ह्रदान्पञ्चेति शेषः। ' स सर्वक्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ॥ स्यमन्तपञ्चके पञ्च चकार रुधिरह्रदान्' इति भारतोक्तेः। ह्रदान्नवेति तु पाठान्तरम्। त्रिस्सप्तकृत्वो रेणुकया दुःखावेशादुरस्ताडनं कृतं तेन रामोऽपि तावत्कृत्व एव क्षत्रमुत्सादितवान् इति तु लोकप्रसिद्धिः ॥ १८ ॥ १९ ॥ ततः पितुः शिर आदाय आनीय बर्हिषि यज्ञे तत्पितुः कायेन सह सन्धाय संयोज्य मखैः सर्वदेवमयं देवं विष्णुमयजत् आराधितवान्। सर्वदेवमयत्वे हेतुमाह—आत्मानमिति सर्वान्तरात्मानमित्यर्थः ॥ २० ॥

---

१ ' ह्रदान्नव ' इति क्वचित्पाठ । २ सुबोधिनीकारसम्मते पाठे इत्यर्थः ।

सर्वाया: पृथ्व्याः वशीकृतत्वात्तद्दानमाह— ददाविति द्वयेन ॥ २१ ॥ अन्येभ्य ऋत्विग्भ्यः अवान्तरदिशः आग्नेय्यादिदिशो ददौ । तन्मध्यतो भूमिं कश्यपाय ददौ । आर्यावर्तं विन्ध्याचलहिमाचलयोर्मध्यप्रदेशमुपद्रष्ट्रे ददौ । ततः आर्यावर्त्तात् परं परितः स्थितं देशं यथायोग्यं विभज्य सदस्येभ्यो ददौ ॥ २२ ॥ ततश्च ब्रह्मदैवत्यां सरस्वत्यां नद्यामवभृथस्नानेन विधूतानि निवृत्तानि अशेषाणि किल्बिषाणि यस्य सः व्यभ्रः मेघानन्तरितः अंशुमान् सूर्य इव रेजे ॥ २३ ॥ स जमदग्निस्तु संज्ञानं स्मृतिचैतन्यं तदेव लक्षणं चिह्नं यस्य तथाभूतं स्वदेहं लब्ध्वा रामेण पूजितः सन् ऋषीणां 'कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः' इत्युक्तानां सप्तर्षीणा मण्डले सप्तम एकतम ऋषिरभूत् ॥ २४ ॥ राज्ञामिव सप्तर्षीणामपि तत्तत्समये स्वकार्येऽधिकारित्वमिति सूचयन् सम्बोधयति— राजन्निति । जामदग्न्यो जमदग्निपुत्रो रामोऽपि आगामिनि मन्वन्तरे बृहत्

ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ॥ अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥ २१ ॥ अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः ॥ आर्यावर्त्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥ ततश्चावभृथस्नानविधूताशेषकिल्बिषः ॥ सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥ स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ॥ ऋषीणां मण्डले सोऽभूत्सप्तमो रामपूजितः ॥ २४ ॥ जामदग्न्योऽपि भगवान्रामः कमललोचनः ॥ आगामिन्यन्तरे राजन् वर्तयिष्यति वै[2] बृहत् ॥ २५ ॥ आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ॥ उपगीयमानचरितः सिद्धगन्धर्वचारणैः ॥ २६ ॥

ब्रह्म वेदं वर्तयिष्यति वै, वेदप्रवर्तकेषु सप्तर्षिष्वेकतम एव भविष्यतीत्यर्थः । तेष्वपि रामस्योत्कर्षं सूचयन्नाह— कमललोचनो भगवानिति ॥ २५ ॥ तर्हि सोऽधुना क्वास्ते इत्यपेक्षायामाह—आस्ते इति । महेन्द्राद्रौ महेन्द्रसञ्ज्ञके पर्वते अद्यापि स आस्ते । तर्हीदानीमपि क्षत्रियवधादिकं करिष्यति किमित्यपेक्षायामाह— न्यस्तदण्ड इति, न्यस्तः त्यक्तो दण्डो क्षत्रवधादिरूपो येन सः । तत्र हेतुमाह— प्रशान्ता क्रोधादिरहिता धीर्यस्य इति । तर्हि पूर्वं क्रूरस्वभावतया क्षत्रवधादिकरणादपकीर्तिस्तु जातैवेत्याशङ्क्य तत्तत्कर्मानुसारेण सुखदुःखादिफलं प्रयच्छतो भगवतोऽवतारत्वान्न तस्यापकीर्तिलेशोऽपि किन्तु शुभकीर्तिरेव जातेत्याशयेनाह—उपगीयमानेति । सिद्धगन्धर्वचारणैर्देवविशेषैरुपगीयमानं चरितं यस्य ॥ २६ ॥

१ सार्वविभक्तिकस्तासिः, मध्यम भूभागमित्यर्थ । २ वा एवार्थे ।

रामचरितं निगमयति— एवमिति । एवमुक्तप्रकारेण भगवान् भृगुवंशेऽवतीर्य भुवः परमुत्कटं भारं बहुशोऽहन् । तं भारमेव दर्शयति— नृपानिति । भारावतारे सामर्थ्यमाह— ईश्वर इति । अवतरणे हेतुं सूचयन्नाह— हरिरिति, आश्रितदुःखहर्तेत्यर्थः । एवं भक्तपक्षपातादिना वैषम्यादिदोषमाशङ्क्य तन्निरासायाह— विश्वात्मेति । नहि तत्तद्रूपेण क्रीडतः सर्वात्मकस्य वैषम्यादिदोषः सम्भवतीत्याशयः । बहुशोऽहन्नित्यनेन कश्चिदेवावशिष्ट इति सूचितम् । तदुक्तं पुरस्तात्— 'अश्मकान्मूलको जज्ञे यस्त्रीभिः परिरक्षितः ॥ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत्' इति ॥ २७ ॥ तदेवं प्रसक्तानुप्रसक्त परशुरामचरितमुपवर्णितमुपसंहृत्य प्रस्तुतं गाधिवंशमाह— गाधेरिति । गाधेर्विश्वामित्रोऽभूदिति शेषेणान्वयः । तं विशिनष्टि— महातेजा इति । तत्र दृष्टान्तमाह— समिद्धः प्रदीप्तपावक इवेति । ननु क्षत्रियस्य कथमेवं तेज इत्यपेक्षाया ब्राह्मन्त्राभिमन्त्रितचरुप्रभवत्वात्स ब्राह्मण एव जात इत्याह—

**एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः ॥ अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥ २७ ॥ गाधेरभून्महातेजाः समिद्ध इव पावकः ॥ तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥ २८ ॥ विश्वामित्रस्य चैवासन् पुत्रा एकशतं[2] नृप ॥ मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ॥ २९ ॥ पुत्रं कृत्वा शुनश्शेफं[3] देवरातं च भार्गवम् ॥ आजीगर्तं[4] सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥**

तपसेति । यो विश्वामित्रस्तपसा हेतुभूतेन क्षात्रं क्षत्रजातिमुत्सृज्य त्यक्त्वा ब्रह्मवर्चसं लेभे ब्रह्मर्षितां प्रापेत्यर्थः ॥ २८ ॥ आश्चर्यान्तरं सावधानतया शृण्वित्याशयेन सम्बोधयति— नृपेति । विश्वामित्रस्य चैकशत पुत्रा आसन् बभूवुः । तत्र मध्यम एव मधुच्छन्दाः मधुच्छन्दस्सञ्ज्ञकस्तत्सम्बन्धात् तेऽन्येपि सर्वे तद्भ्रातरः 'लिङ्गसमवायन्यायेन प्राणभृत उपदधाति' इतिवन्मधुच्छन्दस एवोच्यन्ते । तथाच श्रुतिः— "तस्य ह वा विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः" इत्यादिः ॥ २९ ॥ यत्पूर्वं प्रतिज्ञातं 'शुनश्शेफस्य माहात्म्यमुपरिष्टात्प्रवक्ष्यते' इति तदवसरप्राप्तं वर्णयितुं विश्वामित्रचरितमाह— पुत्रमिति । विश्वामित्रो भार्गवं भृगुवंशोत्पन्नं आजीगर्तं अजीगर्तस्य सुतं शुनश्शेफं देवरातापरनामानं पुत्रं कृत्वा स्वपुत्रतयाऽङ्गीकृत्य हे पुत्राः एष शुनश्शेफः ज्येष्ठः प्रकल्प्यतां युष्माभिः स्वज्येष्ठभ्रातृत्वेनाङ्गीक्रियतामिति स्वसुतानाहेत्यन्वयः ॥ ३० ॥

---

१ पूर्वं दशमाध्याये [ श्लोक. ४० ] । २ शुनश्शेफेन सह एकाधिक शतमेकशतमिति वाऽर्थश्चिन्त्य । ३ 'शुनश्शेपम्' इति क्वचित्पाठ । ४ सप्तमाध्यायस्य त्रयोविंशश्लोकेन ।

कोऽसौ शुनश्शेफः कथं वा विश्वामित्रेण सङ्गतस्तत्राह— य इति। यः शुनश्शेफः वै प्रसिद्धः हरिश्चन्द्रस्य मखे निमित्ते पितृभ्यां स्नेहं विहाय विक्रीतः पुरुषरूपः पशुः हरिश्चन्द्रपुत्रेण रोहितेनानीतो यज्ञयूपे बद्धो विश्वामित्रं शरणं गतस्तदा तदुपदिष्टमन्त्रेण प्रजेशादीन् देवान् स्तुत्वा पाशबन्धनान्मुमुचे अमुच्यत। तत्स्तुत्या प्रसन्ना देवास्तन्मारणं विनैव यज्ञपूर्तिमङ्गीकृत्य जीवन्तमेव तं मोचयामासुरित्यर्थः ॥ ३१ ॥ देवरात इति नामनिरुक्तिमाह— य इति। य एवं देवयजने वरुणयज्ञे देवैः रातो जीवन्नेव विमुक्तः अतएव गाधिषु गाधिवंशेषु देवरात इति ख्यातः प्रसिद्धस्तापसस्तपोनिष्ठः स एव भार्गवः शुनश्शेफ इत्यन्वयः॥ ३२ ॥ 'ज्येष्ठ एष प्रकल्प्यतां' इति पित्रोक्ता ये मधुच्छन्दसस्तेषु ज्येष्ठाः पञ्चाशत ते तत् पित्रोक्तं ज्येष्ठत्वं कुशलं भद्रं न मेनिरे नाङ्गीकृतवन्तः। ततश्च क्रुद्धो मुनिर्विश्वामित्रस्तान् हे दुर्जनाः म्लेच्छा भवतेत्यशपत् ॥ ३३ ॥ पञ्चाशता कनिष्ठैः सह स मध्यमो मधुच्छन्दास्तदनन्तरं हर्षपूर्वकं

यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ॥ स्तुत्वा देवान् प्रजेशादीन् मुमुचे पाशबन्धनात् ॥ ३१ ॥ यो रातो देवयजने देवैर्गाधिषु तापसः ॥ देवरात इति ख्यातः शुनश्शेफः स भार्गवः ॥ ३२ ॥ ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ॥ अशपत्तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥ ३३ ॥ स होवाच मधुच्छन्दाः सार्द्धं पञ्चाशता ततः ॥ यन्नो भवान् सञ्जानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥ ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि ॥ विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ॥ ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम् ॥ ३५ ॥ एष वः कुशिका वीरो देवरातस्तमन्वित ॥ अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥ ३६ ॥

पितरमुवाच। तद्वचनमाह— यदिति। भवान् पिता नोऽस्मान् पुत्रान् यत् शुनश्शेफस्य ज्येष्ठत्वाङ्गीकरण सञ्जानीते आज्ञापयति तस्मिंस्तवादेशे वयं तिष्ठामहे ॥ ३४ ॥ एवमुक्त्वा ते मन्त्रदृशं देवरातं ज्येष्ठं चक्रुः। तत्करणप्रकारं दर्शयति— त्वामिति। वयं सर्वे त्वामन्वञ्चः स्म हि अनुगन्तारः स्म, तव कनिष्ठा भवाम इत्यर्थः। ततः प्रसन्नो विश्वामित्रस्तान् सुतान् यूयं वीरवन्तः पुत्रवन्तो भविष्यथेत्याह। एवमाशीर्वादे हेतुं सूचयन् विशिनष्टि— य इति। ये यूयं मे मानं पूज्यत्वमनुगृह्णन्तः अनुवर्तमानाः सन्तोऽस्य ज्येष्ठत्वाङ्गीकारेण मा वीरवन्तं पुत्रवन्तमकर्त कृतवन्त इत्यर्थः। तदनङ्गीकारे तु युष्मास्वपि मच्छापात् म्लेच्छीभूतेषु सत्स्वहमपुत्र एवाभविष्यमिति भावः ॥ ३५ ॥ हे कुशिकाः एष देवरातो वो युष्मदीयः कौशिक एव। तत्र हेतुमाह— वीर इति। यतो मत्पुत्रः अतस्तमेनमन्वित अनुगच्छत। ततोऽन्ये च अष्टकादयस्तस्य विश्वामित्रस्य पुत्रा आसन् ॥ ३६ ॥

विश्वामित्रचरितमुपसंहरति— एवमिति । एके शता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं वैश्वामित्रैर्विश्वामित्रपुत्रैः कौशिकगोत्र पृथग्विधं नानाप्रकारं जातं तच्च प्रवरान्तरमापन्नम् । कुतः ? यस्माद्देवरातज्येष्ठत्वेन तत्प्रवरान्तरं विकल्पितम् । तथाच आश्वलायनबौधायनादिभिः कौशिकाना देवरातप्रवरत्वमुक्तम् । प्रवरश्च तस्मिन्नेव वंशेऽवान्तरभेदो न तु वंशान्तरम् । तथाच स्मृतिः—'एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणात्' इति ॥ ३७ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ षोडशो विवृतो विश्वामित्रान्वयनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ एवं त्वैलस्य पुत्राणां पञ्चानां वर्णितोऽन्वयः ॥ अथ सप्तदशे त्वायोरन्वयो विनिरूप्यते ॥ १ ॥ ॥ तदेव पुरूरवसः पुत्राणा कनिष्ठानां

**एवं कौशिकगोत्रं तु वैश्वामित्रैः पृथग्विधम् ॥ प्रवरान्तरमापन्नं तद्धि चैवं विकल्पितम् ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे विश्वामित्रान्वयनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥**

**श्रीशुक उवाच ॥ यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रम्भश्च वीर्यवान् ॥ १ ॥ अनेना इति राजेन्द्र शृणु क्षत्रवृधोऽन्वयम् ॥ क्षत्रवृद्धसुतस्यासन् सुहोत्रस्याऽऽत्मजास्त्रयः ॥ २ ॥ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥ ३ ॥ काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमःपिता ॥ धन्वन्तरिर्दैर्घ्यतम आयुर्वेदप्रवर्तकः ॥ ४ ॥**

श्रुतायवादीनां पञ्चानामन्वयमल्पक्रमेणानिरूप्य इदानीं यस्य वंशे श्रीकृष्णावतारस्तस्य तज्ज्येष्ठपुत्रस्यायोर्वंश विस्तारतो निरूपयति— य इति । यः पुरूरवसः पुत्रः आयुः तस्य नहुषादयः पञ्च सुताः अभवन् ॥ १ ॥ सावधानतार्थं सम्बोधयति—राजेन्द्रेति । अत्र तावत्क्षत्रवृधोऽन्वयं शृणु । क्षत्रवृध इति हलन्तस्य षष्ठी । क्षत्रवृद्धस्य यः सुतः सुहोत्रस्तस्य त्रय आत्मजा आसन् ॥ २ ॥ तान्निर्दिशति— काश्यः कुशो गृत्समद इति । गृत्समदात् शुनकोऽभूत् । यस्य शुनकस्य बह्वृचेषु प्रवरः श्रेष्ठो मुनिः मननशीलः शौनकः पुत्रोऽभूत् ॥ ३ ॥ काश्यस्य पुत्रः काशिः । तस्य पुत्रो राष्ट्रः, स च दीर्घतमसः पिता, तस्य पुत्रो दीर्घतमा जातः । दैर्घ्यतमः दीर्घतमसः पुत्रो धन्वन्तरिः, स चायुर्वेदप्रवर्तकः ॥ ४ ॥

१ 'प्रकल्पितम्' इत्यपि पाठान्तरम् । २ 'दीर्घतमस ' इति पाठान्तरम् । तत्राक्षराधिक्यमार्षम् । 'दैर्घतम ' इति तु श्रीधरीय' पाठ' ।

अयं च धन्वन्तरिः समुद्रमथनजाताद्धन्वन्तरेरन्यो भगवदंशावतारभूत इति ज्ञेयम् । यज्ञभुक् यज्ञभागभोक्ता स्मृतमात्र एवार्ति रोगपीडां नाशयतीति तथा । तस्य पुत्रः केतुमान् । अस्य पुत्रो भीमरथः ॥ ५ ॥ ततो भीमरथात् दिवोदासः । तस्मात् द्युमान् जातः, स एव प्रतर्दनः स्मृतः, हे वत्स स एव शत्रुजित् ऋतध्वज इति चेरितः कथितः, तथा कुवलयाश्वेत्यपि स एव प्रोक्तः । ततः प्रतर्दनादिशब्दवाच्यात् द्युमतः अलर्कादयो जज्ञिरे ॥ ६ ॥ अलर्कं विशिनष्टि— षट्सहस्राधिकषष्टिसहस्रवर्षाणि अलर्क एव युवा सन्मेदिनीं भूमिं बुभुजे भूमिराज्यसुखानुभवं कृतवान् । तन्मध्ये तत अपरस्तु न तत्कृतवान् ॥ ७ ॥ अलर्कात् सन्ततिसञ्ज्ञकः । तस्मात्सुनीथः । अथ तस्मात् सुकेतनः । तस्माद्धर्मकेतुः सुतो जातः । ततः सत्यकेतुरजायत ॥ ८ ॥ तस्य धृष्टकेतुः सुतो जातः । तस्मात्सुकुमाराख्यः क्षितीश्वरः भूमिपो जातः । सुकुमारात् वीतिहोत्रः । तस्य पुत्रो भर्गः । अतो भर्गात् हे नृप

यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ॥ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः[1] ॥ ५ ॥ दिवोदासो द्युमांस्तस्मात् प्रतर्दन इति स्मृतः ॥ स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ॥ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ नालर्कादपरो राजन् मेदिनीं बुभुजे युवा ॥ ७ ॥ अलर्कात् सन्ततिस्तस्मात् सुनीथोऽथ सुकेतनः ॥ धर्मकेतुः सुतस्तस्मात् सत्यकेतुरजायत ॥ ८ ॥ धृष्टकेतुः सुतस्तस्मात् सुकुमारः क्षितीश्वरः ॥ वीतिहोत्रस्य भर्गोऽतो भार्गभूमिरभून्नृप ॥ ९ ॥ इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः ॥ १० ॥ रम्भस्य रभसः पुत्रो गंभीरश्च[2] क्रतुस्ततः ॥ तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ॥ ११ ॥ शुद्धस्ततः शुचिस्तस्मात्त्रिककुब्[3]धर्मसारथिः ॥ ततः शान्तरयो जज्ञे कृतकृत्यः स आत्मवान् ॥ १२ ॥

भार्गभूमिः पुत्रोऽभूत ॥ ९ ॥ इति इमे उक्ताः काशयः काशिवंशजा नृपाः क्षत्रवृद्धस्यान्वयमयन्ति यान्तीति तथा ते, एवं क्षत्रवृद्धान्वय उक्तः ॥ १० ॥ अथ रम्भस्यान्वयमाह— रम्भस्य रभसो गभीरश्च द्वौ पुत्रौ । ततो रभसात् क्रतुः । अक्रिय इति पाठान्तरम् । तस्य क्रतोः क्षेत्रे भार्याया ब्रह्म ब्रह्मकुलं जज्ञे । अथ अनेनसः आयोः कनीयसः पुत्रस्य वंशं शृणु ॥ ११ ॥ ततः अनेनसः शुद्धः । तस्माच्छुचिः । तस्मात् त्रिककुप्, स एव धर्मसारथ्यपरनामधेयः । त्रिककुदिति पाठान्तरम् । ततः त्रिककुपः शान्तरयो जज्ञे । कृतमनुष्ठितं कृत्यं मुक्तिसाधनं येन तथाभूतः सर्वकर्तव्यशून्यः । यतोऽसावात्मवान् साक्षात्कृतात्मतत्त्वः । अतोऽपत्योत्पादनं न कृतवानिति भावः ॥ १२ ॥

---

१ ' तत ' इत्यस्योत्तरश्लोकेन सम्बन्ध. । २ ' गम्भीरश्चाक्रियस्तत ' इति पाठान्तरम् । ३ ' त्रिककुत् ' इति पाठान्तरम् ।

अथायुपुत्रस्य रजेर्वंशमाह— रजेरिति । रजेः अमितौजसा महाबलपराक्रमयुक्तानां पुत्राणां पञ्चशतान्यासन् । स च रजिर्देवैरभ्यर्थितः प्रार्थितः सन् दैत्यान् हत्वा तैर्हृतां दिवं स्वर्गं पुनरिन्द्रायाददात् ॥ १३ ॥ इन्द्रस्तु प्रह्लादादिभ्यः अरिभ्यः शङ्कितो भीतो दिवं तस्मै रजये दत्त्वा तस्य चरणौ गृहीत्वाऽऽत्मानमर्पयामास स्वरक्षाभारं तस्मिन्निहितवानित्यर्थः ॥ १४ ॥ रजेः पुत्रास्तु पितरि रजावुपरते मृते सति याचमानाय महेन्द्राय त्रिविष्टपं स्वर्गं नो ददुः । किञ्च यज्ञभागानपि समाददुः स्वयमेव गृहीतवन्तः ॥ १५ ॥ अथ गुरुणा बृहस्पतिना तेषां मतिभ्रंशायाभिचारविधिनाऽग्नौ हूयमाने सति मार्गात् इन्द्राधिपत्यानुकूलबुद्धिरूपात् भ्रंशितान् रजेः पुत्रान् सर्वानेव बलभित् इन्द्रोऽवधीत् । कश्चिदेकोऽपि नावशेषितः॥ १६ ॥ पूर्वं क्षत्रवृद्धपौत्राणां काश्यकुशगृत्समदानां मध्ये काश्यगृत्समदयोर्वंशावुक्तौ, कुशवंशमनुक्त्वैव क्षत्रवृद्धपुत्रयो रम्भरज्ययोर्वंशावुक्तौ, तादिदानीं कुशस्य

रजेः पञ्च शतान्यासन् पुत्राणाममितौजसाम् ॥ देवैरभ्यर्थितो दैत्यान् हत्वेन्द्रायाददाद्दिवम् ॥ १३ ॥ इन्द्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥ आत्मानमर्पयामास प्रह्लादाद्यरिशङ्कितः ॥ १४ ॥ पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ त्रिविष्टपं महेन्द्राय यज्ञभागान् समाददुः ॥ १५ ॥ गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः ॥ अवधीद्भ्रंशितान् मार्गान्न कश्चिदवशेषितः ॥ १६ ॥ कुशात्प्रतिः क्षात्रवृद्धात्सञ्जयस्तत्सुतो जयः ॥ ततः कृतः कृतस्यापि जज्ञे हर्यश्वको नृप ॥ १७ ॥ सहदेवस्ततो भीमो जयसेनस्तु तत्सुतः ॥ सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः ॥ क्षत्रवृद्धान्वया भूपा शृणु वंशांश्च नाहुषान् ॥ १८ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे आयुवंशनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

वंशमाह— कुशादित्यादिना यावदध्यायसमाप्ति । क्षात्रवृद्धात् क्षत्रवृद्धपौत्रात् कुशात् प्रतिसञ्ज्ञः पुत्रो जातः । ततः सञ्जयः । तस्य सुतो जयः । ततः कृतः । हे नृप कृतस्यापि हर्यश्वकः सुतः जज्ञे ॥ १७ ॥ ततः सहदेवः । ततो भीमः । तस्य सुतो जयसेनः । तस्य सुतः सङ्कृतिः । तस्य जयः, स च क्षत्रधर्मनिष्ठः महारथश्च । क्षत्रवृद्धान्वयं निगमयन्नहुषान्वयं वक्तुं तच्छ्रवणाय राजानं सावधानीकरोति । क्षत्रवृद्धस्यान्वये जाता भूपा उक्ताः । अथ नाहुषान्वंशान् शृणु । 'शृणु वंशं च नाहुषात्' इति पाठे तु नहुषपुत्राज्जातं वंशं शृणु इत्यर्थः ॥ १८ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ सप्तदशो गतो वृत्तिमायुवंशनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥

१ 'हर्यवनो नृप' इति क्वचित्पाठ । २ 'अहीन' इति पाठ क्वचित् । ३ 'वंशं च नाहुषात्' इति 'वंश च नाहुषम्' इति च पाठौ ।

ययातेर्नाहुषस्यात्र चरितं परमाद्भुतम् ॥ कृतदारस्य राजर्षेरष्टादशे निरूप्यते ॥ १ ॥ ॥ यतिययातिप्रभृतय इमे षट् नहुषस्य सुता आसन् । तत्र दृष्टान्तमाह— इन्द्रियाणीवेति, षडिन्द्रियाणि यथा देहिनो जीवस्य वशवर्तित्वे सति कार्यसाधकानि तथा तेऽपीत्यर्थः ॥ १ ॥ तत्र यतिर्ज्येष्ठः पुत्रः पित्रा नहुषेण दत्तमपि राज्यं नैच्छत् । तत्र हेतुमाह— तत्परिणामवित्, तस्य राज्यपरिणामं नरकादिदुःखहेतुत्वं जानन्नित्यर्थः । दुःखहेतुत्वे हेतुमाह— यत्रेति । यत्र राज्ये प्रविष्टः आसक्तः पुरुषः आत्मानं स्वात्मान परमात्मान च नावबुद्ध्यते नानुसन्धत्ते । तथाच नरकपातादिहेतुं पाप करोतीति भावः ॥ २ ॥ इन्द्राण्याः शच्याः धर्षणात् भोगाभिलाषदोषात् द्विजैरगस्त्यादिभिः पितरि स्थानात् स्वर्गाद्यधिकाराद्भ्रंशिते — तदेव स्पष्टयति— अजगरत्वं प्रापिते सति ययातिरेव नृपोऽभवदित्यन्वयः। अत्रेदं बोध्यम्— यदा वृत्रासुरे निहते इन्द्रस्य हत्या प्रवृत्ता तदा स तद्भयान्मानसे सरसि कमलनालेऽवसत्, तदा च तपोयोगादिप्रभावेण नहुषः स्वर्गराज्यं चकार, तदा च सम्पदादिमदेनान्धबुद्धिरिन्द्राणीमुवाच इन्द्रस्तावदहमतस्त्वं मा भजेति, तया

श्रीशुक उवाच ॥ यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः ॥ षडिमे नहुषस्यासन्निन्द्रियाणीव देहिनः ॥ १ ॥
राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित् ॥ यत्र प्रविष्टः पुरुष आत्मानं नावबुद्ध्यते ॥ २॥ पितरि भ्रंशिते
स्थानादिन्द्राण्या धर्षणाद्द्विजैः ॥ प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥ चतसृष्वादिशद्दिक्षु भ्रातॄन् भ्राता
यवीयसः ॥ कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबन्धुश्च नाहुषः॥
राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥ ५ ॥

चावेदितवृत्तान्तो बृहस्पतिस्तामुवाच ब्राह्मणवाह्यशिबिकामारुह्यागतं त्वा भजिष्यामीति त्वं ब्रूहि ततोऽसौ ब्राह्मणशापात्पतिष्यतीति । तया च तथोक्तो नहुषोऽगस्त्यादीन् विष्ट्या गृहीत्वा तैः शिबिकां वाहयामास, तदा च शीघ्रं सर्पसर्पेति वदन्नगस्त्यं पदा पस्पर्श तेन च कुपितेन सर्पो भवेति शप्तो महासर्पोऽभूदिति ॥ ३ ॥ स भ्राता ज्येष्ठो ययातिः यवीयसः कनिष्ठान् चतुरो भ्रातॄन् सयातिप्रभृतीन् चतसृषु दिक्षु आदिशत्, पालनार्थं नियुक्तवान् इत्यर्थः । स्वयं तु काव्यस्य शुक्रस्य वृषपर्वणो दानवस्य च कन्याभ्या कृतदारः सन्नुर्वीं पृथ्वीं जुगोप पालयामास ॥ ४ ॥ शङ्कितो राजा पृच्छति— ब्रह्मर्षिरिति । भगवान् ब्रह्मिष्ठः काव्यो ब्रह्मर्षिर्नाहुषो ययातिस्तु क्षत्रबन्धुः क्षत्रियवरः अतस्तयोः राजन्यविप्रयोः कस्माद्धेतोर्विवाहः श्वशुरजामातृरूपः सम्बन्ध आसीत् । तत्र को दोषस्तत्राह— प्रतिलोमक इति । क्षत्रियकन्या कदाचिद्ब्राह्मणेन विवाह्यतेऽपि, न तु ब्राह्मणकन्या क्षत्रियेण विपरीतत्वादिति भावः ॥ ५ ॥

१ देवयानीशर्मिष्ठाभ्याम् ।

नात्र प्रतिलोमतादोषः ईश्वरेच्छया सम्पादितत्वादित्याशयेन तत्प्रसङ्गमाह—एकदेत्यादिना प्रतिजग्राह तद्दच इत्यन्तेन । दानवेन्द्रस्य वृषपर्वणः कन्या भामिनी किञ्चित्तारुण्यमापन्ना शर्मिष्ठेति नाम्ना प्रसिद्धा एकदा सखीना सहस्रेण गुरोः काव्यस्य पुत्र्या देवयान्या च सयुक्ता सती पुष्पितैर्द्रुमैः सङ्कुले व्याप्ते कलमव्यक्तं मधुरं गीतं येषा ते अलयो भृङ्गा येषु तानि नलिनीपुलिनानि यस्मिन् तस्मिन् पुरोद्याने व्यचरदिति द्वयोरन्वयः ॥ ६ ॥ ७ ॥ ताः शर्मिष्ठादयः कमललोचनाः कन्याः जलाशयमासाद्य आगत्य तत्तीरे दुकूलानि न्यस्य निधाय तस्मिन् प्रविश्य मिथः सिञ्चतीः सिञ्चन्त्यो विजह्रुः विहारं चक्रुः ॥ ८ ॥ तदा तास्त्रियः देव्या उमया सह वृषे नन्दीश्वरे स्थितं व्रजन्तं गिरिशमवलोक्य व्रीडिताः सत्यः सहसा आशु उत्तीर्य तीरमारुह्य वासांसि पर्यधुः धृतवत्यः ॥ ९ ॥ तदा शर्मिष्ठा अजानती गुरुपुत्र्याः देवयान्याः वासः स्वीय मत्वा समव्ययत् पर्यधात् । ततो देवयानी शर्मि-

श्रीशुक उवाच ॥ एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ॥ सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥ देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले ॥ व्यचरत् कलगीतालिनलिनीपुलिनेऽबला ॥ ७ ॥ ता जलाशयमासाद्य कन्याः कमललोचनाः ॥ तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः ॥ ८ ॥ वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषस्थितम् ॥ सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥ शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ॥ स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥ अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसाम्प्रतम् ॥ अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥ यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये ॥ धार्यते यैरिह ज्योतिः शिवः पन्थाश्च दर्शितः ॥ १२ ॥

ष्ठया परिधृत वासः स्वकीय मत्वा प्रकुपिता सतीदं वक्ष्यमाणमब्रवीत् ॥ १० ॥ तदेवाह— अहो इत्यादिना । अहो इत्यतिशयद्योतनार्थः । अस्याः दास्याः असाम्प्रतमयुक्तं कर्म निरीक्ष्यताम् । किं तदित्यत आह— यदस्मद्धार्यं वासस्तद्धृतवती इत्येतत् अयुक्तमेव । दृष्टान्तत्वेन स्पष्टयति—शुनीवेति । यथाऽध्वरे यज्ञे शुनी हविर्गृहीतुमनर्हा, तद्वदियमप्यस्मद्धार्यं वस्त्रं परिधर्तुमनर्हेत्यर्थः ॥ ११ ॥ तस्यास्तद्धारणानर्हत्वहेतुत्वेन ब्राह्मणोत्कर्षमाह— यैरिति द्वाभ्याम् । यैर्ब्रह्मादिभिः प्रजापतिभिर्ब्राह्मणैरिदं विश्व तपसा तपोबलेन सृष्टम्, ये च ब्राह्मणाः परस्य पुंसो भगवतो मुखं मुखादुत्पन्नत्वेन तृप्तिद्वारत्वेन च श्रेष्ठा इत्यर्थः । इह ससारे यैर्ब्राह्मणैः ज्योतिः स्वय प्रकाशरूप परं ब्रह्म उपास्यतया हृदि धार्यते, यैश्च शिवः क्षेमकरः पन्था वैदिकमार्गश्च दर्शितः प्रवर्तित इत्यर्थः ॥ १२ ॥

यान् ब्राह्मणान् सुरेश्वराः इन्द्रादयः लोकनाथाः पातालादितत्तल्लोकाधिपतयश्च वन्दन्ति प्रणमन्ति उपतिष्ठन्ते स्तुवन्ति च। किं बहुनोक्तेन ? भगवानपि प्रणमति उपतिष्ठते च। भगवत्पूज्यत्वेनैव तेषां सर्वपूज्यत्वं सिद्धमित्याशयेनाह— विश्वात्मेति। न च तत्तत्फलार्थमेव ते आराध्या न विशुद्धैर्निष्कामैरिति शङ्कनीय, परमपावनेन पूर्णकामेनापि भगवताऽऽराध्यत्वादित्याशयेन भगवन्तं विशिनष्टि— पावन इति। स्वनामसङ्कीर्तनादिकर्तॄणामपि सकलपापनिवर्तकत्वेन स्वयं पापसम्भावनारहित इत्यर्थः। श्रीनिकेतन इति सकलैश्वर्यादिसम्पदधिष्ठात्र्या लक्ष्म्या अप्याश्रयभूत इत्यर्थः॥ १३॥ तदेवं ब्राह्मणमात्रस्य स्वभावत एव तावत् सर्वपूज्यत्वं, तत्र तेष्वपि वयं भृगवः यस्य पादताडनमपि भगवान्सेहे तद्वंशीयाः सर्वब्राह्मणश्रेष्ठाः, एवमप्यस्याः पिता नोऽस्माकं शिष्यः। शिष्येष्वपि तस्याधमत्व सूचयति—असुर इति। एवमसुरपुत्रीत्वादसती सर्वतो हीना अपीयमस्माभिः सर्वोत्कृष्टैर्धार्यं वस्त्रं यद्धृत-

यान्वन्दन्त्युपतिष्ठन्ते लोकनाथाः सुरेश्वराः ॥ भगवानपि विश्वात्मा पावनः श्रीनिकेतनः॥ १३ ॥ वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः ॥ अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती ॥ १४॥ एवं शपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत ॥ रुषा श्वसन्त्युरङ्गीव धर्षिता दष्टदच्छदा ॥ १५ ॥ आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि ॥ किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा ॥ १६ ॥ एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् ॥ शर्मिष्ठा प्राक्षिपत्कूपे वास आदाय मन्युना ॥ १७ ॥

वती तदयुक्तमेव कृतवती। तत्र दृष्टान्तमाह—शूद्रो वेदमिवेति। यथा त्रिवर्णहीनो नाधिकारी शूद्रस्तद्धार्यं वेदं धारयेत्तद्वदित्यर्थः ॥ १४ ॥ एवं शपन्तीं तिरस्कुर्वतीं गुरुपुत्रीं देवयानीं दष्टो दच्छदोऽधरोष्ठो यया सा रुषा क्रोधेन श्वसन्ती सती शर्मिष्ठा अभाषत। क्रोधे हेतुमाह— यतस्तया दुर्वाक्यैर्धर्षिता तिरस्कृतेति। रुषा श्वासविमोके दृष्टान्तमाह— पादाक्रान्ता उरङ्गीवेति ॥ १५॥ तद्भाषणमेवाह—आत्मवृत्तमिति। हे भिक्षुकि त्वमात्मवृत्तमविज्ञाय अननुसन्धायैव बहुधा कत्थसे आत्मानं श्लाघसे। तद्वृत्तमेव दर्शयन्त्याह— किमिति। यथा बलिभुजो वायसाः श्वाना वा तथा त्वमस्माकं गृहान् जीवनार्थं किं न प्रतीक्षसे ?॥ १६ ॥ एवंविधैरन्यैरपि परुषैर्वचोभिराचार्यसुतां सतीं पूज्यां देवयानीं शर्मिष्ठा क्षिप्त्वा उपालभ्य मन्युना क्रोधेन तत्परिधृतं वासो वस्त्रमादाय आच्छिद्य ता कूपे प्राक्षिपत् पातयामास ॥ १७ ॥

१ 'याजमन्ति' इति क्वचित्पाठान्तरम्।

अथ तस्यां शर्मिष्ठायां स्वगृहं प्रति गतायां सत्या मृगयां चरन् जलार्थी ययातिर्यदृच्छया अकस्मादेव तत्र कूपे प्राप्तः सन् तत्र कूपे ता देवयानीं नग्नां ददर्श। तथा दर्शनात्तस्याश्चर्यं सूचयति— हेति ॥ १८ ॥ दृष्ट्वा च दयापरो राजा विवाससे तस्यै देवयान्यै स्वमुत्तरीय वासो दत्त्वा पाणिना तत्पाणि गृहीत्वा तां कूपादुज्जहार निस्सारितवानित्यन्वयः ॥ १९ ॥ तमात्मानमुद्धृतवन्तं वीरं ययातिं औशनसी काव्यकन्या देवयानी प्रेम्णा निर्भरया पूर्णया गिरा आह। तद्वचनमाह— राजन्निति त्रिभिः। तमुत्साहयन्ती सम्बोधयति— परपुरञ्जयेति, परेषां शत्रूणा पुराणि जयतीति तथा। तत्र हेतुं सूचयन्ती पुन: सम्बोधयति— राजन्निति। हि यतस्त्वया मे मम पाणिर्गृहीतः तस्मात्त्वया गृहीताया मे हस्तग्राहकः त्वत्तोऽपरो मा भूत्, त्वमेव मामुद्वहेत्यर्थः ॥ २० ॥ ननु त्वं ब्राह्मणी अह तु राजन्योऽतः कथमावयोः प्रातिलोमिको विवाहस्तत्राह— एष इति। हे वीर नौ आवयोरेष भर्तृभार्याभावरूपः सम्बन्ध ईश्वरकृत इति, न

**तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ॥ प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥ १८ ॥ दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ॥ गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ॥ राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ॥ हस्तग्राहोऽपरो मा भूद्गृहीतायास्त्वया हि मे ॥ २० ॥ एष ईशकृतो वीर सम्बन्धो नौ न पौरुषः ॥ यदिदं कूपमग्नाया भवतो दर्शनं मम ॥ २१ ॥ न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ॥ कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥ २२ ॥**

पौरुषः न पुरुषसम्पादितः, अतो न प्रातिलोम्यदोष इत्यर्थः। नन्वय सम्बन्ध ईशेच्छया कृत इति कथं निश्चीयते तत्राह— यदिति। यत् यस्मात् कूपमग्नाया ममेदमसम्भावितं भवतो दर्शनं जातं तस्मादावयोरयं सम्बन्ध ईशेच्छया कृत इत्यनुमीयते इत्यर्थः ॥ २१ ॥ ननु तथापि त्वं कञ्चिद्ब्राह्मणमेव वृणीष्वेति किमनेनाग्रहेणेति चेत्तत्राह— न ब्राह्मण इति। मदुपभोगेनैव त्वत्कृतकूपोद्धारप्रयत्नस्य प्रतीकारो नान्यथेति सूचयन्ती सम्बोधयति— महाभुजेति। मे मम हस्तग्राहो भर्ता ब्राह्मणो न भविता न भविष्यति। तत्र हेतुमाह— बार्हस्पत्यस्य बृहस्पतिसुतस्य कचस्य शापात्। तच्छापे हेतुमाह— यमिति, यं कचमहं पुरा प्रथममशपम्, तस्य शापादित्यर्थः। बृहस्पतेः सुतः कचः शुक्रान्मृतसञ्जीवनीं विद्यामध्यगात्, तदा देवयानी तं पतिं चकमे, स च गुरुपुत्री त्वं मम पूज्येत्युक्त्वा न तामुपयेमे, ततः साऽपि कुपिता सती तवेयं विद्या निष्फला भवत्विति शशाप, स च तव पतिर्ब्राह्मणो न भविष्यतीति शशापेति कथाऽत्रानुसन्धेया ॥ २२ ॥

ततो ययातिरशास्त्रीयत्वात् अनभिप्रेतमपि दैवोपहृतमीश्वरेच्छया प्रापितं बुद्ध्वा तथा तद्गतं तस्यामासक्तमात्मनो मनश्च बुद्ध्वा न त्वधर्मे मदीयं मनः प्रवर्तते इति निश्चित्य तस्या वचो प्रतिजग्राह पिता दास्यति चेत्तर्ह्यहं त्वामङ्गीकरिष्यामीत्युक्तवानित्यर्थः ॥ २३ ॥ शर्मिष्ठासम्बन्धोऽपि दैववशाद्-भूदिति दर्शयन्नाह— गत इति नवभिः । वीरे राजनि ययातौ गते सति सा देवयानी तत्र ततो रुदती पितुः समीपमेत्येति शेषः । ततः शर्मिष्ठया भिक्षुकीत्यादि यदुक्तं यच्च कूपप्रक्षेपादि कृतं तत्सर्वं न्यवेदयत् विज्ञापितवती ॥ २४ ॥ तच्छ्रुत्वा च विवेकी भगवान् काव्यः शुक्रः दुर्मना दुःखित-चित्तः सन् पुरोहितवृत्तिं विगर्हयन् कापोतीमुञ्छवृत्तिं स्तुवंश्च दुहित्रा सह वृषपर्वणः पुरात् ययौ निश्चक्राम ॥ २५ ॥ ततः वृषपर्वा प्रत्यनीकाः देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेतं यस्यतथा भूतं तं गुरुमाज्ञाय ज्ञात्वा पथि गच्छन्तं प्रसादयन् मूर्ध्ना तस्य पादयोः पतितः ॥ २६ ॥

ययातिरनभिप्रेतं दैवोपहृतमात्मनः ॥ मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥ गते राजनि सा वीरे तत्र स्म रुदती पितुः ॥ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥ दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् ॥ स्तुवन् वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ॥ गुरुं प्रसादयन् मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥ क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः ॥ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे ॥ २७ ॥ तथेत्यवस्थिते प्राह देवयानी मनोगतम् ॥ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥ स्वानां तत्सङ्कटं वीक्ष्य तदर्थस्य च गौरवम् ॥ देवयानीं पर्यचरत् स्त्रीसहस्रेण दासवत् ॥ २९ ॥

क्षणार्धमेव मन्युः क्रोधो यस्य स भगवान् विवेकी समर्थो भार्गवः काव्यः शिष्यं वृषपर्वाणमाचष्ट अब्रवीत् । तदुक्तिमाह— काम इति । तवास्मद्-नुसरणमेव युक्तमन्यथा राज्यं विकलं स्यादिति सूचयन् सम्बोधयति— राजन्निति । अस्या देवयान्याः कामः क्रियता मनोरथः सम्पाद्यताम् । एतां देवयानीं त्यक्तुमुदासीना कर्तुं नोत्सहे, स्नेहवशात् न प्रभवामीत्यर्थः ॥ २७ ॥ तथैवास्त्वित्यङ्गीकृत्य वृषपर्वणि अवस्थिते सति देवयानी स्वमनोगतं प्राह । तद्वचनं दर्शयति— पित्रेति । पित्रा दत्ता सत्यह यतो यत्र यास्ये गमिष्यामि तत्रेयं शर्मिष्ठा सानुगा सखीसहिता मामनु यातु मद्दास्यं कर्तुं अनु-गच्छतु ॥ २८ ॥ शर्मिष्ठा च तस्माद्देवयान्या दौर्मनस्यात् स्वाना पित्रादीना च सङ्कट वीक्ष्य तस्माद्देवयानीसम्मानाच्च तेषामर्थस्य कार्यस्य गौरवं वीक्ष्य स्त्रीसहस्रेण सह दासीवत् देवयानीं पर्यचरत् ॥ २९ ॥

तलश्च उशनाः शुक्रः शर्मिष्ठया सह सुतां देवयानीं नाहुषाय ययातये दत्त्वा हे राजन् तल्पे शय्यायां शर्मिष्ठा कर्हिचिदपि नाधाः नोपगच्छेरिति तं ययातिमाहेत्यन्वयः ॥ ३० ॥ ततश्च हे राजन् क्वचित् कदाचित् शर्मिष्ठा औशनसीं देवयानीं सप्रजां पुत्रवतीं विलोक्य स्वयमपि ऋतौ सति सख्याः देवयान्याः पतिं तं ययातिमेव वव्रे, अपत्यार्थं सङ्गमं प्रार्थितवतीत्यर्थः । सतीति दीर्घपाठे पुरुषान्तरसम्बन्धरहितेत्यर्थः ॥ ३१ ॥ एवमपत्ये अपत्यार्थं राजपुत्र्या शर्मिष्ठया च अर्थितः धर्मवित् ययातिः धर्ममवेक्ष्यापत्यार्थमृतुकाले प्रार्थयमानायाः कामपूरणं धर्म एवेति विचार्य भृगुवचः शर्मिष्ठा कर्हिचित तल्पे नाधा इति वचः स्मरन्नपि काले ऋतुकाले दिष्टं दैवप्रापितं तत्सङ्गममभ्यपद्यत प्राप । न तु कामत इत्यर्थः ॥ ३२ ॥ एवं सत्युभयोर्जातानि

नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशनाः ॥ तमाह राजन् शर्मिष्ठामाधास्तल्पे न कर्हिचित् ॥ ३० ॥ विलोक्यौशनसीं राजन् शर्मिष्ठा सप्रजां क्वचित् ॥ तमेव वव्रे रहसि सख्याः पतिमृतौ सति[1] ॥ ३१ ॥ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ॥ स्मरञ्छुक्रवचः काले दिष्टमेवा[2]भ्यपद्यत ॥ ३२ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥ गर्भसम्भवमासुर्या भर्तुर्विज्ञाय भामिनी[3] ॥ देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता ॥ ३४ ॥ प्रियामनुगतः कामी वचोभिरुपमन्त्रयन् ॥ न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥ शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ॥ त्वां जरा विशतां मन्द विरूपकरणी नृणाम् ॥ ३६ ॥

अपत्यान्याह— यदुमिति । तत्र देवयानी यदुं तुर्वसुं च द्वौ पुत्रौ व्यजायत सुषुवे । वार्षपर्वणी वृषपर्वणो दुहिता शर्मिष्ठा तु द्रुह्युं अनुं पूरुं चेति त्रीन् सुतान् व्यजायत ॥ ३३ ॥ ततो भामिनी देवयानी स्वभर्तुः सकाशादेव आसुर्याः शर्मिष्ठायाः गर्भसम्भवं विज्ञाय क्रोधेन विमूर्च्छिता व्याप्ता सती पितुर्गेहं ययौ ॥ ३४ ॥ यतः कामी अतो ययातिरपि तां प्रियां देवयानीमेवानुगतः सन् मार्गे पादसंवाहनादिभिः पादस्पर्शादिकायिकव्यापारैर्वचोभिश्च उपमन्त्रयन् प्रसादयन्नपि ता प्रसादयितु न शेके इत्यन्वयः ॥ ३५ ॥ ततश्च शुक्रगृहे गते देवयान्या निवेदितवृत्तान्तः कुपितः शुक्रः हे स्त्रीकाम स्त्रीलोभिन् हे अनृतप्रतिज्ञपूरुष हे मन्द मन्दबुद्धे नृणा विकृतं रूपं करोतीति विरूपकरणी जरा त्वा विशतां प्रविशत्विति तं प्रत्याह ॥ ३६ ॥

---

१ 'सती' इति दीर्घान्त पाठान्तरम् । २ एवशब्दोऽप्यर्थे । ३ 'मानिनी' इति क्वचित्पाठो दृश्यते ।

एवं शुक्रशापं श्रुत्वा हे ब्रह्मन् ते तव दुहितरि कामानां कामभोगैरहं अद्यपर्यन्तमपि अतृप्तोऽस्मीति ययातिरुवाचेत्यन्वयः। स्मेत्यवधारणे। दुहितरीत्यनेन तव शापः त्वद्दुहितर्येव प्रतिफलित इति सूचितम्। एवं शापे दत्तेऽपि त्वं तदन्यथा कर्तुं शक्तोऽसीति ब्रह्मन्निति सम्बोधनेन सूचितम्। एवमुक्तः शुक्र आह—यद्येवं तर्हि यः कश्चित्तव स्नेही पुत्रादिर्जरां अभिधास्यति धारयिष्यति धारयेत्तस्य वयसा यौवनेन यथाकामं यथेच्छं ता शापेन त्वया प्राप्तां जरां व्यत्यस्य व्यत्यासं गमयेति ॥ ३७ ॥ इत्येवं लब्धं व्यवस्थानं जराव्यवस्थितिर्येन स ययातिर्ज्येष्ठं पुत्रं यदुमवोचत। तद्वचनमाह—यदो इति सार्द्धेन। स्नेहातिशयं सूचयन् द्विः सम्बोधयति—हे तात हे वत्स इमा तव मातामहेन कृतां प्रापिता जरां त्वं प्रतीच्छ गृहाण। निजं त्वदीयं वयो यौवनं मह्यं देहि, तेन भवदीयेनैव वयसाऽहं कतिचित्समाः संवत्सरान् रंस्ये विषयसुखमनुभविष्यामि। यतो विषयभोगेष्वतृप्तो-

**ययातिरुवाच ॥ अतृप्तोऽस्म्यद्य कामानां[1] ब्रह्मन् दुहितरि स्म ते॥ व्यत्यस्य[2] तां यथाकामं वयसा योऽभिधास्यति ॥ ३७॥ इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ॥ यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥ मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ॥ वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥ यदुरुवाच ॥ नोत्सहे जरसा स्थातुमन्तरा प्राप्तया तव ॥ अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नेति पूरुषः ॥ ४० ॥ तुर्वसुश्चोदितः[3] पित्रा द्रुह्युश्चानुश्च भारत ॥ प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥ अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ॥ न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥**

ऽस्मीति द्वयोरन्वयः ॥ ३८ ॥ ३९ ॥ तवान्तरा वयोमध्य एव प्राप्तया जरसा स्थातुमहं नोत्सहे, यतो ग्राम्यं सुखमविदित्वा अननुभूय वैतृष्ण्यं वैराग्यं न प्राप्नोति। अतोऽहमपि तथाविधत्वेन वैराग्याभावान्न यौवनं दातुमुत्सहे इत्याशयः ॥ ४० ॥ हे भारत पित्रा ययातिना तुर्वस्वादयस्त्रयः पुत्रा अपि चोदिता यौवनदानाय अनुज्ञाताः सन्तो यदुवत्प्रत्याचख्युः। तत्र हेतुद्वयमाह— अधर्मज्ञा इति, पित्राज्ञानुसरणं परमो धर्म इत्यजानन्तः, अनित्ये देहे यौवनादौ नित्यबुद्धय इति च ॥ ४१ ॥ ततश्च यद्वादिभ्योऽपि वयसा ऊनं कनिष्ठं विद्याविनयादिभिर्गुणैराधिकं स्वतनयं पूरुं हे वत्स मज्जरां गृहीत्वा स्वयौवनं दास्यसीत्यपृच्छत्। पृष्ट्वा चाग्रजवत् त्वं मां प्रत्याख्यातुं नार्हसीत्याह ॥ ४२ ॥

[1] तृतीयार्थे षष्ठी। [2] व्यत्यस्यता जरा व्यत्यय यातु व्यत्यय नीयतामिति वेति श्री०। व्यत्यस्यता विनिमयः क्रियतामिति सुबो० [3] श्रीशुकोक्तिरियम्।

एवमुक्तः पूरुरुवाच । नृपत्वादपि त्वदाज्ञाऽवश्यमनुसरणीयेत्याशयेन सम्बोधयति— मनुष्येन्द्रेति । यस्य प्रसादादनुग्रहात् परमैहिकामुष्मिकपुरुषार्थं विन्दते लभते तस्य पितुः प्रतिकर्तुं प्रत्युपकारं कर्तुं लोके को नु पुमान् क्षमः समर्थः? । कथं तस्यानुग्राहकत्वमित्याकाङ्क्षायामाह— आत्मकृत इति । सर्वपुरुषार्थसाधनदेहोत्पादकत्वादित्यर्थः ॥ ४३ ॥ प्रतिक्रियायामसामर्थ्येऽपि यः पुत्रः पितुश्चिन्तितमभिप्रेतं कुर्यात्स उत्तमः । यस्तु प्रोक्तकारी स मध्यमः । यस्त्वश्रद्धया कुर्यात्सोऽधमः । यस्तु प्रोक्तोऽप्यश्रद्धयाऽप्यकर्ता स पितुरुच्चरितं पुरीषप्रायः ॥ ४४ ॥ इत्येवमुक्त्वा प्रमुदितः हर्षयुक्तः पूरुः स्वीयं यौवन दत्त्वा पितुर्जरां प्रत्यगृह्णात् । ततः स ययातिरपि तद्वयसा[1] यौवनेन यथावत् यथासुखं कामान् विषयान् जुजुषे सेवितवान् । तवैष सर्वविषयत्याग आश्चर्यमिति सूचयन् सम्बोधयति— नृपेति ॥ ४५ ॥ उक्तमेव स्पष्टयति— सप्तेति । अव्याहतानि अश्रान्तानि दृढानीन्द्रियाणि यस्य तथा-

पूरुरुवाच ॥ को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् ॥ प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम् ॥ ४३ ॥ उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः ॥ अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥ इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ॥ सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृप ॥ ४५ ॥ सप्तद्वीपपतिः सम्यक् पितृवत् पालयन् प्रजाः ॥ यथोपजोषं विषयान् जुजुषेऽव्याहतेन्द्रियः ॥ ४६ ॥ देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ॥ प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥ अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ॥ सर्ववेदमयं देवं सर्वदेवमयं हरिम् ॥ ४८ ॥

भूतः सम्यक् प्रजाः पालयन् यथोपजोषं यथाप्रीति विषयान् जुजुषे । सम्यक्त्वं स्पष्टयन् दृष्टान्तमाह— पितृवदिति, अतिस्नेहेनेत्यर्थः । तस्य सामर्थ्यातिशयं भोगे सङ्कोचाभावं च सूचयन्नाह—सप्तद्वीपपतिरिति ॥ ४६ ॥ तत्प्रेयसी भार्या देवयान्यप्यनुदिनं मनसा स्नेहातिशयेन वाचा मधुरभाषणेन देहेन परिचर्यादिना अभीष्टवस्तुसमर्पणेन च रहः एकान्ते प्रेयसो भर्तुस्तस्य परमां प्रीतिं प्रसन्नतामुवाहेत्यन्वयः ॥ ४७ ॥ भूरि दक्षिणा येषु तैः क्रतुभिर्यज्ञैः यज्ञपुरुषं यज्ञफलदातारं यज्ञैराराध्यं यज्ञात्मकं हरिं स्वाराधकदुःखहरणशीलं भगवन्तमयजत् पूजयामासेत्यन्वयः । ननु यज्ञैर्देवाराधनं प्रतीयते कथं तैर्भगवदाराधनं तत्राह— सर्वदेवमयमिति । तत्र हेतुमाह— सर्ववेदमयमिति, सर्ववेदतात्पर्यभूतमित्यर्थः । देवमिति देवतिर्यङ्मनुष्यादिषु देहजीवान्तर्यामिरूपेण विविधक्रीडापरमित्यर्थः ॥ ४८ ॥

१ तद्वयसा तस्य ( पूरो. ) वयसेति सुबो०

उक्तमेव स्पष्टयति— यस्मिन्निति । यस्मिन्निदं विश्वं येनैव विरचितं व्यवहारदशाया यावदिन्द्रियप्रवृत्तिः तावत् नाना देहेन्द्रियविषयादिभेदभिन्नं अवभाति, सुषुप्तौ प्रलये इन्द्रियवृत्त्युपरमे तु न तथाऽऽभाति, तमेव प्रभुं स्वस्वामिनं भगवन्तं वासुदेवं हृदि विन्यस्य परमफलत्वेन ध्यात्वा अयजदिति द्वयोरन्वयः । एवं च नानाविकारवद्विश्वाधारस्तेन तस्यापि विकारित्वमाशङ्क्य तन्निरासाय दृष्टान्तमाह— व्योम्नीव जलदावलिरिति, व्योम्नि आकाशे यथा नानाविधा जलदानामावलिः कदाचिद्भाति कदाचिन्न भाति च तथापि न तयाऽऽकाशस्य विकारित्वं तथा विश्वेन भगवतोऽपि न विकारित्वमित्यर्थः । ननु नानाविधविषयासक्तस्य कथं भगवत एव परमफलत्वेन स्वीकार इत्याशङ्क्याह— निराशीरिति, फलान्तराभिसन्धिरहित इत्यर्थः । एवं निष्कामत्वमपि तस्य कथमित्यत आह— स्वप्नमायामनोरथ इति । स्वप्नवदाशु विनाशी माययाऽविद्यया मनोरथो यस्य सः बहुकालभोगेन यज्ञादिशुभकर्मानुष्ठानजन्यशुद्धान्तःकरणत्वेन च भोगाद्विरक्त इत्याशयः । स वासुदेवः कुत्रास्ति विप्रकृष्टस्य स्वामित्वासम्भवादित्यत आह— गुहाशयमिति । सर्वेषां

**यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ॥ नानाऽवभाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥ तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ॥ नारायणमणीयांसं निराशीरयजत्प्रभुम् ॥ ५० ॥ एवं वर्षसहस्राणि मनःषष्ठैर्मनस्सुखम् ॥ विदधानोऽपि नातृप्यत् सार्वभौमः कदिन्द्रियैः ॥ ५१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे ययातिचरितनिरूपणं नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥**

गुहायामन्तःकरणे शेते वसतीति तथा तम् । किमर्थं तत्र वसतीत्यपेक्षायामाह— नारायणमिति । नराणा समूहो नार तस्य अयन प्रवृत्तिर्यस्मात्त सर्वान्तर्यामिणमित्यर्थः । प्रेरणार्थं तिष्ठतीति भावः । स तर्हि कुतो न ज्ञायते तत्राह— अणीयांसमिति, अतिसूक्ष्ममित्यर्थः ॥ ४९ ॥ ५० ॥ तस्यैव भगवदाराधनात् पूर्वावस्थामाह— एवमिति । एवं पूर्वोक्तप्रकारेण मनः षष्ठं येषां तैः कुत्सितैर्विषयासक्तैरिन्द्रियैर्वर्षसहस्राणि मनस्सुखं कामभोगं विदधानः कुर्वन्नपि सार्वभौमोऽपि ययातिर्नातृप्यत् ॥ ५१ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ अष्टादशो गतो वृत्तिं ययातिवृत्तवर्णकः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ ' नानेव भाति ' इति क्वचित्पाठः ।

ऊनविंशे विरक्तस्य सभार्यस्य वनेसतः ॥ ययातेर्भक्तियोगेन विमुक्तिर्विनिरूप्यते ॥ १ ॥ ॥एवं ययातेर्भोगावस्थावृत्तं भगवदाराधनावस्थावृत्त चोक्त्वा तदनन्तरं वैराग्यावस्थावृत्तमाह– इत्थमिति । इत्थं पूर्वोक्तप्रकारेण स्त्रैणः स्त्रीवश्यः स ययातिः कामान् विषयान् आचरन्नुपभुञ्जानः भगवदाराधन-प्रभावेण हेतुना निर्विण्णो भोगाद्विरक्तः भोगेनात्मनः अपह्नवं तिरस्कारमन्यथाभावं बुद्ध्वा प्रियायै देवयान्यै एतां वक्ष्यमाणा गाथा कथां अगायत कथयामास ॥ १ ॥ तामेवाह– शृण्विति । भृगुकुलोत्पन्नायास्तवापि विवेक एवोचित इत्याशयेन सम्बोधयति– भार्गवीति । यस्य ग्रामनिवासिनो गृहस्थस्य चरितमनुभूय वने स्थिता धीरा जितेन्द्रियाः कथमस्य भद्रं स्यादित्यनुशोचन्ति तेन भुवि मद्विधेनाचरिताममूं वक्ष्यमाणा गाथामितिहास शृण्वित्याशयः ॥ २ ॥ एकोऽसहायः कश्चिद्बस्तो मेषो वने आत्मनः स्वस्य प्रियं विचिन्वन् कूपे पतिता स्वकर्मवशगा काञ्चिदजा ददर्शेत्यन्वयः। बस्त इत्यनेन आत्मा[३] विवक्षितः । वन इत्यनेन संसारः । प्रियमित्यनेन शब्दादिविषयः । अजामित्यनेन देवयानी ॥ ३ ॥ तस्या अजायाः कामी

श्रीशुक उवाच ॥ स इत्थमाचरन् कामान् स्त्रैणोऽपह्नवमात्मनः ॥ बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥
शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ॥ धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥ २ ॥ बस्त एको
वने कश्चिद्विचिन्वन् प्रियमात्मनः ॥ ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥ तस्या उद्धरणोपायं
बस्तः कामी विचिन्तयन् ॥ व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसि ॥ ४ ॥ सोत्तीर्य कूपात् सुश्रोणी तमेव
चकमे किल ॥ तया वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः ॥ पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ॥ ५ ॥

स बस्तः उद्धरणोपायं विचिन्तयन् रोधसि कूपतटे विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थं निर्गमाय मार्गं व्यधत्त कृतवान्। अनेन कूपान्निष्कासनमात्रमेव विवक्षितं 'गृहीत्वा पाणिना पाणिमुज्जहार दयापरः' इत्युक्तत्वात् । कथासौन्दर्यार्थमेवमुक्तम्[४] ॥ ४ ॥ ततः सा सुश्रोणी अजा कूपादुत्तीर्य निस्सृत्य तमेव बस्तं पतिं चकमे । तया अजया वृतं बस्तं समुद्वीक्ष्य ततोऽन्या अपि बह्व्योऽजाः कान्तकामिनीः त कान्तं प्रति कामवत्यो जाताः, पतिं वृतवत्य इत्यर्थः । त्वयाऽप्येतज्ज्ञातं स्यादिति सूचयन्नाह– किलेति । ताश्च शर्मिष्ठादयो विवक्षिताः । एव कामनया तद्वरणहेतुत्वेन त विशिनष्टि– प्रेष्ठं निरतिशयप्रेमास्पदम् । तत्र हेतुः– मीढ्वासमिति, रेतस्सेक्तारमित्यर्थः । तत्रापि नैपुण्यमाह– याभे मैथुने कोविदमिति । रतियोग्यावस्थात्वमाह– श्मश्रुलमिति, श्मश्रुबहुलमित्यर्थः । तत्र सामर्थ्यं सूचयन्नाह– पीवानमिति, परिपुष्टसर्वावयवमित्यर्थः ॥ ५ ॥

१ तस्या अपि वैराग्योत्पादनार्थं स्वीयामेव कथा बस्तरूपकेणाकथयदित्यर्थः । २ 'गेथगी' इति द्वितीयाद्विवचनान्त पाठ श्रीधरस्वामिसम्मत । ३ स्वय ययातिरित्यर्थ' । ४ अष्टादशाध्यायस्यैकोनविंशश्लोकोऽयम् । ५ तस्या, कूपादुद्धरणोपायचिन्तनादिप्रकारवर्णनमित्यर्थ. ।

स एक एव अजवृषः बस्तश्रेष्ठस्तासां बह्वीनामजानां रतिवर्धनः प्रीतिजनकः स्वयं च काम एव ग्रहः पिशाचस्तेन ग्रस्तश्च संस्ताभी रेमे । आत्मानं देहादिविलक्षणस्वरूपं नावबुद्ध्यत नानुसंहितवान् । अडभाव आर्षः ॥ ६ ॥ तमेव प्रेष्ठतमं स्वपतिमन्ययाऽजया सह रममाणं विलोक्य कूपसंविग्ना या पूर्वं कूपे पतिता भीता बस्तेन समुद्धृता सा अजा तत् अजान्तरेण सह रमणरूपं बस्तस्य कर्म नामृष्यत् नासहत । अन्याऽजा शर्मिष्ठा ज्ञेया ॥ ७ ॥ तं बस्तं दुर्हृदं कापट्ययुक्तान्तःकरणम् । सुहृद्रूपमुपरितः प्रेमवत्त्वेन प्रतीयमानम् । क्षणमात्रं स्वार्थमेव सौहृदं स्नेहो यस्य तम् । तत्र हेतुः— कामिनमिति । तत्र हेतुः—इन्द्रियारामं इन्द्रियवशमिति । एवम्भूतं मत्वा तं समुत्सृज्य विहाय दुःखिता सती स्वस्वामिनं प्रति ययौ । स्वामिनमिति शुक्राभिप्रायेण ॥ ८ ॥ स बस्तोऽपि तां प्रसादितुमिडविडाकारं बस्तजातिशब्दं कुर्वन्ननुगतः तथापि पथि तां सन्धितुं प्रसादयितुं नाशक्नोत् । गमने हेतुः— स्त्रैणः स्त्रीवश्यः ।

स एकोऽजवृषस्तासां बह्वीनां रतिवर्द्धनः ॥ रेमे कामग्रहग्रस्त आत्मानं नावबुद्ध्यत ॥ ६ ॥ तमेव प्रेष्ठतमया रममाणमजाऽन्यया ॥ विलोक्य कूपसंविग्ना नामृष्यद्बस्तकर्म तत् ॥ ७ ॥ तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ॥ इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥ सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ॥ कुर्वन्निडविडाकारं नाशक्नोत् पथि सन्धितुम् ॥ ९ ॥ तस्य तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा ॥ लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित् ॥ १० ॥ सम्बद्धवृषणः सोऽपि ह्यजया कूपलब्धया ॥ कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥

तत्रापि हेतुः— कृपण इति, इन्द्रियवश्यतया दीन इत्यर्थः । इडविडाकारमिति स्तुत्यादिकं लक्ष्यते ॥ ९ ॥ तत्र तत्स्वामिगृहे तस्या अजायाः स्वामी कश्चन द्विजः तस्याजस्य लम्बन्तं वृषणमण्ड रुषा क्रोधेन अच्छिनत् । भूयः पुनः अर्थाय स्वप्रयोजनाय योगवित् सर्वोपायज्ञः स एव तस्य वृषणं सन्दधे इत्यन्वयः । अत्र अजास्वामी देवयानीपिता शुक्रः । वृषणच्छेदनं च यौवनापहारेण सम्भोगासामर्थ्यसम्पादनम् । पुनर्वृषणसन्धानं च जराव्यत्यासेन भोगसामर्थ्यसम्पादनम् ॥ १० ॥ हीति प्रसिद्धमेवैतत् । सम्बद्धं वृषणं यस्य सोऽजोऽपि कूपलब्धयाऽजया सह बहुतिथं कालभोगान् भुञ्जानः तैः कामैर्विषयभोगैरद्यापि न तुष्यति अलमिति न मन्यते । त्वयाऽप्यत्र किञ्चिच्छुभाचरणं कर्तव्यमित्याशयेन सम्बोधयति— भद्रे इति ॥ ११ ॥

१ 'कूपसँल्लग्ना' इत्यपि पाठ । २ पितर शुक्रमित्यर्थ । ३ 'तस्यास्तत्र' इति श्रीधरस्वामिसम्मतः पाठोऽनन्वित इति भाति । तदर्थश्चिन्त्यः ।

एवमन्यापदेशेन उपवर्णितमितिहासं आत्मनि सङ्क्रमयति— तथेति । हे सुभ्रु तथा बस्तवदहमपि भवत्यास्तव प्रेम्णा यन्त्रितो वशीकृतस्तव मायया विभ्रमादिरूपया मोहितोऽधुनाऽप्यात्मानं स्वपरमार्थरूपं नाभिजानामि ॥ १२ ॥ ननु तर्हि पुनरपि बहवो विषयाः सेव्यन्तां ततो मनसि प्रीते सति कामोपशान्त्या मोहो निवर्तेतेत्यत्राह— यदिति द्वाभ्याम् । यत् ये पृथिव्यां व्रीह्यादयो विषयास्ते सर्वेऽपि कामहतस्य तृष्णाग्रस्तस्य पुंसो मनसः प्रीतिं सन्तोषं न दुह्यन्ति न पूरयन्ति न कुर्वन्ति ॥ १३ ॥ एतदेव सदृष्टान्तमाह— नेति । जातु कदाचिदपि कामानां विषयाणामुपभोगेन कामो विषयभोगतृष्णा न शाम्यति, किन्तु हविषा घृतेन कृष्णवर्त्माऽग्निर्यथा वर्धते तथा भूयोऽधिकमभिवर्धते एव ॥ १४ ॥ कथं तर्हि सन्तोषपूर्वकं सुखं स्यादित्यपेक्षायामाह— यदेति षड्भिः । यदा भूतेषु पदार्थमात्रेष्वमङ्गलमिदं शोभनमिदमशोभनमिति वैषम्यं भावं न कुरुते तदा समदृष्टेः प्राकृतत्वेन सर्वत्र दुःखहेतुत्वं पश्यतः

तथाऽहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः ॥ आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥ यत्पृथिव्यां व्रीहि-
यवं हिरण्यं पशवः स्त्रियः ॥ न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥ १३ ॥ न जातु कामः कामानामुपभोगेन
शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥ यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ॥ समदृष्टेस्तदा
पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥ या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ॥ तां तृष्णां दुःखनिवहां शर्मकामो
द्रुतं त्यजेत् ॥ १६ ॥ मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् ॥ बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥

पुंसः सर्वदुःखहेतोस्तृष्णाया निवृत्तत्वात् सर्वा एव दिशः सुखमयाः, यत्र क्वापि गतस्य सर्वत्र सुखमेवेत्यर्थः ॥ १५ ॥ तृष्णाया निरासे प्रयत्नाधिक्यमनुविधेयमित्याशयेनाह— येति । या तृष्णा दुर्मतिभिः अविवेकिभिः दुस्त्यजा त्यक्तुमशक्या । सर्वविनाशकेन कालेनापि यस्या विवेकं विना नाशो नैव भवतीत्याह— जीर्यत इति । जीर्यतो वयोहानिं प्राप्नुवतोऽपि पुंसो या तृष्णा न जीर्यते जीर्णतां न प्राप्नोति तां दुःखानि नितरां वहतीति तथाभूतां तृष्णां शर्मकामः दुःखासम्भिन्नसुखं कामयमानो द्रुतं शीघ्रमेव त्यजेत् ॥ १६ ॥ स्त्रीसन्निधानं तु सर्वथा त्याज्यमेवेत्याह— मात्रेति । मात्रादीनामन्यतमयाऽप्यविविक्तं सङ्कीर्णमासनं यस्य तथाभूतो न भवेत् । अन्यथात्वे दोषमाह— बलवानिन्द्रियाणां ग्रामः समूहो विद्वांसं विवेकिनमपि कर्षति, स्त्रीसन्निधाने तद्दर्शनस्पर्शनादौ प्रवर्तयतीत्यर्थः ॥ १७ ॥

यदुक्तं 'जीर्यतोऽपि न जीर्यते' इति तत्स्वदृष्टान्तेनैवोपपादयति— पूर्णमिति। असकृत् पुनःपुनर्विषयाननुसेवतो भुञ्जानस्यापि मे मम वर्षसहस्रं पूर्णमभूत्तथापि अनुसवनं तत्तद्विषयानुभवयोग्यसमयमनतिक्रम्य तेषु विषयेषु तृष्णैवोपजायते, न तु शाम्यति ॥ १८ ॥ तस्माद्विषयोपभोगेन तृष्णायाः शान्त्यभावात् अहमेतां विषयभोगतृष्णां त्यक्त्वा मानसं मनो ब्रह्मणि भगवद्विग्रहे आधाय स्थिरीकृत्य मृगैः सह मृगवद्वने विचरिष्यामीत्यन्वयः। शीतोष्णक्षुत्पिपासादिद्वन्द्वेषु सत्सु कथं ब्रह्मणि मनः स्थिरं स्यात्तत्राह— निर्द्वन्द्व इति। ननु तदपि कथं स्यात्तत्राह— निरहमिति, देहाद्यात्माभिमानरहित इत्यर्थः ॥ १९ ॥ ननु तृष्णाया दुस्त्यजत्वस्योक्तत्वात्तत्त्याग एव कथं येन ब्रह्मनिष्ठा स्यात्तत्राह— दृष्टमिति। दृष्टमैहिकविषयजातं श्रुतमामुष्मिक विषयजात तदुभयमप्यसत् तुच्छमपुरुषार्थरूपं बुद्ध्वा तथा तत्र विषयध्यानादौ सति जन्ममरणादिरूपा संसृतिमात्मनः स्वरूपस्य पुरुषार्थभूतस्य

पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत् ॥ तथापि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥ तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ॥ निर्द्वन्द्वो निरहङ्कारश्चरिष्यामि मृगैः सह ॥ १९ ॥ दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न विशेत् ॥ संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥ २० ॥ इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ॥ दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥ दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ॥ प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥ २२ ॥ भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विभुः ॥ अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥

नाशं तिरोधानं च विद्वान् जानन् यः पुमान् दृष्टश्रुतविषयं नानुध्यायेत् न संविशेत् न चोपभुञ्जीत, स एव तृष्णां हित्वा आत्मदृग्भवति। आत्मपरमात्मतत्त्वज्ञः सन्परमात्मनिष्ठो भवतीत्यर्थः। अनेन 'यदा न कुरुते भावम्' इत्ययं श्लोकः स्पष्टीकृतः ॥ २० ॥ विगतस्पृहः विगतविषयभोगतृष्णारहितो नाहुषो ययातिर्जायां देवयानीं प्रति इत्येवमुक्त्वा पूरवे तदीयं वयो यौवनं दत्त्वा तस्मात्स्वकीया जरसमाददे जग्राह ॥ २१ ॥ ततो दक्षिणपूर्वस्यामाग्नेया दिशि द्रुह्युम्, दक्षिणतो दक्षिणस्या दिशि यदुम्, प्रतीच्या दिशि तुर्वसुम्, उदीच्या दिशि अनुं चेश्वरमधिपतिं चक्रे ॥ २२ ॥ पूरु कनिष्ठमपि सर्वस्य भूमण्डलस्याधिपतिमभिषिच्य अभिषेकपूर्वकं कृत्वा तदग्रजान् यदुप्रभृतीन् तस्य पूरोर्वशे संस्थाप्य स्वयं वनं ययौ। समासाभावेऽपि ल्यबादेश आर्षः। कनिष्ठस्यापि मुख्यतया राज्ये स्थापने हेतुमाह— अर्हत्तममिति, स्वाज्ञानुसारित्वादिगुणैर्बहुमन्तव्यमित्यर्थः। यथेष्टकारिणे तस्य सामर्थ्यमाह— विभुरिति ॥ २३ ॥

१ 'अर्हत्तम विशाम्' इति पाठान्तरम्, तत्र विशा प्रजानामर्हत्तम पूज्यतममित्यर्थ।

स ययातिर्वर्षपूगान् वर्षसमूहान् विषयेषु शब्दादिषु आसेवितमनुभूतं षड्वर्गं षडिन्द्रियसुखं क्षणेन ममुचे इत्यन्वयः। तत्र दृष्टान्तमाह— जातेति। जातौ पक्षौ यस्य स द्विजो विहङ्गमो यथा स्वनीडं त्यजति तद्वदित्यर्थः ॥ २४ ॥ स प्रतीतः प्रख्यातः ययातिः तत्र वने परे ब्रह्मणि वासुदेवाख्ये सायुज्यरूपा भागवतीं भगवदुपासनैकलभ्या गतिं मुक्तिं लेभे इत्यन्वयः। परत्वे हेतुमाह—अमले इति, सर्वदोषविनिर्मुक्ते इत्यर्थः। तस्या गतेर्दुर्लभत्वेन तत्साधनसम्पत्तिं सूचयंस्त विशिनष्टि— आत्मानुभूत्या आत्मपरात्मस्वरूपसाक्षात्कारेण विधुत त्रिलिङ्गं त्रिगुणकार्यं यस्मात्सः। देहाद्यासक्तस्य आत्मानुभवोऽपि कथमित्याशङ्क्याह— निर्मुक्तस्त्यक्तः समस्तो देहतदनुबन्ध्यादिसङ्गो येन सः ॥ २५ ॥ देवयानी तु ता भर्त्रा कथिता गाथा श्रुत्वा तयाऽऽत्मनः प्रस्तोभं निवृत्तिमार्गे प्रोत्साहनं मेने। यतः स्त्रीपुंसोर्यः स्नेहस्ततो यद्वियोगावस्थाया वैक्लव्यं तस्माद्धेतोस्तत्परिहाराय परिहासमिवेरितं कथितम् ॥ २६ ॥ ततश्च सा देवयानी ईश्वरतन्त्राणा परमेश्वराधीनाना सुहृदा पतिपुत्रादीना सन्निवासं सहवासं गच्छता पान्थाना प्रपाया पानशालायामिव अस्थिरमतः प्रभोर्मायाविरचितं तत्तत्कर्मानुसारेणेश्वरेच्छाधीनं विज्ञाय ॥ २७ ॥ तथा स्वप्नौपम्येन स्वप्नदृष्टपदार्थदृष्टान्तेन सर्वस्यापुरुषार्थत्व

आसेवितं वर्षपूगान् षड्वर्गं विषयेषु सः ॥ क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥ स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ॥ परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥ श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ॥ स्त्रीपुंसोः स्नेहवैक्लव्यात् परिहासमिवेरितम् ॥ २६ ॥ सा सन्निवासं सुहृदां प्रपायामिव गच्छताम् ॥ विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः ॥ २७ ॥ सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ॥ कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥ २८ ॥ नमस्तुभ्यं भगवते वासुदेवाय वेधसे ॥ सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे ययातिमोक्षनिरूपणं नाम एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥

च विज्ञाय सर्वत्र देहतदनुबन्ध्यादिषु सङ्गमासक्तिं उत्सृज्य श्रीकृष्णे स्वमनः समावेश्य स्थिरीकृत्य आत्मनो लिङ्गं शरीरं व्यधुनोत् तत्याज। साऽपि पतिवन्मुक्ता जाता। तस्या अप्येतद्युक्तमेव भृगुवंशोत्पन्नत्वात् इत्याशयेनाह— भार्गवीति ॥ २८ ॥ स्मृतिप्राप्तं भगवन्तं शुको नमस्करोति— नम इति। भगवते ऐश्वर्यादिगुणपूर्णाय वेधसे जगत्कारणाय सर्वभूताधिवासाय सर्वान्तर्यामिणे सर्वसाक्षिणे तथापि शान्ताय रागद्वेषादिरहिताय बृहते महते वासुदेवाय श्रीकृष्णाय तुभ्यं नमो नमः ॥ २९ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ ऊनविंशो गतो वृत्तिं ययातिमुक्तिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥

पूरुवंशे तु दौष्यन्तेर्भरतस्य महात्मनः ॥ चरितं तत्पितुश्चापि विंशेऽध्याये निरूप्यते ॥ १ ॥ ॥ एवं ययातिचारितं निरूप्याथ तत्सुतस्य पूरोर्वंशकथनं प्रतिजानन् राज्ञस्तत्र शुश्रूषामुत्पादयति— पूरोरिति । हे भारत यत्र यस्मिन् वंशे त्वं जातोऽसि यत्र च वंश्याः वंशे साधवो वंशाविवर्धना राजर्षयः क्षत्रियश्रेष्ठाः ब्रह्मवंश्या वंशवर्धनाः ब्राह्मणाश्च जज्ञिरे तं पूरोर्वंशं प्रवक्ष्यामि, त्वं सावधानतया शृण्विति शेषेणान्वयः ॥ १ ॥ एवं प्रतिज्ञाय सावधानं कृत्वा वंशमाह— जन्मेजय इति । हीति सन्देहवारणाय । जन्मेजयः पूरोः पुत्रोऽभूत । तस्य सुतः प्रचिन्वानभूत् । प्रधन्वेति पाठान्तरम् । ततः प्रवीरो जातः । अथ तस्मात् मनस्युरभूत् । तस्मात् चारुपदोऽभवत् । वै चकारार्थे । चारोः सुत इति पाठान्तरम् ॥ २ ॥ रौद्रातिरिति पाठान्तरम् ॥ ३ ॥



श्रीशुक उवाच ॥ पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ॥ यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥ जन्मेजयो ह्यभूत् पूरोः प्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥ तस्य सुद्युरभूत् पुत्रस्तस्माद्बहुगवस्ततः ॥ संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥ ऋतेयुस्तस्य कुक्षेयुः स्थण्डिलेयुः कृतेयुकः ॥ जलेयुः सन्ततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ॥ घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥ ऋतेयो रन्तिभारोऽभूत्त्रयस्तस्यात्मजा नृप ॥ सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥

तस्य रौद्राश्वस्य घृताच्यामप्सरसि एते ऋतेयुप्रभृतयः पुत्रा जाताः । अत्र युपदस्य धर्मादिभिः प्रत्येक सम्बधः द्वन्द्वान्ते श्रुतत्वात् । ततश्च धर्मेयुः सत्येयुः व्रतेयुश्चेति फलितम् । अप्सरस इति षष्ठी सप्तम्यर्थे । पुत्राणा मध्ये वनेयुरवमः कनीयान् स्मृतः कथितः । तद्वशवर्तित्वे दृष्टान्तमाह— जगत आत्मभूतस्य मुख्यस्य प्राणस्येन्द्रियाणीव ॥ ४ ॥ ५ ॥ तत ऋतेयोः पुत्रः रन्तिभारोऽभूत् । रन्तिनार इति पाठान्तरम् । हे नृप तस्य त्रयः आत्मजाः पुत्रा जाताः । तान्निर्दिशति— सुमतिर्ध्रुवोऽप्रतिरथ इति । स्मृतिरिति पाठान्तरम् । तत्राप्रतिरथस्यात्मजः कण्वः ॥ ६ ॥



१ 'प्रधन्वा' इति पाठान्तरम् । २ 'रौद्राति' इति पाठान्तरम् । ३ 'रन्तिनार' इति पाठान्तरम् । ४ 'स्मृतिरथ' इति पाठान्तरम् ।

तस्य मेधातिथिः। तस्मात् प्रस्कण्वप्रभृतयो द्विजातयो ब्राह्मणा जज्ञिरे। सुमतेः रैभ्यः पुत्रोऽभूत्। तस्य सुतो दुष्यन्तो मतः प्रख्यातः। दुष्मन्त इति पाठान्तरम् ॥ ७ ॥ दुष्यन्तस्य शकुन्तलायां भरतो जात इति वक्तु तद्वृत्तान्तमाह– दुष्यन्त इत्यादिना। कदाचित् दुष्यन्तो मृगयां वने मृगहननविहारं कुर्वन् यदृच्छया कण्वस्य ऋषेराश्रमस्य पदं स्थानं गतः। तत्राश्रमे आसीनामुपविष्टां स्वप्रभया तमाश्रम मण्डयन्तीं शोभयन्तीं देवस्य माया मोहिनीशक्तिमिव स्त्रियं शकुन्तला विलोक्य सद्यस्तत्क्षणमेव मुमुहे इति सार्धान्वयः। तमाश्रममित्यत्र रमामिवेति पाठान्तरम्। कतिपयैर्भटैर्वृतः सन् ता वरारोहा सुन्दरीं बभाषे ॥ ८ ॥ ९ ॥ उक्तमेव स्पष्टयति– तस्याः दर्शनेन प्रमुदितो हृष्टः अतएव सन्निवृत्तः परिश्रमः मृगयायासो यस्मात् स कामेन सन्तप्तश्च प्रहसन् श्लक्ष्णया मधुरया गिरा ता पप्रच्छेत्यन्वयः॥ १० ॥ तत्प्रश्नमाह– का त्वमिति। स्वकामन्याकुलता सूचयन् बहुधा

तस्य मेधातिथिस्तस्मात् प्रस्कण्वादिद्विजातयः॥ पुत्रोऽभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः॥ ७ ॥ दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः॥ तत्रासीनां स्वप्रभया मण्डयन्तीं तमाश्रमम्[2] ॥ ८ ॥ विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ॥ बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥ तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ॥ पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥ का त्वं कमलपत्राक्षि कस्यासि हृदयङ्गमे ॥ किं वा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ ११ ॥ व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ॥ नहि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥ शकुन्तलोवाच ॥ विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ॥ वेदैतद्भगवान् कण्वो वीर किं करवाम ते ॥ १३ ॥

सम्बोधयति– हे कमलपत्राक्षि, हे हृदयङ्गमे मनोहरे। त्वं केति जातिप्रश्नः। कस्यासीति पित्रादिसम्बन्धप्रश्नः। अत्र तु निर्जने वने भवत्या त्वया किं चिकीर्षितं कर्तुमिष्टमस्ति ? ॥ ११ ॥ हे सुमध्यमे त्वामहं राजन्यतनयां व्यक्तं स्पष्टं वेद्मि। तत्र हेतुमाह– नहि पौरवाणां पुरुवंशजानां चेतोऽधर्मे क्वचिदपि रमते। अतो यदि त्वं राजतनया न स्यास्तदा मच्चेतस्त्वय्यासक्त न स्यात्, अस्ति चासक्तं तस्मात्त्वं तथेति भावः ॥ १२॥ विश्वामित्रस्य क्षत्रियस्यैवात्मजा कन्याऽहं मेनकायामप्सरसि जाता, तया च स्वर्गं गच्छन्त्या वने त्यक्ता। एतद्वृत्तं च कण्वो वेद जानाति। तत एव मया श्रुतमित्याशयः। तद्वाक्यमपि कथं प्रमाणं तत्राह– भगवानिति, सर्वज्ञ इत्यर्थः। साऽपि तस्मिन् स्वासक्तिं सूचयन्ती द्विः सम्बोधयति– वीरेति। ते तव किं कार्यं करवाम ? ॥ १३ ॥

१ ' दुष्मन्त ' इति पाठान्तरम्। २ ' रमामिव' इति पाठान्तरम्। ३ तस्य कण्वस्य वाक्यम्। ४ द्वितीय सम्बोधन तूत्तरश्लोकान्तर्गत ज्ञेयम्। ५ बहुवचन सख्यभिप्रायेणेति ज्ञेयम्।

हे अरविन्दाक्ष हि यथासुख त्वयाऽत्र आस्यतां स्थीयताम् । नोऽस्माकमर्हणं जलासनादिकं गृह्यताम् । अत्र नीवाराः आरण्यकव्रीहयः सन्ति ते भुज्यताम् । यदि रोचते तर्हि उष्यताम् ॥ १४ ॥ किं करवामेति वाक्यात्तदभिप्रायं ज्ञात्वाऽऽह— उपपन्नमिति । हे सुभ्रु कुशिकान्वये जातायास्तवेदं किं करवामेत्यादिवचनमुपपन्नं युक्तमेव । हि यस्मात् राज्ञा कन्यकाः स्वयमेव सदृशं वरं पतिं वृणुते ॥ १५ ॥ ततश्च तया दुष्यन्तोक्ते ओमित्यङ्गीकृते सति देशकालविभागवित् राजा दुष्यन्तो गान्धर्वविधिना मिथः समयपूर्वकेण यथाधर्म शकुन्तलामुपयेमे स्वीकृतवान् ॥ १६ ॥ अमोघमवितथ वीर्य यस्य स राजर्षिर्दुष्यन्तो महिष्यां तस्या शकुन्तलाया वीर्यं रेत आदधे निहितवान् । ततः श्वोभूतेऽह्नि प्रभाते जाते सति स स्वपुरं यातः गतः । ततः

आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणं च नः ॥ भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥ १४ ॥ दुष्यन्त उवाच ॥ उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ॥ स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥ ओमित्युक्ते यथाधर्म-मुपयेमे शकुन्तलाम् ॥ गान्धर्वविधिना राजा देशकालविभागवित् ॥ १६ ॥ अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ॥ श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७ ॥ कण्वः कुमारस्य वने चक्रे समुचिताः क्रियाः ॥ बद्ध्वा मृगेन्द्रां-स्तरसा क्रीडति स्म स बालकः ॥ १८ ॥ तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ॥ हरेरंशांशसम्भूतं भर्तुरन्तिक-मागमत् ॥ १९ ॥ यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ॥ शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥

कालेन प्राप्तेन प्रसूतिसमयेन सा शकुन्तला सुतमसूत सुषुवे ॥ १७ ॥ तस्य कुमारस्य समुचिताः जातकर्मादिक्रियाः कण्वो वने एव चक्रे । स च बालक. तरसा बलेन मृगेन्द्रान् सिंहान् बद्ध्वा तैः क्रीडति स्म । बाल्यादारभ्य एवापरिमितबलशौर्यादिगुणैः सम्पन्नो जात इत्यर्थः ॥ १८ ॥ दुरत्यय-मप्रतिहतं विक्रान्तं विक्रमणं यस्य तम् — तत्र हेतुः— हरेर्भगवतोऽशांशेन सम्भूतं तं कुमारमादाय गृहीत्वा सा प्रमदोत्तमा शकुन्तला भर्तुर्दुष्यन्तस्य अन्तिकं समीपमागमत् ॥ १९ ॥ तौ भार्यापुत्रावनिन्दितौ निर्दुष्टावपि जनापवादभयात् यदा राजा दुष्यन्तो न जगृहे स्वकीयत्वेन न स्वीकृतवान् तदा सर्वेषा भूताना जनानां शृण्वतामेव सतां खे आकाशे अशरीरिणी अदृष्टवक्तृका वागाह, अश्रूयतेत्यर्थः ॥ २० ॥



१ 'विधानवित्' इति क्वचित्पाठ । २ 'समुदिता' इति पाठान्तरम्, तत्र सम्यक् उदिता धर्मशास्त्रोक्ता जातकर्मादिक्रिया एवेत्यर्थः ।

तामेव दर्शयति— मातेति । भस्त्रा चर्ममयं पात्रं तद्वदाधारमात्रमेव माता, पुत्रस्तु पितुरेव । तत्र हेतुमाह— येनेति[1] । येन पित्रा जात उत्पादित. स पुत्रः स एव पितृरूप एव "आत्मा वै पुत्रनामासि" इति श्रुतेः । अतः पुत्रं भरस्व पुषाण । हे दुष्यन्त शकुन्तला मावमंस्थाः तदवमाननं न कर्तव्यम् । भरस्वेत्युक्त्या भरतेति नामनिरुक्तिः ॥ २१ ॥ पुत्रस्वीकारे च तव महानुपकारः स्यादेवेत्याह— रेतोधा इति । रेतोधाः रेतस्सेक्ता वंशकर्ता पुत्रो यमस्य क्षयात् स्थानात् पितरं नयति तारयति । तथाच श्रुतिः— "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" इति । पुत्रमिति पाठान्तरे तु मातृपित्रोः पुत्रं प्रति विवादे यमक्षयाद्धर्मनिर्णेतुर्यमस्य सभायाः सकाशात् रेतोधाः रेतस्सेक्ता पितैव धर्मेण विजित्य पुत्रं नयति, न तु मातेत्यर्थः । भवत्वेवं तथाप्ययं मम पुत्रो वा न वेत्येव सन्देहस्तत्राह— अस्य गर्भस्य त्वमेव धाता धारक इति तु शकुन्तला सत्यमेवाह । एवमुक्तो राजा भार्यापुत्रौ स्वीकृतवानित्यर्थाज्ज्ञेयम् ॥ २२ ॥ ततश्च पितरि दुष्यन्ते उपरते सति स भरतोऽपि चक्रवर्ती

**माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् ॥ २१ ॥ रेतोधाः पुत्रो नयति नरदेव यमक्षयात् ॥ त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ २२ ॥ पितर्युपरते सोऽपि चक्रवर्ती महायशाः ॥ महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥ चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ॥ ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराड्विभुः ॥ पञ्चपञ्चाशता मेध्यैर्गङ्गायामनु वाजिभिः ॥ २४ ॥ मामतेयं पुरोधाय यमुनायामनु प्रभुः ॥ अष्टसप्तति मेध्याश्वान् बबन्ध प्रददद्वसु ॥ २५ ॥**

सप्तद्वीपाधिपतिर्महायशाः विपुलकीर्तिश्च बभूवेति शेषः । भुवि तस्य महिमाऽधुनापि गीयते । तथामहिमवत्त्वे तद्गाने च हेतुमाह— हरेरंशभुव इति, भगवतोंऽशाज्जातस्येत्यर्थः ॥ २३ ॥ हरेरंशभवत्वे लिङ्ग वदन् विशिनष्टि—चक्रमिति । अस्य भरतस्य दक्षिणहस्ते चक्रं चक्राकारा रेखा तथाऽस्य पादयोस्तु पद्मकोशः पद्मकोशाकारा रेखा च, वर्तते इति शेषः । स च महाभिषेकेण विधिना राज्येऽभिषिक्तः स्थापितः अधिराट् सार्वभौमः अत एव विभुः सर्वतो महान् प्रभुः समर्थो भरतो मामतेयं ममताया अपत्यं दीर्घतमसं ऋषिं पुरोधाय पुरोहितं कृत्वा गङ्गायामनु गङ्गातीरेऽनुलोम पञ्चपञ्चाशता मेध्यैः पवित्रैर्वाजिभिः अश्वैः अश्वमेधैर्भगवन्तमीजे आराधितवानित्यर्थः । तथा वसु धनं प्रददत् प्रयच्छत् । यमुनायामनु यमुनातीरेऽपि तदनुलोमं अष्टाधिकसप्ततिसङ्ख्याकान् मेध्यान् अश्वान् बबन्ध तद्बन्धनपूर्वकं तावद्भिरश्वमेधैः हरिमीजे इत्यर्थः । अत्र सार्धद्वयस्यान्वयः ॥ २४ ॥ २५ ॥

---

१ 'पुत्र' इति पाठान्तरम् ।

हीति सन्देहवारणाय। दुष्यन्तपुत्रस्य भरतस्य साचीगुणे प्रकृष्टगुणवति देशेऽग्निश्रितोऽभूत्। यस्मिन्नग्निचयनस्थले सहस्रं ब्राह्मणाः भरतेन भूरिदानेन दत्ता गाः बद्वशः प्रत्येकं बद्व बद्वं विभेजिरे विभज्य जगृहुरित्यर्थः। चतुरशीत्याधिकैः त्रयोदशसहस्रैरेक बद्वं भवति ॥ २६ ॥ त्रयस्त्रिंशच्छतसंख्याकान् अश्वान् स्वारोहणार्थं बद्ध्वा स्वैश्वर्येण नृगान् अन्यान् पार्थिवान् विस्मापयन् आश्चर्यविशिष्टान् कुर्वन् दौष्यन्तिर्भरतो देवानामपि मायां वैभवं अत्यगात् अत्यशेत। तत्र हेतुमाह— मायावत्तर इति। ह्रस्वत्वमार्षम्। माया वैभवं तद्वता श्रेष्ठः, हरेरंशत्वादित्याशयः। गुरुमाययाविति पाठे तु देवानामपि गुरुं पूज्यं भगवन्तमेव आययौ यातः शरणं गत इत्यर्थः ॥ २७ ॥ शुक्लदतः शुक्लदन्तविशिष्टान् हिरण्येन परिवृतान् भूषितान् नियुतानि लक्षाणि त्रयोदश कृष्णान् मृगान् भद्रमन्द्रमृगादिजातिविशिष्टान् गजश्रेष्ठान् मष्णारे मष्णाराख्ये तीर्थविशेषे कर्मणि यज्ञकर्मणि मष्णाराख्ये कर्मविशेषे चाददात् प्रायच्छत्। अनेन बद्वसङ्ख्या प्रदर्शिता। तथाहि— " हिरण्येन परीवृतान् कृष्णान् शुक्लदतो मृगान् ॥ मष्णारे भरतोऽददाच्छत बद्वानि सप्त च " इति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि चतुर्दशलक्षाणि गृहीतानि। तथा च चतुर्दशलक्षाणा सप्ताधिकशतभागो बद्वमित्युक्त भवति। तथा च पूर्वोक्ता सङ्ख्या बद्वमिति सिद्धम्। सा च सङ्ख्या श्लोकेन सङ्गृह्यते— ' चतुर्दशाना लक्षाणा सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश' इति ॥ २८ ॥ किञ्च भरतस्य महदद्भुतं कर्म पूर्वे येऽतीता नृपास्ते नैवापुर्नैव कृतवन्तः। ये चापरे भाविनो वर्तमानाश्चार्वाचीनाः नृपास्तेऽपि नैव प्राप्स्यन्ति नैव करिष्यन्ति। तत्र दृष्टान्तमाह— बाहुभ्यामिति, पुण्यं विना केवलं बाहुबलेन त्रिदिवं स्वर्गं यथा जना नाप्नुवन्ति तद्वदित्यर्थः ॥ २९ ॥

भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ॥ सहस्रं बद्वशो यस्मिन् ब्राह्मणा गा विभेजिरे ॥ २६ ॥ त्रयस्त्रिंशच्छतं ह्यश्वान् बद्ध्वा विस्मापयन्नृपान् ॥ दौष्यन्तिरत्यगान्मायां देवानां मायवत्तरः ॥ २७ ॥ मृगान् शुक्लदतः कृष्णान् हिरण्येन परीवृतान् ॥ अदात्कर्मणि मष्णारे नियुतानि चतुर्दश ॥ २८ ॥ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ॥ नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥

१ तथाहि—"हिरण्येन परीवृतान्कृष्णान् शुक्लदतो मृगान्। मष्णारे भरतोऽददाच्छत बद्वानि सप्तच" इति श्रुत्युक्तानि सप्ताधिकशत बद्वानि श्रीशुकेनोत्तरश्लोके चतुर्दशलक्षत्वेन सगृहीतानि— ' अदात्कर्मणि मष्णारे नियुतानि चतुर्दश ' इति। एव चतुर्दशलक्षाणा सप्ताधिकशतभागो बद्वमित्युक्तम्। इय च बद्वसंख्या श्लोकेन सगृह्यते—'चतुर्दशाना लक्षाणा सप्ताधिकशतांशक ॥ बद्व चतुरशीत्यग्रसहस्राणि त्रयोदश ' इत्येवमेव श्रीधरस्वामिनो व्याचख्यु।

तस्य पराक्रमातिशयं दर्शयति— किरातेति । अब्रह्मण्यान् वेदब्राह्मणादिषु प्रतिकूलान् किरातादीन् हीनजातीन् नृपाश्च तादृशान् सर्वान् दिग्विजये भरतोऽहन् ॥ ३० ॥ किञ्च ये असुराः पुरा पूर्वकाले देवान् जित्वा रसौकांसि रसातलस्थानानि भेजिरे प्राप्ताः तैश्च प्राणिभिर्बलिभिर्या देवस्त्रियो रसातलं प्रति नीताः प्रापितास्ताः पुनराहरत् भरत आनीतवान् । प्राणिभिरसुरैर्नीतैः मनुष्यादिभिः सह ताः आनीतवान् इति वा । पणिभिरिति पाठे पणयोऽसुरास्तैर्नीताः । यद्वा पणयो दूतास्तैः दूतान् प्रस्थाप्य युद्धं विनाऽप्याज्ञामात्रेणानयदित्यर्थः ॥ ३१ ॥ किञ्च भरते राजनि सति तस्य प्रजानां तद्विषयस्थानां जनाना सर्वान् कामान् अभिलषितान् पदार्थान् रोदसी द्यावापृथिव्यौ दुदुहतुः पूरयामासतुः । एवं त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रसंवत्सरान् दिक्षु सर्वासु चक्रमाज्ञामवर्तयत् ॥ ३२ ॥ ततश्च सम्राट् स भरतो लोकपालाख्यं लोकपालेषु आ समन्तात् ख्यातिर्यस्मात् तथाभूतमैश्वर्यं गजरथतुरङ्गादिरूपं, तथा अधिराज्ञां श्रियं धनं, अस्खलितमव्याहतं चक्रमाज्ञारूपं, प्राणान् इन्द्रियाणि च मृषा परमपुरुषार्थभगवत्प्राप्तिप्रति-

**किरातहूणान् यवनानन्ध्रान् कङ्कान् खशान् शकान् ॥ अब्रह्मण्यान्नृपांश्चाहन् म्लेच्छान् दिग्विजयेऽखिलान् ॥ ३० ॥ जित्वा पुराऽसुरा देवान् ये रसौकांसि भेजिरे ॥ देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ॥ ३१ ॥ सर्वकामान् दुदुहतुः प्रजानां तस्य रोदसी ॥ समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥ स सम्राड् लोकपालाख्यमैश्वर्यमधिराट् श्रियम् ॥ चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह ॥ ३३ ॥ तस्यासन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः ॥ जघ्नुस्त्यागभयात् पुत्रान्नानुरूपा इतीरिते ॥ ३४ ॥ तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥**

बन्धका दुःखप्रदत्वादेवेति निश्चित्य तेभ्य उपरराम विरक्तो भूत्वा वनं गत्वा भक्त्या भगवन्तं प्रापेत्यर्थः। एवमैश्वर्यादिमतोऽपि तत्त्याग आश्चर्यमेवेति सूचयन्नाह— हेति ॥ ३३ ॥ तस्यौरसः पुत्रो वंशप्रवर्तको नाभवदिति प्रकारान्तरेण लब्धेन पुत्रेण वंशः प्रवृत्त इति प्रसङ्गमाह— तस्येति । हे नृपेति सम्बोधनमाश्चर्यान्तरश्रवणे सावधानतार्थम् । तस्य भरतस्य सुसम्मताः प्रिया विदर्भस्य सुतास्तिस्रः पत्न्य आसन् ताश्च जातान् नानुरूपा मम सदृशा इमे न भवन्तीति भर्त्रा ईरिते अभिहिते सति पुनरेषा वैसादृश्यदर्शनेन व्यभिचारशङ्कयाऽस्मास्त्यजेदिति त्यागभयादेकैक जघ्नुः हतवत्य इत्यर्थः ॥ ३४ ॥ एवं तस्य भरतस्य वंशे वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमाख्येन यागेन यजतः स्वाराधनं कुर्वतस्तस्य प्रसन्नाः सन्तो मरुतो भरद्वाजाख्यं पुत्रमुपाददुः समर्पयामासुः ॥ ३५ ॥

१ पुत्रान्निजघ्नुरिति सम्बन्ध. । २ नान्वित्यादिर्भवतीत्यन्तो भरतवाक्यानुवाद । ३ भरतेन ।

मरुतां भरद्वाजप्राप्तिप्रकारं दर्शयति—अन्तर्वत्न्यामिति चतुर्भिः । कदाचिद्बृहस्पतिरन्तर्वत्न्या गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्या ममताया चौर्येण मैथुनाय प्रवृत्तः तदा द्वितीयस्य गर्भस्यावकाशाभावात् आक्रोशपूर्वकं वारितः । ततश्च क्रुद्धो बृहस्पतिरत्वमन्धो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिञ्चत् । ततो बृहस्पतेः शापात् गर्भस्थो दीर्घतमा अन्धो बभूव । तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निस्सारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ॥ ३६ ॥ तं परवीर्यजं पुत्रं त्यक्तुकामां — तत्र हेतुः— भर्तुस्त्यागाद्विशङ्कितां ममतां प्रति सुरास्तस्य बालस्य नाम निरुच्यते येन तथाभूतं एनं वक्ष्यमाणं बालकपोषणप्रेरणात्मकं श्लोकं जगुः उक्तवन्त इत्यर्थः । ममतापदं बृहस्पतेरप्युपलक्षणम् ॥ ३७ ॥ तत्र पुत्रत्यागस्य हिंसापर्यवसायित्वादनुचितत्वं सूचयन्तो ममतां सम्बोधयन्ति— मूढे इति । हे मूढे द्वाजं बृहस्पतेस्त्वत्तश्चेति द्वाभ्यां जातमिमं त्वं भर पुषाण । एवमुक्तेऽपि भर्तृत्यागभयात्तदनङ्गीकुर्वतीमालक्ष्य बृहस्पतिं प्रत्याहुः । हे बृहस्पते द्वाभ्या जातत्वात्तवाप्ययं पुत्रः, अतस्त्वमेनं द्वाजं भर पुषाण । तदा च बृहस्पति-

**अन्तर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥ तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम् ॥ नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ॥ ३७ ॥ मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ॥ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥ चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ॥ व्यसृजन्मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे भरतचरितनिरूपणं नाम विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥**

र्ममतां प्रत्युवाच त्वं भर यतो द्वाजम्, सा च बृहस्पतिं प्रत्युवाच त्वमेव भर यतो द्वाजम्, इति परस्परमुक्त्वा यत् यस्मात् पितरौ यातौ पुत्रं त्यक्तवन्तौ ततस्तस्मात् भर द्वाजमिति पुनः पुनः कथनादयं पुत्रस्तु भरद्वाजसञ्ज्ञोऽभूत् ॥ ३८ ॥ एवं बालकपोषणे सुरैश्चोद्यमाना प्रेरिताऽपि ममता तमात्मजं वितथं व्यभिचारजत्वेनापवादहेतुत्वान्निरर्थकं मत्वा व्यसृजत् तत्त्याज । इदं बृहस्पतेरप्युपलक्षणम् । आदिजामिति पाठे तु प्रथमज स्वभर्तुर्वीर्याज्जातमेवावितथं मुख्यं पुत्रं मत्वा बृहस्पतेर्जातं तत्त्याजेत्यर्थः । एवं ताभ्यां त्यक्तं मरुतोऽबिभ्रन् अबिभरुः तैश्चैवं प्राप्तोऽयं भरद्वाजो भरतस्यान्वये वितथे सति दत्तः ॥ ३९ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ भरतस्य गतो विंशश्चरितस्य निरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ उदरस्थितेन गर्भेण वारित इत्यर्थ । २ 'आत्मज' इत्यत्र 'आदिज' इति पाठे तु अवितथमिति छेद । 'मत्वाऽऽदितरमात्मज' इत्यपि पाठ । ३ अनेन बृहस्पतिरपि त निरर्थक मत्वा तत्याजेत्यर्थ । पितरौ याताविति पूर्वमेवोक्तत्वात् ।

भरतान्वयजातस्य रन्तिदेवस्य धीमतः ॥ भगवत्तोषकं वृत्तमेकविंशे निरूप्यते ॥ १ ॥ ॥ भरतस्यान्वये वितथे सति मरुद्भिर्दत्तत्वात् स भरद्वाज एव वितथसञ्ज्ञः, स च ब्राह्मणोऽपि भरतस्य दत्तपुत्र इति तद्वंशोऽनुक्रम्यते । वितथस्य सुतो मन्युः । तस्मात् बृहत्क्षत्रादयो गर्गान्ताः पञ्च पुत्रा जज्ञिरे । तत इति बृहत्क्षत्रादनन्तरं तदनुजो जय इत्यर्थः । तत्र नरस्यात्मजः संकृतिः ॥ १ ॥ संकृतेस्तु गुरुः रन्तिदेवश्चेति द्वौ पुत्रौ बभूवतुः । तत्र रन्तिदेवस्य तु यशः इहास्मिँल्लोके अमुत्र स्वर्गादिलोके च जनैर्गीयते । तदपि यशसो न न्यूनत्वं महाभागवतत्वादिति सूचयन् सम्बोधयति— पाण्डुनन्दनेति ॥ २ ॥ कीदृशं तद्यश इत्यपेक्षायां सङ्क्षेपेण तद्वृत्तान्तमाह—वियद्वित्तस्येति । वियत् व्ययं प्राप्नुवद्वित्तं भाग्यं यस्य तस्य । एतदेव स्पष्टयति—बुभुक्षतो भोक्तुमिच्छतोऽपि सतो लब्धं लब्धं ददतः । अतएव निष्किञ्चनस्य सायन्तनश्वस्तनभोजनाद्यर्थमप्यन्नादिपरिग्रहरहितस्य अतएव सकुटुम्बस्य कुटुम्ब-

श्रीशुक उवाच ॥ वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ॥ महावीर्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥ १ ॥ गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ॥ रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥ वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ॥ निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ॥ ३ ॥ व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ॥ घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥ कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ॥ अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥ तस्मै संव्यभजत् सोऽन्नमादृत्य श्रद्धयाऽन्वितः ॥ हरिं सर्वत्र सम्पश्यन् स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥

सहितस्य सीदतः क्लिश्यतः । एतदेव पुनः स्पष्टयति—कृच्छ्रं क्लेशं प्राप्तः कुटुम्बो यस्य तस्य । क्षुत्तृड्भ्यां जातो वेपथुः शरीरे कम्पो यस्य तस्य । तथापि धीरस्य एवं बहिःक्लेशसत्वेऽपि जितेन्द्रियत्वेनान्तःक्लेशरहितस्येत्यर्थः । अपिबतः जलपानमप्यकुर्वतः जलमात्रमप्यप्राप्नुवतः अष्टचत्वारिंशदहानि व्यतीयुः अतिक्रान्तानि बभूवुः । किलेत्यनेन नात्र सन्देहः कर्तव्य इति सूचयति । तदा च प्रातःकाले घृतादित्रयं तोयं जलं च उपस्थितं प्रारब्धवशात् कुतश्चित्प्राप्तम् । घृतादीनां द्वन्द्वैक्यम् । तदा च भोक्तुकामस्य तस्य भोजनकाले कश्चिद्ब्राह्मणोऽतिथिरागमदिति त्रयाणामेकोऽन्वयः ॥ ३ ॥ ४ ॥ ५ ॥ स रन्तिदेवः आदृत्य तस्यादरं कृत्वा श्रद्धयान्वितः दानेच्छायुक्तः । तत्र हेतुमाह— सर्वत्र भूतेषु हरिं सम्यक् निश्चयेन पश्यंस्तस्यातिथयेऽन्नं घृतपायससंयावं संव्यभजत् विभज्य ददौ । स च द्विजस्तदन्नं भुक्त्वा प्रययौ ॥ ६ ॥

१ सङ्क्षेपेण । २ तद्वृत्ताविषतुष्ट्य भोक्तुकामस्य रन्तिदेवस्य । ३ संव्यभजदित्यनेन अतिथये स्वादिभ्य स्वस्मै चान्नघृतादिकं सम्यक् न्यूनाधिकराहित्येन व्यभजदिति अतिथे वा तद्भोजनपर्याप्तमेवान्नं पृथक्कृत्य दत्तवानित्यर्थश्चिन्त्य ।

तस्य धैर्यातिशयं श्रृण्वित्याशयेन सम्बोधयति— हे महीपते इति। विसर्गान्तपाठे राजविशेषणम्। अथानन्तरं विभक्तस्य द्विजभुक्त्याऽवशिष्टमन्नादिकं स्वकुटुम्बार्थं विभक्तवतो भोक्ष्यमाणस्य सतः अन्यः कश्चिद्वृषलोऽतिथिरागमत् तदा कुटुम्बार्थं विभक्तमप्यन्नं तस्मै वृषलाय शूद्राय पुनर्व्यभजत् विभज्य ददौ। तत्रापि पूर्वोक्तमेव हेतुमाह— तस्मिन् हरिं स्मरन् पश्यन्निति ॥ ७ ॥ तस्मिन् शूद्रे याते निर्गते सति श्वभिरावृतः कश्चिदन्योऽतिथिरगात्। स च तं राजानं प्रत्याह। हे राजन् बुभुक्षते क्षुधार्दिताय सगणाय श्वयूथसहिताय मे मह्यमन्नं दीयतामिति ॥ ८ ॥ तदा च स विभुर्धैर्यभक्त्यादियुक्तत्वेन महान् रन्तिदेवः तमादृत्याङ्गीकृत्य बहुमानपुरस्सरं बहुसम्मानपूर्वकं यथा भवति तथा यद्ब्राह्मणाद्यातिथ्यादवशिष्टमन्नं तच्च सर्वं तेभ्यो दत्त्वा श्वभ्यः श्वपतये च नमश्चक्रे ॥ ९ ॥ ततश्च पानीयमात्रं जलमात्रमुच्छेषमुर्वरितं तच्च तदपि एकपरितर्पणमेकपुरुषतृप्तिजननयोग्यं तत् पास्यतः[3] सतः कश्चित्

अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते[1] ॥ विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥ याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः ॥ राजन् मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥ स आदृत्यावशिष्टं यद्बहुमानपुरस्कृतम् ॥ तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ॥ पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥ तस्य तां करुणां[2] वाचं निशम्य विपुलश्रमाम् ॥ कृपया भृशसन्तप्त इदमाहामृतं वचः ॥ ११ ॥ न कामयेऽहं गतिमीश्वरात् परामष्टर्द्धियुक्तामपुनर्भवं वा ॥ आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः ॥ १२ ॥

पुल्कसः अशुभाय नीचाय मे मह्यमपो जलं देहीति वदन्नभ्यगात् ॥ १० ॥ तस्य कृपणा दैन्ययुक्ता विपुलः श्रमः पिपासाजन्यो यतोऽवगम्यते तथाभूता ता वाचं निशम्य श्रुत्वा कृपया भृशमतितरा सन्तप्तो रन्तिदेवः इदं वक्ष्यमाणममृतं स्वमरणादिसंसारदुःखनिवर्तकं वच आह। अनेन तद्वचनमपि श्रुत्वा ये हृदि स्थापयन्ति तेऽप्यमृता भवन्तीति सूचितम् ॥ ११ ॥ परदुःखासहिष्णोस्तस्य वाक्य दर्शयति— न कामये इति द्वयेन। परा सर्वतः उत्कृष्टा अणिमाद्यष्टैश्वर्ययुक्तां गतिं स्थितिं तथा अपुनर्भवं मोक्षं वाऽहमीश्वरान्न कामये नेच्छामि। तर्हि किं कामयसे तत्राह—आर्तिमिति। अखिलदेहभाजा सर्वप्राणिनामन्तःकरणे स्थितः सन् तेषामार्तिं दुखमहं प्रपद्ये प्राप्नुयाम्। येन मत्कर्तृकेन दुःखभोगेन सर्वे एव अदुःखा दुःखरहिता भवन्ति भवेयुरिति कामये ॥ १२ ॥ ॥ ६६ ॥

१ 'महीपति' इति प्रथमाविभक्त्यन्तपाठे इत्यर्थ । २ 'करुणा' इति पाठान्तरम्। ३ पिबतो रन्तिदेवस्य।

ननु परदुःखनिवृत्त्या तव क उपकार इत्याशङ्क्य परदुःखनिवृत्त्यैव मम दुःखनिवृत्तिर्नान्यथेत्याशयेनाह— क्षुत्तृडिति । कृपणस्य दीनस्य जीवितुमिच्छोर्जन्तोर्जीवस्य जीवनहेतोर्जलस्यार्पणेन मे मम क्षुत्तृडादयः सर्वे क्लेशा निवृत्ता भवेयुरिति शेषः ॥ १३ ॥ पिपासया स्वय म्रियमाणोऽप्येवं प्रभाष्य नृपो रन्तिदेवः पुल्कसाय पानीयमदादित्यन्वयः । तत्र हेतुमाह— निसर्गकरुण इति, स्वाभाविककृपावान् । कृपया पिपासया पीड्यमानेन कथं दानं सम्भवति तत्राह— धीर इति, वशीकृतान्तःकरणेन्द्रियादिसङ्घात इत्यर्थः ॥ १४ ॥ ततश्च मायया स्वेच्छया विष्णुना व्यापकेन पुरुषोत्तमेन निर्मिताः अतएव तत्तत्फलमिच्छता प्राणिना फलदाः अतएव त्रिभुवनस्याधीशा नियन्तारो ब्रह्मादयस्तस्य रन्तिदेवस्य धैर्यादिना तुष्टाः सन्तः आत्मानं दर्शयाञ्चक्रुरित्यन्वयः ॥ १५ ॥ स वै रन्तिदेवस्तेभ्यो ब्रह्मादिभ्यो भक्त्या नमस्कृत्य परं केवल भगवति वासुदेवे मनश्चक्रे तद्दर्शनपरो बभूव । न तु किञ्चित् याचित-

क्षुत्तृट् श्रमो[1] गात्रपरिश्रमश्च[2] दैन्यं क्लमः[3] शोकविषादमोहाः ॥ सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणान्मे ॥ १३ ॥ इति प्रभाष्य[4] पानीयं म्रियमाणः पिपासया ॥ पुल्कसायाददाद्धीरो[5] निसर्गकरुणो नृपः ॥ १४ ॥ तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ॥ आत्मानं दर्शयाञ्चक्रुर्मायाविष्णुविनिर्मिताः ॥ १५ ॥ स वै तेभ्यो नमस्कृत्य निस्सङ्गो विगतस्पृहः ॥ वासुदेवे भगवति भक्त्या चक्रे नमः परम् ॥ १६ ॥ ईश्वरालम्बन चित्तं कुर्वतोऽनन्यराधसः ॥ माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत ॥ १७ ॥ तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ॥ अभवन् योगिनः सर्वे नारायणपरायणाः ॥ १८ ॥

वान् । तत्र हेतुमाह— विगतस्पृह इति, वरग्रहणेच्छारहित इत्यर्थः । तत्र हेतुमाह— निस्सङ्ग इति । विषयदोषदर्शनेन तत्रासक्तिरहित इत्यर्थः ॥ १६ ॥ अनन्यराधसः भगवदतिरिक्तफलाकाङ्क्षारहितस्य अत ईश्वरालम्बनं निरन्तरं भगवदेकनिष्ठं चित्त कुर्वतस्तस्य त्रिगुणात्मका माया त्रिगुणात्मकः सर्वोऽप्ययं संसारः प्रत्यलीयत अदृश्या जाता । जीवन्मुक्तो बभूवेत्यर्थः । तत्र दृष्टान्तमाह— स्वप्नवदिति । स्वप्नदृष्टः पदार्थो जाग्रदवस्थापन्नस्य यथाऽदृश्यो भवति तथेत्यर्थः ॥ १७ ॥ तस्य भगवत्परत्वेन कृतार्थत्वे किं वक्तव्यं तत्तेन यः प्रकृष्टः सङ्गः तस्यानुभावेन रन्तिदेवमनुवर्तमानाः सर्वे नारायणपरायणाः भगवद्ध्याननिष्ठा योगिनोऽभवन्नित्यन्वयः ॥ १८ ॥

१ मानस आयास' । २ शारीर आयास' । ३ ग्लानि' । ४ 'सम्भाष्य' इति पाठान्तरम् । ५ 'धीर' इत्यत्र 'वीर.' इति पाठ. ।

एवं मन्युपुत्रस्य नरस्य वंशमुक्त्वा तत्पुत्रस्यैव गर्गस्य वंशमाह– गर्गादिति। गर्गात्सिनिः पुत्रो जातः। शील इति पाठान्तरम्। ततस्तस्मात् गार्ग्यसंज्ञः पुत्रो जातः। क्षत्रात् क्षत्रियादपि तस्माद्ब्रह्मकुलमवर्तत पुत्रादिपरम्परया प्रावर्तत। हिशब्दः प्रसिद्ध्यर्थकः। अथ महावीर्यस्यान्वयमाह– महावीर्यात् दुरितक्षयसञ्ज्ञकः पुत्रो जातः। तस्य तु त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्रा जाताः। तान् विशिनष्टि– येऽत्र क्षत्रियवंशे जाता अपि ब्राह्मणगतिं गताः ब्राह्मणतां प्राप्ताः। अथ ज्येष्ठस्य बृहत्क्षत्रस्य वंशमाह– बृहत्क्षत्रस्य हस्ती पुत्रोऽभूत्, यत येन हस्तिनापुरं निर्मितमिति शेषः ॥ २० ॥ हस्तिनश्च अजमीढादयस्त्रयः पुत्रा जाताः। अजमीढस्य वंश्याः वंशजाः प्रियमेधादयो द्विजाः स्युः ब्राह्मणा बभूवुः ॥ २१ ॥ अजमीढादेवान्यः पुत्रो बृहदिषुरभवत्। तस्य बृहद्धनुः। तस्य सुतो बृहत्कायः। तस्य पुत्रो जयद्रथ आसीत् ॥ २२ ॥ तस्य सुतो विशदः। तस्य सुतः सेनजित्

गर्गात्सिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत ॥ दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः ॥ १९ ॥ पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ॥ बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धास्तिनापुरम् ॥२०॥ अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ॥ अजमीढश्च वंश्याः स्युः प्रियमेधादयो द्विजाः ॥२१॥ अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ॥ बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥२२॥ तत्सुतो विशदस्तस्य सेनजित् समजायत ॥ रुचिराश्वो दृढधनुः[2] काश्यो वत्सश्च तत्सुताः ॥२३॥ रुचिराश्वसुतः प्राज्ञः पृथुसेनस्तदात्मजः ॥ पारस्तत्तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥ स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ स योगी गवि भार्यायां विष्वक्सेनमधात् सुतम् ॥ २५ ॥

समजायत। फेनजिदिति पाठान्तरम्। तस्य रुचिराश्वादयश्चत्वारः सुता जाताः ॥ २३ ॥ रुचिराश्वस्य सुतः प्राज्ञः। तस्यात्मजः पृथुसेनः। तस्य तनयः पारः। तस्य पुत्रः नीपः। तस्य तु पुत्रशतमभूत् ॥ २४ ॥ स नीप एव कृत्वीसञ्ज्ञायां शुकस्य कन्यायां ब्रह्मदत्ताख्यं पुत्रमजीजनत्। हरिवंशादिष्वपि शुकस्य वंश उक्तः—'पराशरकुलोत्पन्नः शुको नाम महायशाः ॥ व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् ॥ स तस्यां पितृकन्याया वीरिण्यां जनयिष्यति ॥ कृष्णं गौरप्रभं शम्भुं तथा भूरिसुतं जयम् ॥ कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च' इति। यद्यपि शुक उत्पत्त्यैव विमुक्तसङ्गो निर्गतस्तथापि विरहातुरं व्यासमनुयान्तं दृष्ट्वा छायाशुकं निर्माय गतवांस्तदभिप्रायेणैवायं गार्हस्थ्यादि-

१ 'गर्गाच्छिनि, गर्गाच्छील' इति च पाठान्तरद्वयम्। २ 'दृढहनु' इति पाठान्तरम्। ३ 'पार' इति पाठान्तरम्।

व्यवहार इति न विरोध इति श्रीधरस्वामिनः । केचित्तु अरणिसम्भूतादन्य एव शुको भागवतवक्ता व्यासपुत्र इत्याहुः । स च ब्रह्मदत्तो योगी गवि भार्यायां विष्वक्सेनाख्य सुतमधात् अजीजनत् ॥ २५ ॥ स च जैगीषव्यस्यर्षेरुपदेशेन योगतन्त्रं योगशास्त्रं चकार । ततो विष्वक्सेनात् उदक्स्वनः । तस्मात् भल्लादो जातः । इमे सर्वे बार्हदीषवाः बृहदिषोर्वंशजाः । दीर्घत्वमार्षम् ॥ २६ ॥ अथ द्विमीढस्य वंशमाह— द्विमीढस्य सुतो यवीनरः । तस्य सुतो धृतिमान् । कृतिमानिति पाठान्तरम् । तस्य सुतो नाम्ना सत्यधृतिः । यस्य पुत्रो दृढनेमिः । स च सुपार्श्वकृत्, तस्य पुत्रः सुपार्श्व इत्यर्थः ॥ २७ ॥ सुपार्श्वात् सुमतिः पुत्रोऽभूत् । तस्य सन्नतिमान् पुत्रः । ततश्च कृतिसञ्ज्ञः जातः । तं विशिनष्टि— यः कृतिर्हिरण्यनाभात् योगं प्राप्य साम्नां षट् संहिताश्च प्राप्य जगौ विभज्याध्यापितवान् । तस्य कृतेर्नीपाख्यः पुत्रः । ततश्च हीति प्रसिद्धः उग्रायुधसञ्ज्ञो जातः । तस्य पुत्रः

जैगीषव्योपदेशेन योगतन्त्रं चकार ह ॥ उदक्स्वनस्ततस्तस्माद्भल्लादो बार्हदीषवाः ॥ २६ ॥ यवीनरो द्विमीढस्य धृतिमांस्तत्सुतः स्मृतः[1] ॥ नाम्ना सत्यधृतिर्यस्य[2] दृढनेमिः सुपार्श्वकृत् ॥ २७ ॥ सुपार्श्वात् सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः[3] ॥ कृतिर्हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् ॥ २८ ॥ संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ॥ तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः ॥ २९ ॥ ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्य नीलः शान्तिः सुतस्ततः ॥ ३० ॥ शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्य पञ्चासन्मुद्गलादयः ॥ ३१ ॥

क्षेम्यः । अथ तस्मात् सुवीरः । सुवीरस्य रिपुञ्जयः ॥ २८ ॥ २९ ॥ तस्य बहुरथो नाम पुत्रो जातः । एवमजमीढद्विमीढयोर्वंशमभिधायाह— पुरुमीढस्त्वप्रजोऽभवदिति । अजमीढस्य वंश्याः प्रियमीढादयः केचिद्ब्राह्मणा बभूवुः । केचित् बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम् । तस्यैवेदं वंशान्तरमाह— नलिन्यामित्यादिना यावदध्यायसमाप्ति । अजमीढस्य नलिन्यां भार्यायां नीलः पुत्रो जातः । तस्य सुतः शान्तिः ॥ ३० ॥ शान्तेः सुतः सुशान्तिः । तस्य पुत्रः पुरुजः । पुरुष इति पाठान्तरम् । ततः अर्कः सुतोऽभवत् । तस्य तनयो भर्म्याश्वः । तस्य मुद्गल एको यवीनरादयश्च[4] चत्वार इत्येवं मुद्गलादयः पञ्च सुता आसन्नित्यन्वयः ॥ ३१ ॥

१ 'कृतिमान्' इति पाठान्तरम् । २ 'शतधृति' इति पाठ. । ३ 'सन्ततिमान्' इति पाठ. । ४ उत्तरश्लोकोक्ता. ।

तेषां पञ्चालसञ्ज्ञकत्वं वक्तुं तन्निमित्तं पितृवचनमाह— भर्म्याश्च इति। भर्म्याश्वः प्राह पुत्रानिति शेषः। तदेवाह— हे पुत्रा मे मम पञ्चाना विषयाणा शब्दस्पर्शरूपरसगन्धाना रक्षणाय सम्पादनाय इमे यूयमलं समर्था इति। हि यस्मादित्याह तस्मात्ते पञ्चालसञ्ज्ञिताः जाताः। तत्र मुद्गलात् मौद्गल्यसञ्ज्ञितं ब्रह्मगोत्रं ब्राह्मणकुलं निर्वृत्तमुत्पन्नम् ॥ ३२ ॥ ३३ ॥ तदेव सङ्क्षेपेण दर्शयति— मिथुनमिति। भार्म्यात् भर्म्याश्वसुतान्मुद्गलात् मिथुनं स्त्रीपुरुषद्वयमभूत्। तत्र पुमान् दिवोदासः कन्या त्वहल्या जाता, यस्या गौतमात् भर्तुः शतानन्दो जातः ॥ ३४ ॥ तस्य शतानन्दस्य पुत्रः सत्यधृतिः, स च धनुर्वेदे शस्त्रास्त्रविद्यायां विशारदोऽतिनिपुणः। तस्य सुतः शरद्वान् जातः। तन्नामनिमित्तं तद्वशं चाह— यस्मादिति। उर्वश्या अप्सरसो दर्शनाद्धेतोः

यवीनरो बृहदश्वः[1] काम्पिल्यः सञ्जयः सुताः ॥ भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥ ३२ ॥ विषयाणामलमिमे इति पञ्चालसञ्ज्ञिताः ॥ मुद्गलाद्ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसञ्ज्ञितम्। । ३३ ॥ मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ॥ अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥ ३४ ॥ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ॥ शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम् ॥ ३५ ॥ तद्दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ॥ कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे रन्तिदेवचरितनिरूपणं नामैकविंशोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

यस्माच्छरद्वतो रेतः शरस्तम्बे न्यपतत्। अतः शरद्वान्नाम बभूवेति भावः। तच्च पतितं रेतः शुभं शुभाचारं मिथुनं स्त्रीपुंसमभूत्। एतच्छास्त्रान्तरे प्रसिद्धमित्याशयेनाह— किलेति ॥ ३५ ॥ मृगया चरन् शन्तनू राजा तन्मिथुनं दृष्ट्वा कृपयाऽगृह्णात् गृहीतवान् गृहीत्वा ररक्षेत्यर्थः। तत्र मिथुने कुमारः कृपः कृपाचार्यः कन्या तु कृपी, सा च द्रोणाचार्यस्य पत्न्यभवत् ॥ ३६ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ एकविंशो गतो रन्तिदेववृत्तनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥

[1] ' बृहदिषु ' इति क्वचित्पाठ ।

यत्र जाता जरासन्धपार्थदुर्योधनादयः ॥ सोऽजमीढस्य वंशोऽत्र द्वाविंशे विनिरूप्यते ॥ १ ॥ ॥ एवं मुद्गलस्य दुहितृसन्तानमभिधायाथ पुत्रसन्तानमाह— मित्रायुश्चेति । मौद्गल्याद्दिवोदासात् मित्रायुः सुतो जातः । तस्य तु हे नृप च्यवनादयश्चत्वारः सुता जाताः । सोमक विशिनष्टि— जन्तुजन्मकृदिति, सोमकस्य सुतो जन्तुरित्यर्थः ॥ १ ॥ न केवलं जन्तुरेव तत्पुत्रः किन्तु जन्तुज्येष्ठं तस्य पुत्रशत जातं तेषां पुत्राणां पृषतो यवीयान् कनिष्ठः । ततः पृषतात् द्रुपदः पुत्रः । तस्य च द्रौपदी कन्या धृष्टद्युम्नादयः सुताश्च जाताः ॥ २ ॥ धृष्टद्युम्नाद्धृष्टकेतुः पुत्रोऽभूत् । इमे भार्म्या भर्म्यवंशप्रसूताः सर्वे पाञ्चालसञ्ज्ञकाः । पुनरजमीढस्य वंशान्तरमाह— य इति । अजमीढस्यान्यो यः सुतः ऋक्षाख्यस्ततः संवरणाख्यः सुतो जातः ॥ ३ ॥ ततश्च तपत्याख्याया

श्रीशुक उवाच ॥ मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ॥ सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥
तस्य पुत्रशतं तेषां यवीयान् पृषतस्ततः ॥ द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥ धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः पाञ्चालका इमे ॥ योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥ तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥ परीक्षित्सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः ॥ ४ ॥ सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथ ततः कृती ॥ वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥ कुशाम्बमत्स्यप्रत्यग्रचेदिपाद्याश्च चेदिपाः ॥ बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः ॥ ६ ॥ जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जह्नुः ॥ अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥

सूर्यकन्याया कुरुक्षेत्रस्य पतिः कुरुर्जातः । तस्य च परीक्षिदादयश्चत्वारः सुता जाताः ॥ ४ ॥ तत्र सुधनुषः सुहोत्रोऽभूत् । अथ तस्मात् च्यवनः ततः कृती । ततः कृतिनः उपरिचरो वसुः पुत्रोऽभूत् । ततो वसोः बृहद्रथो मुखमादिर्येषा ते पुत्रा जज्ञिरे ॥ ५ ॥ तान्दर्शयति— कुशाम्बेति । एते चेदिपाः चेदिदेशाधिपतयः । बृहद्रथात्कुशाग्रोऽभूत् । कुशाग्र इति पाठान्तरम् । तस्य सुत ऋषभः ॥ ६ ॥ तस्य सुतः सत्यहितः । तस्यापत्य पुष्पवान् । तस्य सुतो जह्नुः । तस्य बृहद्रथस्यैको वंशो निरूपितः । अथान्यस्यामपि भार्यायां बृहद्रथात् द्वे शकले एकस्यैव शरीरस्य मध्यतो विभागे यथा द्विधाभूते बभूवतुः ॥ ७ ॥

१ 'मित्रेयुः' इति पाठ क्वचित् । २ 'सुनः' इति पाठान्तरम् । ३ 'कुशाग्र' इति पाठान्तरम् ।

ते च शकले मात्रा बहिरुत्सृष्टे परित्यक्ते तत्र क्रीडन्त्या जरया राक्षस्या जीव जीवेति भाषमाणयाऽभिसन्धिते जरया सान्धितत्वात् स सुतो जरासन्धनामकोऽभवत् ॥ ८ ॥ ततश्च सहदेवोऽभूत् । ततश्च सोमापिः । यस्मात् सोमापेः श्रुतश्रवाः । कुरुपुत्रः परीक्षित्तु अनपत्योऽभूत् । यश्च सुरथो नाम प्रसिद्धः स जाह्नवः कुरुपुत्रस्य जह्नोः पुत्रः ॥ ९ ॥ ततः सुरथात् विदूरथः । तस्मात् सार्वभौमाख्यः । ततस्तस्माज्जयसेनः । तस्य तनयो राधिकः । अतो राधिकात् घुमानभूत् । अतोऽयुतो ह्यभूदिति पाठान्तरम् ॥ १० ॥ ततश्च घुमतः क्रोधनः । तस्माद्देवातिथिः । अमुष्य ऋक्षः । ऋष्य इति पाठान्तरम् । तस्य पुत्रो

ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥ जीवजीवेति क्रीडन्त्या जरासन्धोऽभवत्सुतः ॥ ८ ॥ ततश्च सहदेवोऽभूत्
सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥ ९ ॥ ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् ॥
जयसेनस्तत्तनयो राधिकोऽतो घुमानभूत् ॥ १०[1] ॥ ततश्च क्रोधनस्तस्माद्देवातिथिरमुष्य च ॥ ऋक्षस्[2]तस्य दिलीपो
ऽभूत्प्रतीपस्तस्य चात्मजः ॥ ११ ॥ देवापिः शन्तनुस्तस्य बाह्लीक इति चात्मजाः ॥ पितृराज्यं परित्यज्य देवापिस्तु
वनं गतः ॥ १२ ॥ अभवच्छन्तनू राजा प्राङ्महाभिषसञ्ज्ञितः ॥ यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ॥ समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥ १४ ॥

दिलीपः । तस्य चात्मजः पुत्रः प्रतीपोऽभूत् ॥ ११ ॥ तस्य देवापिः शन्तनुर्बाह्लीकश्चेति त्रयः पुत्रा जाताः । तत्र देवापिस्तु पितृराज्य परित्यज्य वनं गतः । अत इदानीमप्रज इत्याशयः ॥ १२ ॥ अतस्ततः कनिष्ठः शन्तनुरेव राजाऽभवत् । तन्नामनिमित्तमाह— यं यं जीर्णं कराभ्यां स्पृशति स वृद्धो यौवनमेति प्राप्नोति । तथाऽग्र्यां मुख्यां शान्तिमारोग्यजनितं सुखं चाप्नोति, तेनैव कर्मणा शन्तनुसञ्ज्ञकः । शं सुखं तनुते इति शन्तनुरिति निरुक्तिर्ज्ञेया । एवम्प्रभावे हेतुमाह— प्रागिति । प्राक् पूर्वजन्मनि महाभिष इति सञ्ज्ञाऽस्य सञ्जातेति तथाभूतः । तस्य राज्ये यदा द्वादश समा वर्षाणि विभुः पर्जन्यो न ववर्ष तदा शन्तनुस्तत्र निमित्तं ब्राह्मणानपृच्छत् ॥ १३ ॥ १४ ॥

१ 'अतोऽयुतो ह्यभूत्' इति पाठान्तरम् । २ 'ऋष्य' इति पाठान्तरम् ।

ब्राह्मणैस्त्वेवमुक्तः "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ॥ परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः' इति स्मृतेः योऽग्रभुक् भुवमग्रजे भुनक्ति अयं त्वादृशोऽपि परिवेत्तैव भवति, अनेन दोषेणैव वृष्टिर्न भवति, अतएव दोषपरिहारेण वृष्ट्या पुरराष्ट्रयोर्विशेषतो वृद्ध्यर्थमग्रजाय त्वं राज्यं देहि ततो वृष्टिर्भविष्यतीति ॥ १५ ॥ द्विजैर्ब्राह्मणैरेवमुक्तः शन्तनुर्वनं गत्वा ज्येष्ठं भ्रातरं देवापिं च्छन्दयामास राज्ञः प्रजापालनादिः परो धर्मः अतस्त्वं राज्यं स्वीकुर्विति प्रार्थितवान् । ततश्च स देवापिर्वेदवादस्यातिवादान् निन्दावचनानि अब्रवीत् । तत्र हेतुमाह— तन्मन्त्रीति । शन्तनुप्रार्थनातः पूर्वमेव तस्य शन्तनोर्मन्त्रिणा अश्मरावसञ्ज्ञेन देवापिं पाषण्डीकृत्य राज्यानर्हं कर्तुं शन्तनुप्रभृत्यलक्षितमेव ये प्रहिता विप्रास्तैः पाषण्डमताश्रयया गिरा वेदाद्विभ्रंशित इत्यर्थः ॥ १६ ॥ ततश्च तस्य पातित्येन राज्यानर्हत्वे जाते शन्तनोः राज्ये दोषाभावात् तदैव देवो ववर्ष । वै अवधारणे । शन्तनोः राज्या-

शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक् ॥ राज्यं देह्यग्रजायाऽऽशु पुरराष्ट्रविवृद्धये ॥ १५ ॥ एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ॥ तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥ १६ ॥ वेदवादातिवादान् वै तदा देवो ववर्ष ह ॥ देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७ ॥ सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ बाह्लीकात् सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ १८ ॥ शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान् ॥ सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥ वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ १९ ॥ शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः ॥ विचित्रवीर्यश्चावरजो नाम्ना चित्राङ्गदो हतः ॥ २० ॥

नुकूलप्रारब्धवशाद्विवेकिनोऽपि देवापेर्वेदनिन्दनमाश्चर्यमेवेति सूचयन्नाह— हेति । स च योगमास्थाय देवापिः कलापग्राममाश्रितो वर्तते ॥ १७ ॥ कलौ सोमवंशे नष्टे सति पुनः कृतयुगस्यादौ पुनः सोमवंशं स्थापयिष्यति । बाह्लीकात् सोमदत्तः पुत्रोऽभूत् । ततश्च भूरिर्भूरिश्रवाः शलश्चेति त्रयः पुत्राः जज्ञिरे ॥ १८ ॥ शन्तनोस्तु ब्रह्मशापात् मानुषीत्वं प्राप्य स्वयंवरेणागतायां गङ्गायां भार्यायां भीष्मो जातः । तं विशिनष्टि—आत्मवान् निर्जितान्तःकरणादिसङ्घातः । सर्वेषां धर्मविदां श्रेष्ठः । महाभागवतः परमभक्तः । अतएव कविः आत्मज्ञः । वीराणां योधानां यूथस्य सैन्यस्याग्रणीः नायकः । येन युधि युद्धे जामदग्न्यो रामोऽपि स्वबलेन तोषितः ॥ १९ ॥ शन्तनोर्दाशकन्यायामुपरिचरस्य वसोः पतितेन वीर्येण तद्रक्षितवत्या मत्स्या उदराद्दाशैः कैवर्तैरुद्धृतायां तैः पालितायां मत्स्यगन्धियोजनगन्धिसत्यवत्याख्यायां चित्राङ्गदः सुतो जज्ञे । अवरजस्ततः कनीयान् विचित्रवीर्यश्च सुतो जज्ञे । तत्र चित्राङ्गदो नाम्ना तत्समाननामवता चित्राङ्गदाख्येन गन्धर्वेण युद्धे हतः ॥ २० ॥

---

१ अग्रजे ज्येष्ठे भ्रातरि जीवति सतीत्यर्थः । २ अब्रवीदित्यस्य 'वेदवादातिवादान्' इत्यनेनोत्तरश्लोकस्थपदेनान्वयः । ३ स देवापिरेव सोमवंशं स्थापयिष्यतीत्यर्थः ।
४ मत्स्यगन्धा योजनगन्धा सत्यवतीति नामत्रयेण लोके प्रसिद्धायाम् ।

तां दाशकन्यां विशिनष्टि— यस्यामिति । यस्यां सत्यवत्यां शन्तनुपरिग्रहात् पूर्वमेव वेदा गुप्ता विभागपूर्वकप्रवर्तनेन लोके संरक्षिता येन स कृष्णो कृष्णद्वैपायनाख्यो मुनिर्मननशीलो व्यासो जातः । वेदरक्षायां सामर्थ्यं सूचयन्नाह— साक्षाद्धरेः कलाऽवतार इति । यतोऽहं जातः सन्निदं श्रीभागवतमध्यगामधीतवान् इत्यर्थः ॥ २१ ॥ स्वस्मिन् तस्य स्वस्नेहाधिक्यं सूचयन्नाह— हित्वेति । बादरायणो व्यासः पैलादीन् स्वशिष्यान् हित्वा तेभ्योऽनुपदिश्य इदं गुह्यं सर्ववेदेतिहासानां सारभूतं भागवत मह्यं पुत्राय जगावुपदिदेशेत्यन्वयः । सर्वैरपि स्वपुत्रायोत्कृष्टं वस्तु दीयते तेन किमाश्चर्यमिति चेत्तत्राह— भगवानिति । नहीदं पुत्रत्वेऽप्यनधिकारिणे दातुं योग्यं, न च स सर्वज्ञोऽनधिकारिण उपदेष्टुमर्हतीत्याशयः । तर्हि कथं तवाप्यधिकारित्व तत्राह— शान्तायेति, कामक्रोधादिदोषरहितायेत्यर्थः ॥ २२ ॥ विचित्रवीर्यः काशिराजस्य सुते बलाद्भीष्मेण स्वयंवरादुपानीते अम्बिकाम्बालिके उभे

यस्यां पराशरात् साक्षादवतीर्णो हरेः कला ॥ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ २१ ॥ हित्वा स्वशिष्यान्
पैलादीन् भगवान् बादरायणः ॥ मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ॥ २२ ॥ विचित्रवीर्योऽथोवाह काशि-
राजसुते बलात् ॥ स्वयंवरादुपानीते अम्बिकाम्बालिके उभे ॥ २३ ॥ तयोरासक्तहृदयो गृहीतो यक्ष्मणा
मृतः ॥ २४ ॥ क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः ॥ धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ २५ ॥
गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ॥ तत्र दुर्योधनो ज्येष्ठो दुःशीला[1] चापि कन्यका ॥ २६ ॥

उवाह ॥ २३ ॥ तयोरम्बिकाम्बालिकयोरासक्तं हृदय यस्य स विचित्रवीर्यः यक्ष्मणा यक्ष्मरोगेण क्षयेण गृहीतः सन्मृतः ॥ २४ ॥ ततो मात्रा सत्यवत्योक्तः आदिष्टो बादरायणोऽप्रजस्य भ्रातुर्विचित्रवीर्यस्य क्षेत्रे कलत्रत्रये धृतराष्ट्रादिपुत्रत्रयमजीजनत् जनयामास । तत्राम्बिकाया धृतराष्ट्रम्, अम्बालिकाय पाण्डुं, दास्यां[2] विदुरमिति विवेकः। न च शास्त्रविरोधः शङ्कनीयः 'अपतिरपत्यलिप्सुर्देवराद्गुरुप्रयुक्तात् ऋतुमती' इत्यादिवचनात् ॥ २५ ॥ तत्र हे नृप धृतराष्ट्रस्य गान्धार्यां पुत्रशतं दुश्शीलाख्या कन्यका च जज्ञे । तत्र तेषु दुर्योधनो ज्येष्ठ आसीत् ॥ २६ ॥

१ 'दुश्शला' इति पाठान्तरम् । २ इयं दास्यपि विचित्रवीर्येण स्त्रीत्वेन स्वीकृताऽऽसीदिति भाति मूले टीकाया च तथैवोक्तत्वात् ।

अरण्ये मृगरूपिणो रममाणयोर्ऋष्योः शापाद्धेतोर्मैथुने कर्मणि प्रतिरुद्धस्य पाण्डोर्भार्यायां कुन्त्यां धर्मानिलेन्द्रेभ्यो युधिष्ठिरः मुखमादिर्येषां ते युधिष्ठिरभीमार्जुनाः त्रयः पुत्रा जाताः । तान् विशिनष्टि— महारथा इति ॥ २७ ॥ तथाऽन्यस्यामपि पाण्डोर्भार्यायां माद्र्या नासत्यदस्रयोः नासत्यदस्राभ्याम् अश्विनीकुमाराभ्यां नकुलः सहदेवश्चेति द्वौ सुतौ । तेभ्यः पञ्चभ्यो युधिष्ठिरादिभ्यो द्रौपद्यामेकस्या भार्यायां पञ्च पुत्रा अभवन् । तान् विशिनष्टि— ते तव पितरः, पितृव्या इत्यर्थः । यद्वा ते च अपितरः न केषाञ्चिदपि पितरः अनुत्पादितपुत्राः सन्त एव द्रौणिना हता इत्यर्थः ॥ २८ ॥ अथ युधिष्ठिरादीना स्वस्वासाधारणभार्याया जातान् पुत्रानाह— युधिष्ठिरादिति । नाकुलिर्नकुलपुत्र इत्यर्थः ॥ २९ ॥ तथा अपरेऽपि युधिष्ठिरादिभ्योऽन्यासु भार्यासु जाता इत्यर्थः । तान्दर्शयति— युधिष्ठिरात्तु पौरव्या देवको जातः । भीमसेनात् हिडिम्बायां घटोत्कचो जातः । काली चान्या

शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ॥ जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥ नकुलः सहदेवश्च
माद्र्यां नासत्यदस्रयोः ॥ द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्तेपितरोऽभवन् ॥ २८ ॥ युधिष्ठिरात्प्रतिविन्ध्यः श्रुतसेनो
वृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥ सहदेवसुतो राजन् श्रुतकर्मा तथाऽपरे ॥
युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥ भीमसेनाद्धिडिम्बायां काल्यां सर्वगतस्ततः ॥ सहदेवात् सुहोत्रं
तु विजयाऽसूत पार्वती ॥ ३१ ॥ करेणुमत्यां नकुलो वीरमित्रं तथाऽर्जुनः ॥ इरावन्तमुलूप्यां वै सुतायां
बभ्रुवाहनम् ॥ मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥

तत्रैव भार्या तस्यां तत एव सर्वगतो नाम पुत्रोऽभवत् । पार्वती पर्वतस्य पुत्री विजया नाम सहदेवात् सुहोत्रं पुत्रमसूत ॥ ३० ॥ ३१ ॥ करेणुमत्यां भार्यायां तु नकुलः वीरमित्रं पुत्रं जनयामास । निरमित्रामिति पाठान्तरम् । तथाऽर्जुनोऽपि उलूप्यां नागकन्यायामिरावन्तमिरावत्सञ्ज्ञकं मणिपुराख्यदेशविशेषपतेः सुतायां तु बभ्रुवाहनमिति पुत्रद्वयं जनयामास । स च बभ्रुवाहनः तस्यार्जुनस्य पुत्रः सन्नपि पुत्रिकासुतः मातामहसुतः ‘ अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ॥ अस्या यो जायते पुत्रः स मे पुत्रो भवेदिति ’ एवं भाषाबन्धरूपपुत्रिकाधर्मेण कन्याप्रदानात् स मातामहेन गृहीत इत्यर्थः ॥ ३२ ॥

द्रौपद्याम् । २ ‘ निरमित्रम् ’ इति पाठान्तरम् ।

तव तातः पिताऽभिमन्युरर्जुनात्सुभद्रायामजायत । अभिमन्युं विशिनष्टि—सर्वानतिरथान् जयतीति तथाभूतो वीर इति । ततश्च सकाशादुत्तरायां भवान् जातः ॥ ३३ ॥ कुरुषु दुर्योधनादिषु परिक्षीणेषु नष्टेषु सत्सु क्रुद्धाद्द्रौणेर्ब्रह्मास्त्रतेजसा दग्धोऽपि त्वं कृष्णस्य भगवतोऽनुभावेन स जीव एवान्तकात् मृत्योः सकाशान्मोचितोऽसि ॥ ३४ ॥ तव गुणास्तु वक्तुमशक्या इति सूचयन् स्नेहेन सम्बोधयति— हे तातेति । तव तनयास्त्विमे जनमेजयः पूर्वो ज्येष्ठो येषां ते श्रुतसेनो भीमसेनः उग्रसेनश्चेति चत्वारः ॥ ३५ ॥ जनमेजयस्य भाविनं वृत्तान्तं वंशं चाह—जनमेजय इत्यादिभिः सार्धैर्नवभिः श्लोकैः । तक्षकान्निधनं गतं मरणं प्राप्तं त्वां विदित्वा स त्वत्पुत्रो जनमेजयो रुषान्वितः क्रोधयुक्तः सन् सर्पविनाशकयागसम्बन्धिन्यग्नौ सर्पान् होष्यति ॥ ३६ ॥

**तव तातः सुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥ ३३ ॥ परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥ ३४ ॥ तवेमे तनयास्तात जनमेजयपूर्वकाः । श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥ ३५ ॥ जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ सर्पान् वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ॥ ३६ ॥ कावषेयं पुरोधाय तुरं तुरगमेधयाट् ॥ समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७ ॥ तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन् ॥ अस्त्रज्ञानं[1] क्रियाज्ञानं शौनकात्परमेष्यति ॥ ३८ ॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ॥ ३९ ॥**

कावषेयं कावषेयसञ्ज्ञं पुरोधाय पुरोहितं कृत्वा समन्तात्सर्वतः पृथिवीं पृथिव्या स्थितान्नृपान् जित्वाऽध्वरैः अश्वमेधैः यक्ष्यति भगवन्तमाराधयिष्यति । अतएव तुरगमेधयाडिति प्रसिद्धो भविष्यति ॥ ३७ ॥ तस्य जनमेजयस्य पुत्रः शतानीकाख्यो भविता । स च याज्ञवल्क्यात् त्रयीमृगादिवेदत्रयीं पठन् शौनकात् यज्ञादिज्ञानपरं परमात्मज्ञानं च एष्यति प्राप्स्यतीत्यर्थः । अस्त्रज्ञानं च कृपाचार्यादिति द्रष्टव्यम् । याज्ञवल्क्यात्त्रयीमधीत्य कृपात् अस्त्राण्यवाप्येति वैष्णवोक्तेः । अस्त्रज्ञानं कृपाचार्यादिति तु पाठान्तरम् ॥ ३८ ॥ तत्पुत्रः तस्य शतानीकस्य पुत्रः सहस्रानीकः । ततस्तस्माच्च अश्वमेधजः । तस्यापि असीमकृष्णः । तस्य सुतो नेमिचक्रो भविता ॥ ३९ ॥

१ ' अस्त्रज्ञान कृपाचार्यात् ' इति पाठान्तरम् ।

स तु गजाह्वये हस्तिनापुरे नद्या गङ्गया हृते प्लाविते सति ततो निष्क्रम्य कौशाम्ब्या पुर्यां साधु यथा भवति तथा वत्स्यति निवासं करिष्यति। ततो जातः सुतश्चित्ररथ उक्तः। तस्मात् कविरथः सुतो भाव्यः। स्मृत इति पाठान्तरम् ॥ ४० ॥ तस्माच्च वृष्टिमान् भविता। अथानन्तरं तस्य पुत्रः सुषेणः महीपतिर्भविता। तस्य पुत्रः सुनीथः। तस्य पुत्रः नृचक्षुः, यस्मान्नृचक्षुषः सुखीनलः पुत्रो भविता ॥ ४१ ॥ तस्मात् पारिप्लवः सुतः। तस्मान्मेधावी, स च सुनय आत्मजो यस्य तथाभूतः, यद्वा पारिप्लवात् सुनयः तस्यात्मजो मेधावी इत्यर्थः। तस्मान्नृपञ्जयः। तस्माच्च दूर्वः। तस्मात्तिमिर्जनिष्यति ॥ ४२ ॥ तिमेर्बृहद्रथः। तस्माच्छतानीकः, स च सुदासजः बृहद्रथात्सुदासः तस्माच्छतानीको जनिष्यते इत्यर्थः। शतानीकात्

गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ॥ उक्तस्ततश्चित्ररथस्तस्मात् कविरथः सुतः[1] ॥ ४० ॥ तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ॥ ४१ ॥ पारिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ नृपञ्जयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति ॥ ४२ ॥ तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ शतानीकाद्दुर्दमनस्तस्यापत्यमहीनरः[2] ॥ ४३ ॥ दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ॥ ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ ४४ ॥ क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति[3] वै कलौ ॥ अथ मागधराजानो भवितारो वदामि ते ॥ ४५ ॥ भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ॥ ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४६ ॥

दुर्दमनः। तस्यापत्यं तु अहीनरः। बहीनर इति पाठान्तरम् ॥ ४३ ॥ तस्य दण्डपाणिः। तस्य निमिः। तस्य क्षेमको नृपो भविता। वर्णित जनमेजयवंशमुपसंहरति— ब्रह्मेति। ब्रह्मक्षत्रकुलयोः कारणभूतः अतएव देवैर्ऋषिभिश्च सत्कृतोऽयं वंशो मया प्रोक्तः ॥ ४४ ॥ कलौ युगे क्षेमकं राजानं प्राप्य संस्थां प्राप्स्यति समाप्तिं गमिष्यति। वै निश्चये। जरासन्धात् सहदेवः ततः सोमापिः ततः श्रुतश्रवा इत्युक्तम्, तदग्रे भाविवंशकथनं प्रतिजानीते— अथेति ॥ ४५ ॥ सहदेवस्य जरासन्धपुत्रस्य पुत्रो मार्जारिर्भविता। अस्यैव पूर्वोक्तं सोमापिरिति नामान्तरं ज्ञेयम्, यस्य श्रुतश्रवाः। ततः अयुतायुः। तस्यापि निरमित्रः ॥ ४६ ॥

---

१ 'स्मृतः' इति पाठान्तरम्। २ 'तस्यापत्यं महीनर' इति पाठान्तरम्। ३ स वंशः संस्थां प्राप्स्यतीति पूर्वेणैवान्वयः।

अथ तस्य सुतः सुनक्षत्रः। सुनक्षत्रात् बृहत्सेनः। अथ तस्मात् कर्मजित्। ततः श्रुतञ्जयः। तस्य शुचिसञ्ज्ञो विप्रो भविष्यति॥ ४७॥ अथ तस्मात् क्षेमः। तस्मात् सुव्रतः। तस्माद्धर्मनेत्रः। ततश्च श्रुतसञ्ज्ञो भविता। 'शमस्ततः' इति पाठान्तरम्। अथ तस्मात् द्युमत्सेनः। ततः सुमतिः, ततश्च सुबलो जनिता॥ ४८॥ ततः सुनीथः। अथ तस्मात् सत्यजित्। तस्माद्विश्वजित्। यद्यस्मात् रिपुञ्जयः। एते सर्वे बार्हद्रथाः बृहद्रथवंश्याः साहस्रवत्सरं सहस्रसंवत्सरं भाव्याः भाविनो भूपालाः कथिताः। ततः परं भाव्यास्तु द्वादशस्कन्धे वक्ष्यतीति ज्ञेयम्॥ ४९॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा॥ १॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥

सुनक्षत्रः[1]सुनक्षत्राद्बृहत्सेनोऽथ कर्मजित्॥ ततः श्रुतञ्जयाद्विप्रः शुचिस्तस्य भविष्यति॥ ४७॥ क्षेमोऽथ सुव्रतस्तस्माद्[2]धर्मनेत्रः श्रुतस्ततः॥ द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः॥ ४८॥ सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुञ्जयः॥ बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम्॥ ४९॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणेऽजमीढवंशनिरूपणं नाम द्वाविंशोऽध्यायः॥ २२॥ ॥ छ॥ ॥ श्रीशुक उवाच॥ अनोः सभानरश्चक्षुः परोक्षश्च त्रयः सुताः॥ सभानरात् कालनरः सृञ्जयस्तत्सुतस्ततः॥ १॥ जनमेजयस्तस्य पुत्रो महाशीलो महामनाः॥ उशीनरस्तितिक्षुश्च महामनस आत्मजौ॥ २॥ शिबिर्वनशमिर्दक्षश्चत्वारोशीनरात्मजाः॥ वृषदर्भः सुवीरश्च मद्रः कैकेय[3] आत्मजाः॥ ३॥

रचिता नवमे तत्र सोमवंशे तु विवृतः॥ द्वाविंशो ह्यजमीढादेर्वंशस्य विनिरूपकः॥ ३॥ ॥ छ॥ ॥ त्रयोविंशे ययातेस्तु पुत्राणामन्वयः क्रमात्॥ अनोर्द्रुह्योस्तुर्वसोश्च यदोश्चापि निरूप्यते॥ १॥ ॥ तदेवं ययातेः पञ्चमपुत्रस्य पूरोर्वंशं निरूप्य चतुर्थस्यानोर्वंशमाह—अनोरिति। कर्णस्य जगतीपतेरि[4]र्त्यन्तेन। अनोः सभानरादयस्त्रयः पुत्रा जाताः। सभानरात्कालनरः सुतः। तस्य सृञ्जयाख्यः सुतो जातः॥ १॥ ततो जनमेजयः। तस्य पुत्रो महाशीलः। तस्य महामनाः। तस्य महामनसः उशीनरस्तितिक्षुश्चेति द्वावात्मजौ बभूवतुः॥ २॥ तत्रोशीनरस्यात्मजाः शिबिप्रभृतयश्चत्वारः। सन्धिरार्षः। तत्रापि [5]शिबेर्वृषदर्भादयश्चत्वार आत्मजा आसन्॥ ३॥

१ 'तत' सृतञ्जयाद्विप्र' इति क्वचित्पाठ.। २ 'धर्मसूत्र. शमस्तत' इति सुबोधिनीपाठ। ३ 'कैकयः' इति 'केकय' इति च पाठद्वयम्। ४ इतस्त्रयोदशश्लोकपर्यन्तेन ग्रन्थेन। ५ शिबेश्चत्वार आत्मजा आसन्नित्युत्तरत सम्बध।

तितिक्षोश्च वृषद्रथः । उशद्रथ इति पाठान्तरम् । ततश्च हेमः । अथ तस्य सुतपा जातः । सुतपसो बलिः सुतोऽभवत् ॥ ४ ॥ महीक्षितः पृथिवीपतेर्बलेः क्षेत्रे भार्यायां दीर्घतमसः उत्तमसः उतथ्यपुत्रात् सकाशात् अङ्गादिसञ्ज्ञकाः षट् पुत्रा जज्ञिरे । महीक्षित इति बहुवचनं पुत्राणां वा विशेषणम् ॥ ५ ॥ ते च इमान् स्वस्वनाम्ना प्रसिद्धान् प्राच्यकान् पूर्वदिग्वर्तिनः बहुविषयान् देशान् चक्रुः । अत्र अङ्गतः स्वनपानाख्यः सुतो जज्ञे । तस्माद्दिविरथः । ततश्च धर्मरथः सुतो जज्ञे । यस्य धर्मरथस्य चित्ररथो जातः । स चाप्रजाः पुत्ररहितो बभूव ॥ ६ ॥ स एव रोमपाद इति ख्यातः प्रसिद्धः । तस्मै तस्य सखा दशरथः शान्ताख्या स्वकन्या प्रायच्छत् प्रादात् । ता च शान्तामृष्यशृङ्गाख्यो मुनिरुवाह ॥ ७ ॥ कोऽसौ ऋष्यशृङ्ग इत्यपेक्षायामाह— देव इति ।

शिबेश्चत्वार एवासंस्तितिक्षोश्च वृषद्रथः[1] ॥ ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥ अङ्गवङ्गकलिङ्गाद्याः
सुह्मपुण्ड्रान्ध्रसञ्ज्ञिताः ॥ जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥ चक्रुः स्वनाम्ना विषयान् षडिमान्
प्राच्यकांश्च ते ॥ स्वनपानोऽङ्गतो जज्ञे तस्माद्दिविरथस्ततः ॥ सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ॥ ६ ॥
रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥ शान्तां स्वकन्यां प्रायच्छदृष्यशृङ्ग उवाह ताम् ॥ ७ ॥ देवेऽवर्षति यं
रामा आनिन्युर्हरिणीसुतम् ॥ नाट्यसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः ॥ ८ ॥ स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं
मरुत्वतः ॥ प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः ॥ ९ ॥ चतुरङ्गो रोमपादात् पृथुलाक्षस्तु तत्सुतः ॥ बृहद्रथो
बृहत्कर्मा बृहद्भानुश्च तत्सुतः ॥ १० ॥

रोमपादस्य देशे देवे पर्जन्ये अवर्षति सति ऋष्यशृङ्गस्य स्वदेशं प्रत्यागमनमात्रेणैव वृष्टिर्भविष्यतीति ब्राह्मणादिभिर्निश्चये कृते यं हरिणीसुतं हरिण्यां विभाण्डकादृषेरुत्पन्नं रामा गणिका नाट्यादिभिरुपायैरानिन्युः वनात् रोमपादनगरं प्रत्यानीतवत्यः स ऋष्यशृङ्ग इत्यर्थः ॥ ८ ॥ स तु ऋष्यशृङ्गः मरुत्वतः इन्द्रस्य तद्देवताकामिष्टिं निरूप्य कृत्वा अनपत्यस्य राज्ञो रोमपादस्य प्रजामदात् । येन ऋष्यशृङ्गानुष्ठितयागविशेषेण अप्रजो दशरथोऽपि प्रजाः श्रीरामादीन् चतुरः पुत्राँल्लेभे ॥ ९ ॥ रोमपादाच्चतुरङ्गाख्यः सुतो जातः । तस्य सुतः पृथुलाक्षः । बृहद्रथादयस्त्रयस्तस्य पृथुलाक्षस्य सुताः ॥ १० ॥

---

[1] ‘ उशद्रथ ’ इति क्वचित्पाठ ।

तत्राद्यात् बृहद्रथात् बृहन्मना जातः। तस्माज्जातः सुतः जयद्रथ इत्युदाहृतः कथितः। तस्य जयद्रथस्य सम्भूत्यां सम्भूत्याख्यायां भार्यायां विजयः सुतो जातः। ततो धृतिसञ्ज्ञकोऽजायत ॥ ११ ॥ ततो धृतव्रतः। तस्य सत्कर्मा। ततश्च अधिरथो जातः। योऽसावधिरथो गङ्गातटे क्रीडन् मञ्जूषान्तर्गतं पेटिकायां स्थितं कर्णाख्यं शिशुं लब्ध्वा स्वयमनपत्यस्तं सुतमकरोत्। स शिशुः कुत आयात इत्यपेक्षायामाह— कुन्त्या अपविद्धं परित्यक्तमिति। तत्र हेतुमाह— कानीनमिति, कन्यावस्थायां जातमित्यर्थः। तस्य जगतीपतेः भूपालस्य कर्णस्य सुतो वृषसेनः ॥ १२ ॥ १३ ॥ अथ ययातेस्तृतीयस्य सुतस्य वंशमाह— द्रुह्योरिति द्वाभ्याम्। तस्य बभ्रोरात्मजः सेतुर्जातः। स्पष्टमन्यत् ॥ १४ ॥ तस्माद्दुर्मदात् प्रचेता जज्ञे। प्राचेतसं

आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥ विजयस्तस्य सम्भूत्यां ततो धृतिरजायत ॥ ११ ॥ ततो धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः ॥ योऽसौ गङ्गातटे क्रीडन् मञ्जूषाऽन्तर्गतं शिशुम् ॥ १२ ॥ कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत् सुतम् ॥ वृषसेनः सुतस्तस्य कर्णस्य जगतीपतेः ॥ १३ ॥ द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ॥ आरब्धस्तस्य गान्धारस्तस्य धर्मसुतो धृतः ॥ १४ ॥ धृतस्य दुर्मनास्तस्मात् प्रचेताः प्राचेतसं शतम् ॥ म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ १५ ॥ तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ॥ सुभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ॥ १६ ॥ मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ दुष्यन्तः स पुनर्भेजे स्वं वंशं राज्यकामुकः ॥ १७ ॥

प्रचेतसः पुत्रास्तु शतं जाताः। ते च उदीचीं दिशमाश्रिताः सन्तो म्लेच्छानामधिपतयो बभूवुः ॥ १५ ॥ अथ ययातेर्द्वितीयस्य सुतस्य वंशमाह— तुर्वसोरिति द्वयेन। तुर्वसोश्च सुतो वह्निः। वह्नेश्च सुतो भामः। अथ तस्मात् भानुमान्। तस्य सुतः सुभानुः। अस्यापि सुतः करन्धमः, स च उदारधीः महादानी ॥ १६ ॥ तस्य सुतो मरुतः, स चापुत्रः सन् पौरवं पूरोर्वंशे जातं दुष्यन्तमेव पुत्रमन्वभूत्, स्वीकृतवानित्यर्थः। स च दुष्यन्तस्तत्पुत्रः सन्नपि पुनः स्ववंशमेव भेजे न्यवर्तत। तत्र हेतुमाह— राज्यकामुक इति, पूरुवंश्यानामेव नृपासनाधिकारादिति भावः॥ १७ ॥



१ 'भर्गः' इति 'भागः' इति च पाठान्तरम्। २ 'त्रिभानु' इति पाठान्तरम्।

अथ यदोर्वंशं वक्तुं प्रतिजानन् तच्छुश्रूषामुत्पादयति– ययातेरिति द्वयेन । अयं वंशस्तु श्रेष्ठस्य तव श्रवणयोग्य एवेति सूचयन्सम्बोधयति– हे नरर्षभेति । नृणां सर्वपापहरं सर्वपापनिवर्तकं महापुण्यं यथापेक्षितसर्वपुरुषार्थरूपपुण्यजनकं च ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं वर्णयामि, तं शृण्विति शेषः ॥ १८ ॥ पापहरत्वमेव स्पष्टयति– यदोरिति । तत्र हेतुमाह– यत्रेति । यत्र यदुवंशे भगवान् ऐश्वर्यादिगुणपूर्णः परमात्मा नरस्याकृतिर्यस्य तथाभूतः श्रीकृष्णोऽवतीर्णः ॥ १९ ॥ यदोः सहस्रजिदादयः इति नामभिः श्रुताः विश्रुताश्चत्वारः सूनवो जाताः । तत्र चतुर्णां मध्ये प्रथमस्य सहस्रजितः आत्मजः शतजित् ॥ २० ॥ तस्य महाहयादयस्त्रयः सुताः जाताः । तत्र हैहयस्य सुतः धर्मः । ततस्तु नेत्रसञ्ज्ञकः । स च कुन्तेः पिता[1] ॥ २१ ॥ कुन्तेः सोहञ्जिरभूत् । ततो महिष्मान् । ततो भद्रसेनः । स्वार्थे कः । भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ । धनकश्च कृतवीर्यसूः, तस्य पुत्रः कृतवीर्य

ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ॥ वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ॥ १८ ॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ यत्रावतीर्णो भगवान् परमात्मा नराकृतिः ॥ १९ ॥ यदोः सहस्रजित् क्रोष्टा नलो रिपुरिति श्रुताः ॥ चत्वारः सूनवस्तत्र शतजित् प्रथमात्मजः ॥ २० ॥ महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥ धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ॥ २१ ॥ सोहञ्जिरभवत् कुन्तेर्महिष्मान् भद्रसेनकः ॥ दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ॥ २२ ॥ कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ॥ २३ ॥ दत्तात्रेयाद्धरेरंशात् प्राप्तयोगमहागुणः ॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २४ ॥

इत्यर्थः ॥ २२ ॥ न केवलं कृतवीर्य एव तत्पुत्रः किन्तु कृताग्न्यादयोऽपि त्रयो धनकस्यैवात्मजाः । तत्र कृतवीर्यस्य सुतोऽर्जुनः स च सप्तद्वीपानां ईश्वरोऽधिपतिर्बभूव ॥ २३ ॥ अर्जुनं विशिनष्टि– दत्तात्रेयात् प्राप्तो योगः महागुणा अणिमादयश्च येन सः । किं बहुना ? अन्ये पार्थिवाः राजानो यज्ञादिभिः श्रुताविभिश्च कार्तवीर्यस्य गतिं साम्यं न नूनं नैव यास्यन्तीत्यन्वयः । तपः व्रतोपवासादि । योगोऽष्टाङ्गः । श्रुतं शास्त्रश्रवणादि । वीर्यं प्रभावः । ननु यदुकुलस्य तस्य कथं सप्तद्वीपपतित्वं कथं चैवं प्रभावः ययातिना यदोः राज्यात् बहिष्कृतत्वात् इत्याशङ्क्य भगवदिच्छयैवेत्याशयेन दत्तात्रेयं विशिनष्टि– हरेरंशादिति, हरेरवताररूपादित्यर्थः ॥ २४ ॥

---

[1] नेत्रसञ्ज्ञकात् कुन्तिसञ्ज्ञकः पुत्रोऽभवदित्यर्थः ।

स च पञ्चाशीति सहस्राणि समाः वर्षाणि न व्याहतं बलं शरीरेन्द्रियादिसामर्थ्यं यस्य तथाभूतः तथा अनष्टवित्तस्मरणः न नष्टवित्तस्य स्मरणं यस्य कदाचिदपेक्षितवित्तालाभस्मरणरहितः अतएव अक्षय्यं षड्वसु षडिन्द्रियविषयं बुभुजे। एवं दत्तात्रेयरूपेण तत्प्रभावं सम्पाद्यापि परशुरामरूपेण तं हतवानिति भगवतो लीलाया आश्चर्यं सूचयति— हीति ॥ २५॥ तस्यार्जुनस्य पुत्राणां सहस्रेषु मध्ये पञ्चैव मृधे परशुरामेण सह युद्धे उर्वरिता अवशिष्टाः। अन्ये तु मृताः। तान्दर्शयति— जयध्वज इत्यादिना ॥ २६ ॥ यत्तालजङ्घाख्यं क्षत्रं क्षत्रियजातिकं पुत्रशतं तत्तु और्वतेजोपसंहृतं और्वस्य ऋषेः तेजोयुक्तेन सगरेण विनाशितमित्यर्थः ॥ २७ ॥ तेषां तालजङ्घपुत्राणां ज्येष्ठः पुत्रो वीतिहोत्रः। तस्य पुत्रः मधुः, तस्य पुत्रो वृष्णिः स्मृतः कथितः ॥ २८ ॥ न केवलं तस्य मधोर्वृष्णिरेव पुत्र आसीत् किन्तु वृष्णिज्येष्ठो यस्मिन् तथाभूतं पुत्रशतमासीत्। यतो येभ्य इदं कुलं प्रवृत्तम्। एतत्स्पष्टयति— हे राजन्

पञ्चाशीति सहस्राणि ह्यव्याहतबलः समाः ॥ अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २५ ॥ तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे ॥ जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २६ ॥ जयध्वजात्तालजङ्घस्तस्य पुत्रशतं त्वभूत् ॥ क्षत्रं यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम् ॥ २७ ॥ तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥ २८ ॥ तस्य पुत्रशतं त्वासीद्वृष्णिज्येष्ठं यतः कुलम् ॥ माधवा वृष्णयो राजन्यादवाश्चेतिसञ्ज्ञिताः ॥ २९ ॥ यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥ श्वाहिस्ततो रुशेकुर्वै तस्य चित्ररथस्ततः ॥ ३० ॥ शशबिन्दुर्महायोगी महाभोगो महानभूत् ॥ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ ३१ ॥

मधोः प्रसूताः माधवाः, वृष्णितः प्रसूताः वृष्णयः, यदुप्रसूतत्वात् सर्वे एव यादवाश्चेति सञ्ज्ञिताः कथिताः ॥ २९ ॥ एवं यदोर्ज्येष्ठपुत्रस्य वंशमुक्त्वा द्वितीयस्य वंशमनुक्रामति— यदुपुत्रस्येति। यदुपुत्रस्य क्रोष्टोः पुत्रो वृजिनवानभूत्। ततः श्वाहिः। ततो वै रुशेकुः। तस्य पुत्रश्चित्ररथः ॥ ३० ॥ ततश्च शशबिन्दुरभूत्। तं विशिनष्टि— महान् योगोऽस्यास्तीति महायोगी, महान् भोगोऽस्यास्तीति महाभोगः, तथा सत्यसङ्कल्पादिभिर्गुणैश्च महान्। चतुर्दश महारत्नानि तज्जातिश्रेष्ठानि यस्य सः। तानि च मार्कण्डेयपुराणे दर्शितानि— 'गजवाजिरथस्त्रीषुनिधिमाल्याम्बरद्रुमाः ॥ शक्तिपाशमणिच्छत्रविमानानि चतुर्दश' इति। चक्रवर्ती सार्वभौमः। तत्र हेतुः— अपराजितः सर्वविजयी ॥ ३१ ॥

१ अस्यैव स्कन्धस्याष्टमाध्याये सगराख्यानेऽनुसन्धेयमेतत्।

षष्ठी सप्तम्यर्थे । तस्य शशबिन्दोः सम्बन्धिषु दशसु पत्नीसहस्रेषु तासु स सुमहायशाः शशबिन्दुः प्रत्येकं लक्षं लक्षमित्येवं पुत्राणां दशलक्षसहस्राणि जनयामासेत्यन्वयः ॥ ३२ ॥ पृथुश्रवाः पृथुकीर्तिः पृथुयशा इत्यादयः षट् प्रधानाः श्रेष्ठा येषा तेषा मध्ये पृथुश्रवसः आत्मजो धर्म्यो नाम। तस्य सुत उशनाः, स च हयमेधशतस्य याट् यष्टा ॥ ३३ ॥ तस्य सुतो रुचकः। तस्य पञ्चात्मजा आसन् जाताः । तान् शृणु । तानेव कथयति- पुरुजिदित्यादिना ॥ ३४ ॥ तत्र शैब्यापतिर्ज्यामघस्त्वप्रजः अपुत्रोऽपि सन् भार्याभयात् अन्या भार्या नाविन्दत् न लेभे न स्वीकृतवान्। कदाचिच्छत्रून् विजित्य तेषां भवनात् काञ्चित् भोज्यां— उपभोगार्थमिति यावत— कन्यामहारषीत् आनिन्ये ॥ ३५ ॥ रथे स्थितां ता कन्या निरीक्ष्य अमर्षिता

तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥ दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ ३२॥ तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥ धर्म्यो नामोशना तस्य हयमेधशतस्य याट् ॥ ३३ ॥ तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ॥ पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसञ्ज्ञिताः ॥ ३४ ॥ ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥ नाविन्दच्छत्रुभवनाद्भोज्यां कन्यामहारषीत् ॥ ३५ ॥ रथस्थां तां निरीक्ष्याऽऽह शैब्या पतिममर्षिता ॥ केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ ३६ ॥ स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत् ॥ अहं वन्ध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ॥ ३७ ॥ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥ अन्वमोदन्त तद्विश्वेदेवाः पितर एव च ॥ ३८ ॥

रथमारोप्य तदानयनमसहमाना सती शैब्या पतिमाह । तद्वचनमाह— हे कुहक वञ्चक मत्स्थानं मदुपवेशनयोग्यं स्थानमारोपितेयं केति ॥ ३६ ॥ ततश्च तस्या भयात् ज्यामघेन तव स्नुषेयमानीतेत्यभिहिते उक्ते सति स्मयन्ती हसन्ती सती शैब्या पतिं प्रत्यब्रवीत्। तदाह— अहं वन्ध्या असपत्नी च अविद्यमाना सपत्नी यस्यास्तथाभूता च अतो मे मम स्नुषा कथं युज्यते उपपद्यते इति ॥ ३७ ॥ ततो भीतः सन् ज्यामघस्तामाह— हे राज्ञि य पुत्रं त्वं जनयिष्यसि तस्य भार्यार्थमियमुपयुज्यते उपयुक्ता भविष्यति । तथा तव स्नुषा भविष्यतीति वदतो भार्याभयेन प्रकम्पमानस्य स्विन्नसर्वाङ्गस्य राज्ञः प्राणसङ्कटमालोक्य अनुकम्पितास्तेन पूर्वं बहुकालमाराधिता देवाः पितरश्च तदेव जनयिष्यसीति वचनमेव अन्वमोदन्त, तथास्त्वित्युक्तवन्त इत्यन्वयः ॥ ३८ ॥

ततश्च देवादिप्रसादेन निवृत्तरजस्काऽपि शैब्या गर्भमधात् । प्रसवकाले सम्प्राप्ते शुभलक्षणयुक्तं कुमारं सुषुवे । स च कुमारो विदर्भ इति प्रोक्तः । स्नुषा शैब्ययाऽपि स्नुषातयाऽङ्गीकृतां स्नुषां सतीं विद्यमानां तामेव कन्यकामुपयेमे । ज्यामघस्य स्त्रैण्यं तु पाराशरादिभिरप्युक्तम्—'भार्यावश्यास्तु ये केचिद्भविष्यन्त्यथवा मृताः ॥ तेषां तु ज्यामघः श्रेष्ठः शैब्यापतिरभून्नृपः' इति ॥ ३९ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ त्रयोविंशो गतो वृत्तिं यदुवंशनिरूपकः ॥ २३ ॥ ॥ छ ॥ ॥ चतुर्विंशे यदोर्वंशे विदर्भादिक्रमेण तु ॥ देवकीवसुदेवाभ्यां कृष्णजन्म निरूप्यते ॥ १ ॥

(1)

शैब्या गर्भमधात् काले कुमारं सुषुवे शुभम् ॥ स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सोमवंशनिरूपणप्रकरणे यदुवंशनिरूपणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥

श्रीशुक उवाच ॥ तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ ॥ तृतीयं रोमपादं च विदर्भकुलनन्दनम् ॥ १ ॥ रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ॥ कुशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृपाः ॥ २ ॥ क्रथस्य कुन्तिः पुत्रोऽभूद्वृष्णिस्तस्याथ निर्वृतिः ॥ ततो दशार्हो नाम्नाऽभूत्तस्य व्योमः सुतस्ततः ॥ ३ ॥ जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ॥ ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥ करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः ॥ देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥

विदर्भवंशमाह— तस्यामिति । तस्यां पूर्वोक्ताया विवाहितायां विदर्भो नाम्ना कुशादीन् त्रीन् पुत्रान् अजनयत् ॥ १ ॥ रोमपादस्य सुतो बभ्रुः तस्माद्बभ्रोस्तु कृतिरजायत । तस्य सुतः कुशिकः । तस्माच्चेदिः । ततश्च चैद्यादयो दमघोषादयो नृपा जज्ञिरे ॥ २ ॥ क्रथस्य तु पुत्रः कुन्तिरभूत् । तस्य पुत्रो वृष्णिरभूत् । अथ तस्मान्निर्वृतिः । ततश्च नाम्ना दशार्होऽभूत् । तस्य सुतस्तु व्योमः ॥ ३ ॥ ततश्च जीमूतः । तस्य विकृतिः, यस्य सुतो भीमरथः । ततो नवरथः । ततश्च दशरथः पुत्रो जातः ॥ ४ ॥ ततश्च शकुनिः । तस्माच्छकुनेः करम्भिः पुत्रोऽभूत् । तस्यात्मजो देवरातः । तस्य देवक्षत्रः । तस्य मधुः । ततः कुरुवशः । कुरुवशात् अनुसञ्ज्ञिकः ॥ ५ ॥

१ 'उशिकः' इति क्वचित्पाठ । २ 'नृप' इति क्वचित्सम्बुद्ध्यन्त पाठः । ३ 'धृष्टि' इति क्वचित्पाठः ।

अनोस्तु पुत्रः पुरुहोत्रः । तस्यायुसञ्ज्ञकः । ततश्च सात्वताख्यः । सात्वतस्य तु भजमानादयः सप्त सुता बभूवुः । बहवः क्षत्रिया जाताः परं श्रेष्ठत्वं त्वय्येव नान्यत्रेति सूचयन्सम्बोधयति– मारिषेति, हे श्रेष्ठेत्यर्थः ॥ ६ ॥ प्रभो हे राजन् भजमानस्यैकस्या भार्याया निम्लोचादयस्त्रयः अन्यस्यां च शताजिदादयस्त्रय आत्मजाः औरसाः सुता जाताः ॥ ७ ॥ देवावृधस्य सुतो बभ्रुः । तयोर्देवावृधबभ्र्वोर्माहात्म्यसूचकौ अमू श्लोकौ पठन्ति, वृद्धा इति शेषः ॥ ८ ॥ तौ श्लोकौ दर्शयति– यथेति । यथा यादृशगुणविशिष्टौ देवावृधबभ्रू दूरात् शृणुमः श्रुतवन्तस्तथैव तादृशावेवान्तिकात् समीपेऽपि सम्पश्यामः । कीदृशावित्यपेक्षायामाह– मनुष्याणां मध्ये बभ्रुः श्रेष्ठः, देवावृधस्तु देवैः समः तुल्यः ॥ ९ ॥ श्रैष्ठ्यमेव दर्शयति– पुरुषा इति ।

पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ॥ भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥ सात्वतस्य सुताः सप्त महाभोजश्च मारिष ॥ ६ ॥ भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव[1] च ॥ एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ॥ शताजिच्च[2] सहस्राजिदयुताजिदिति प्रभो ॥ ७ ॥ बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू ॥ ८ ॥ यथैव शृणुमो दूरात् सम्पश्यामस्तथाऽन्तिकात् ॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ ९ ॥ पुरुषाः पञ्चषष्टिश्च षट् सहस्राणि चाष्ट च ॥ येऽमृतत्वमनु प्राप्ता बभ्रोर्देवावृधादपि ॥ १० ॥ महाभोजोऽतिधर्मात्मा[3] भोजा आसंस्तदन्वये ॥ वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप ॥ ११ ॥ शिनिस्तस्यानमित्रश्च निम्लोऽभूदनमित्रतः[4] ॥ सत्राजितः प्रसेनश्च निम्लस्याप्यासतुः सुतौ ॥ १२ ॥ अनमित्रसुतो योऽन्यः शिनिस्तस्याथ सत्यकः ॥ युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ॥ १३ ॥

बभ्रोर्देवावृधादप्यनु पश्चाद्ये तद्वंशजाः पञ्चषष्ट्यधिकचतुर्दशसहस्रसङ्ख्याकास्ते सर्वे तयोः प्रभावादेव अमृतत्वं मुक्तिं प्राप्ता इत्यन्वयः ॥ १० ॥ महाभोजस्त्वतिधर्मात्मा । तस्यान्वये वंशे भोजाख्या नृपा आसन् अभवन् । हे परन्तप वृष्णेस्तु पुत्रः सुमित्रो युधाजिच्चाभूत् ॥ ११ ॥ तस्य युधाजितः शिनिरनमित्रश्चेति द्वौ पुत्रौ जातौ । तत्र अनमित्रात् निम्लोऽभूत् । निम्लस्य तु सत्राजितः प्रसेनश्चेति द्वौ पुत्रौ आसतुः ॥ १२ ॥ तथाऽन्यस्यामपि भार्यायामनमित्रस्यैव योऽन्यः सुतः शिनिः तस्याथ सत्यकः पुत्रः । सात्यकिः सत्यकपुत्रस्तु युयुधानः । तस्य जयः । ततश्च कुणिः ॥ १३ ॥

---

१ 'धृष्टिः' इति पाठः क्वचिद्दृश्यते । २ 'शतजित्' इति पुस्तकद्वये पाठः । ३ 'महाभोजोऽपि धर्मात्मा' इति पाठः श्रीधरस्वामिसम्मतः । ४ 'निम्नः' इति क्वचित्पाठः ।

युगन्धरः कुणेः पुत्रः । अनमित्रस्यैवापरः पुत्रो वृष्णिनामकः । ततः श्वफल्कः चित्ररथश्चेति द्वौ पुत्रौ । ततः श्वफल्कात् गान्दिन्यां भार्यायां तु- ॥ १४ ॥ अक्रूरः प्रमुख आदिर्येषां ते इत्यतद्गुणसंविज्ञानो बहुव्रीहिः अतोऽक्रूरातिरिक्ता द्वादश पुत्राः विश्रुताः प्रख्याता आसन् । तान् दर्शयति— आसङ्ग इति ॥ १५ ॥ १६ ॥ तेषामासङ्गादीनां स्वसा भगिनी सुचाराख्या । तत्र देववानुपदेवश्चेति द्वावप्यक्रूरस्य सुतौ । तथा चित्ररथस्य आत्मजाः पृथुरेको विदूरथाद्या अन्ये च बभूवुः । पृथुर्विपृथुधामाद्या इति पाठे तु आद्यशब्देन विदूरथोऽप्युक्तो ज्ञेयः, शूरो विदूरथादासीदिति वक्ष्यमाणत्वात् । एते वृष्णिनन्दना वृष्णिवंशजा बहवो बभूवुः । कुकुरादयश्चत्वारोऽन्धकस्य सात्वतपुत्रस्य पुत्रा इति तु कुकुरभजमानशुचिकम्बलबर्हिषास्तथाऽन्धकस्य पुत्रा इति

युगन्धरोऽनमित्रस्य वृष्णिः पुत्रोऽपरस्ततः ॥ श्वफल्कश्चित्ररथश्च गान्दिन्यां च श्वफल्कतः ॥ १४ ॥ अक्रूरप्रमुखा आसन्
पुत्रा द्वादश विश्रुताः ॥ आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ॥ १५ ॥ धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥
शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश ॥ १६ ॥ तेषां स्वसा सुचाराख्या[1] द्वावक्रूरसुतावपि ॥ देववानुपदेवश्च तथा
चित्ररथात्मजाः ॥ १७ ॥ पृथुर्विदूरथाद्याश्च[2] बहवो वृष्णिनन्दनाः ॥ कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ॥ १८ ॥
कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥ कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः ॥ १९ ॥ अन्धको दुन्दुभिस्तस्य
दरिद्योतः पुनर्वसुः ॥ तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ ॥ २० ॥ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥
देववानुपदेवश्च सुदेवो देववर्धनः ॥ २१ ॥ तेषां स्वसारः सप्तासन् धृतदेवादयो नृप ॥ शान्तिदेवोपदेवा च श्रीदेवा
देवरक्षिता ॥ २२ ॥

पराशरवचनाज्ज्ञेयम् ॥ १७ ॥ १८ ॥ कुकुरस्य सुतो वह्निः । ततो विलोमाख्यस्तनयो जातः । तस्य कपोतरोमा । तस्यानुः, यस्यानोः तुम्बुरुः सखाऽभूत् ॥ १९ ॥ अनोश्चान्धकोऽन्धकात् दुन्दुभिरित्यपि पराशरवचनाज्ज्ञेयम् । तस्य दुन्दुभेर्दरिद्योतः । तस्य पुनर्वसुः । तस्याहुकः पुत्रः आहुकी कन्या च । आहुकस्य आत्मजौ द्वौ देवकश्चोग्रसेनश्चेति । देववदादयश्चत्वारो देवकस्यात्मजाः ॥ २० ॥ २१ ॥ तेषा देववदादीनां स्वसारो भगिन्यो धृतदेवादयः सप्तासन् । धृतदेवातोऽन्याः षट् दर्शयति— शान्तिदेवेति । नृपेति सम्बोधनम् ॥ २२ ॥

१ 'सुचीराख्या' इति कचित्पाठ । २ 'पृथुर्विपृथुधामाद्या' इति पाठान्तरम् ।

ताः सप्तापि वसुदेव उवाह ॥ २३ ॥ कंसादयो नव उग्रसेनस्य पुत्राः ॥ २४ ॥ कंसाप्रभृतयश्च पञ्च उग्रसेनस्य दुहितरः, ताश्च वसुदेवस्यानुजाना देवभागादीना स्त्रियो भार्याः ॥ २५ ॥ चित्ररथात्मजात् विदूरथात् शूरो जज्ञे । ततो भजमानः सुतः आसीत् । ततः शिनिः । ततश्च स्वयम्भोजः । तत्सुतो हृदीको मतः ॥ २६ ॥ देवबाह्वादयस्त्रयस्तस्य हृदीकस्य सुताः । देवमीढोऽपि हृदीकस्यैव सुतः, यथाह पराशरः—'तस्यापि कृतवर्मा शतधनुदेवमीढाद्याः पुत्रा बभूवुः, देवमीढस्य शूरः, तस्यापि मारिषा नाम पत्न्यभवत्' इति । तथाच देवमीढस्य यः शूरो नाम पुत्रस्तस्यापि मारिषानाम पत्न्य-

सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥ कंसः सुनामा न्यग्रोधः कङ्कः शङ्कः सुहूस्तथा ॥ राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥ कंसा कंसवती कङ्का शूरभू राष्ट्रपालिका ॥ उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥ शूरो विदूरथादासीद्भजमानः सुतस्ततः ॥ शिनिस्तस्मात् स्वयम्भोजो हृदीकस्तत्सुतो मतः ॥ २६ ॥ देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ॥ देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥ तस्या स जनयामास दश पुत्रानकल्मषान् ॥ वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥ सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम् ॥ देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥ वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ॥ पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३० ॥ राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः ॥ कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥

भूत् ॥ २७ ॥ स तस्या वसुदेवादीन् दश पुत्रानजीजनत् । तत्र भगवदवतारयोग्यत्वं सूचयंस्तान् विशिनष्टि—अकल्मषानिति, अनृतादिदोषरहितानित्यर्थः ॥ २८ ॥ तत्र यस्य जन्मनि प्रादुर्भावकाले देवानां दुन्दुभयः आनकाश्च नेदुः दध्वनुस्तं वसुदेवमानकदुन्दुभिं वदन्ति इत्यन्वयः। दुन्दुभ्यादिनादे हेतुमाह— हरेः अवतरिष्यमाणस्य श्रीकृष्णस्यावतारयोग्यं स्थानमिति । पृथाप्रभृतयः शूरस्य पञ्च कन्यकाः तेषां वसुदेवादीनां भगिन्य आसन् । तत्र पृथां तस्याः पिता शूरः कुन्तिनामकाय अदात् । अतएव पृथायाः कुन्तीति नामान्तरम् । हीति प्रसिद्धौ। दाने हेतुद्वयमाह— सख्युरिति अपुत्रस्येति च ॥ २९ ॥ ३० ॥ ३१ ॥

तस्याः कन्यावस्थायामेव कर्णोत्पत्तिप्रकारमाह— सेति सार्द्धैश्चतुर्भिः । कदाचित्स्वगृहमागतं दुर्वाससं सा पृथा परिचर्यादिना परितोष्य तस्मात्प्रतोषितात् देवहूती देवा आहूयन्तेऽनयेति तथा ता विद्यामाप प्राप्तवती । तस्या विद्याया वीर्यस्य सामर्थ्यस्य परीक्षार्थं सा स्नानादिना शुचिः सती रविमाजुहाव ॥ ३२ ॥ तदैवोपागतं देवं रविं वीक्ष्य विस्मितं मानसं यस्याः सोवाचेति शेषः । तदुक्तिमाह— प्रत्ययार्थं यथार्थत्वपरीक्षार्थं मे मया विद्या प्रयुक्ता, न त्वया किञ्चित् कार्यमस्ति, अतस्त्वं याहि, वृथाह्वानापराध मे मम क्षमस्वेति । सात्विकत्वाद्देवस्य तव क्षमैव युक्तेति सूचयन्ती सम्बोधयति— देवेति ॥ ३३ ॥ एवमुक्तो रविराह— हे देवि मम दर्शनममोघं फलाविनाभूतं अतोऽहं त्वय्यात्मजं पुत्रमाधास्ये उत्पादयिष्यामि । नन्वेवं चेत्तर्हि कन्यात्वान्मम योनिर्विदीर्येतेत्याशङ्क्याह— हे सुमध्यमे यथा ते तव योनिर्न दुष्येत तथाऽहं कर्ता करिष्यामि ॥ ३४ ॥ इत्युक्त्वा स सूर्यः तस्यां गर्भमाधाय दिवं स्वर्ग

**साऽऽप दुर्वाससो विद्यां देवहूतीं प्रतोषितात् ॥ तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः ॥ ३२ ॥ तदैवोपागतं देवं वीक्ष्य विस्मितमानसा ॥ प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ॥ ३३ ॥ अमोघं दर्शनं देवि आधास्ये त्वयि चाऽऽत्मजम् ॥ योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥ इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ॥ सद्यः कुमारः सञ्जज्ञे द्वितीय इव भास्करः ॥ ३५ ॥ तं साऽत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ॥ प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३६ ॥ श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ॥ यस्यामभूद्दन्तवक्त्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥**

गतः । ततः द्वितीयो भास्कर इवातितेजस्वी कुमारः सद्यः तत्क्षण एव सम्यक् कष्टं विनैव जज्ञे जातः ॥ ३५ ॥ सा पृथा तं बालं नदीतोये अत्यजत् चिक्षेप । पेटिकाया संस्थाप्येति शेषः, पूर्वं तथोक्तत्वात् । ननु पुत्रप्रक्षेपण कथं घटते तत्राह—कृच्छ्रादिति, कष्टादित्यर्थः । कष्टेनापि प्रक्षेपे हेतुमाह— लोकस्येति, लोकाज्जनापवादात् बिभ्यती सती । ता च पृथा सत्यविक्रमः सत्ये यथार्थे धर्मे एव विक्रमः प्रयत्नो यस्य स तव प्रपितामहः पूर्वजः पाण्डुरुवाह उपयेमे । सत्यविक्रम इत्यनेन विशेषणेन कुन्तेः कन्यावस्थायां पुत्रोत्पत्तावपि निर्दोषत्वं सूचितम् ॥ ३६ ॥ श्रुतदेवां तु कारूषः करूषदेशाधिपतिर्वृद्धशर्मा समग्रहीत् उपयेमे । यस्यां तु यः पूर्वमृषिभिः शप्तो भगवद्द्वारपालो विजयाख्यो दितेः सुतो हिरण्याक्षोऽभूत्स इदानीं दन्तवक्त्रोऽभूदित्यर्थः ॥ ३७ ॥ 

१ 'शुचिम्' इति क्वचित्पाठ. । तत्र रवेर्विशेषणम् । २ त्रयोविंशेऽध्याये द्वादशश्लोके ।

कैकेयः कैकेयदेशाधिपतिः धृष्टकेतुस्तु श्रुतकीर्तिमविन्दत उपयेमे । तस्यां तु कैकयाः सन्तर्दनादयः पञ्च सुता आसन् ॥ ३८ ॥ राजाधिदेव्यां तु जयसेनः आवन्त्यौ अवन्तिराजानौ विन्दानुविन्दौ द्वौ पुत्रौ अजनिष्ट जनयामास । ह प्रसिद्धौ। चेदिदेशाधिपतिर्दमघोषश्च श्रुतश्रवसमग्रहीत् उपयेमे ॥ ३९ ॥ तस्याः सुतो शिशुपालो जातः । तस्य शिशुपालस्य उत्पत्तिप्रकारस्तु सप्तमस्कन्धे एव उक्तः । तदेवं वसुदेवस्य भगिनीना पतीन् पुत्रांश्चोक्त्वा तद्भ्रातॄणा नवानां पत्नीः पुत्रांश्चाह– देवभागस्येति । नवभिः श्लोकार्द्धैः । देवभागस्य कंसायां भार्यायां चित्रकेतुः बृहद्बलश्चेति द्वौ पुत्रौ जातौ ॥ ४० ॥ ४१ ॥ वृषादीन् जनयामासेति शेषः । श्यामकस्तु शूरभूम्या हरिकेशहिरण्याक्षौ द्वौ जनयामास ॥ ४२ ॥ तथा वत्सको मित्रकेश्या

कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ॥ सन्तर्दनादयस्तस्यां पञ्चाऽऽसन् कैकयाः सुताः ॥ ३८ ॥ राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्ट ह ॥ दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥ शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः ॥ देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥ कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ॥ कंकायामानकाज्जातः सत्यजित्पुरुजित्तथा ॥ ४१ ॥ सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ॥ ४२ ॥ मिश्रकेश्यामप्सरसि वृकादीन् वत्सकस्तथा ॥ तक्षपुष्करशालादीन् दुर्वाक्ष्यां वृक आदधे ॥ ४३ ॥ सुमित्राऽर्जुनपालादीन् शमीकात्तु सुदामिनी ॥ कङ्कश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥ पौरवी रोहिणी भद्रा मदिरा रोचना इला ॥ देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥ ४५ ॥ बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ॥ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥ ४६ ॥ सुभद्रो भद्रवाहश्च दुर्मदो भद्र एव च ॥ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥ ४७ ॥

अप्सरसि वृकादीन् पुत्रान् जनयामास । वृकस्तु दुर्वाक्ष्यां भार्यायां तक्षपुष्करशालादीन् आदधे उत्पादयामास ॥ ४३ ॥ शमीकात्तु तद्भार्या सुदामिनी सुमित्रादीन् उत्पादयामास । कंकश्च कर्णिकाया भार्यायां ऋतधामजयौ द्वावपि पुत्रौ जनयामास ॥ ४४ ॥ अथ वसुदेवस्य पत्नीः पुत्रांश्चाह– पौरवीत्येकादशभिः । देवकीप्रमुखा प्रधाना यासां ताः धृतदेवादयः पौरव्यादयश्च आनकदुन्दुभेर्वसुदेवस्य पत्न्य आसन्नित्यन्वयः ॥ ४५ ॥ तत्र वसुदेवो रोहिण्यां तु भार्यायां बलादीन् कृतादींश्च उदपादयत् जनयामास ॥ ४६ ॥ भूत आदिर्येषां ते हि प्रसिद्धा एते सुभद्रादयो द्वादश पौरव्यास्तनया अभवन् । आद्यशब्दादुक्तसङ्ख्यापूर्तिर्ज्ञेया ॥ ४७ ॥

---

१ प्रथमाध्याये । २ अपिशब्दोऽवधारणे ।

तथा नन्दादयो मदिराया आत्मजा आसन् । कौशल्या वसुदेवभार्या तु केशिनमेकमेव कुलनन्दनं पुत्रमसूत ॥ ४८ ॥ तथा रोचनाया तु हस्तहेमाङ्गदादयः अतो वसुदेवात् सुता जाताः । इलायां तु भार्यायां वसुदेवः उरुवल्कादीन् यदुमुख्यांश्च पुत्रान् अजीजनत् ॥ ४९ ॥ धृतदेवायां भार्यायां आनकदुन्दुभेर्विपृष्ठाख्य एक एव पुत्रो जातः । शान्तिदेवायास्तद्भार्यायास्तु हे राजन् श्रमप्रतिश्रुतादयः पुत्रा जाताः।प्रशमप्राश्रितादय इति पाठान्तरम् ॥ ५० ॥ कल्पवर्षाद्या राजानस्तु उपदेवाया दश सुताः । श्रीदेवायास्तु वस्वाद्याः षट् सुताः जाताः ॥ ५१ ॥ देवरक्षितया तु भार्यया वसुदेवस्य गदादयो नव लब्धाः प्रसूता इत्यर्थः । तथा वसुदेवः सहदेवया साधनभूतया भार्यया पुरुविश्रुतमुख्यांस्त्वष्टौ सुतानाददे अजीजनदित्यन्वयः । तत्र

नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ॥ कौशल्या केशिनं त्वेकमसूत कुलनन्दनम् ॥ ४८ ॥ रोचनायामतो जाता हस्तहेमाङ्गदादयः ॥ इलायामुरुवल्कादीन् यदुमुख्यानजीजनत् ॥ ४९ ॥ विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः ॥ शान्तिदेवात्मजा राजन् श्रमप्रतिश्रुतादयः[1] ॥ ५० ॥ राजानः कल्पवर्षाद्या उपदेवासुता दश ॥ वसुहंससुवंशाद्याः श्रीदेवायास्तु षट् सुताः ॥५१॥ देवरक्षितया लब्धा नव चात्र गदादयः ॥ वसुदेवः सुतानष्टावाददे सहदेवया ॥ ५२ ॥ पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ॥ वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् ॥ ५३ ॥ कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ॥ ऋजुं सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम् ॥ ५४ ॥ अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ॥ सुभद्रा च महाभागा तव राजन् पितामही ॥ ५५ ॥

दृष्टान्तमाह— साक्षादिति । साक्षाद्धर्मो यथाऽष्टौ वसून् द्रोणादीनजीजनत् तद्वदित्यर्थः । देवक्यामपि वसुदेवः कीर्तिमदादीन् अष्टपुत्रान् अजीजनत् इति द्वयोरन्वयः ॥ ५२ ॥ ५३ ॥ तत्र षट् पुत्रास्तु जीवविशेषाः सप्तमस्तु अहीनामीश्वरः सङ्कर्षणो भगवान् शेषः ॥ ५४ ॥ तयोर्देवकीवसुदेवयोः अष्टमः पुत्रस्तु स्वयं साक्षात् हरिरेवासीत् श्रीकृष्णरूपेणावतीर्णः । अस्य सर्वत्र प्रसिद्धिं द्योतयति— किलेति । वसुदेवस्य भगवत्पितृत्वयोग्यत्वं सूचयन्नाह— उदारधीरिति । वक्ष्यमाणपूर्वजन्मानुष्ठिततपआदिना विषयेष्वनासक्तबुद्धिरित्यर्थः । सुभद्राख्यैका कन्या च तयोर्जज्ञे । सा हे राजन् तव पितामही । तस्या भाग्यं तु किं वक्तव्यं यस्याः परमभागवतो भवान् पौत्रो जात इत्याशयेनाह— महाभागेति ॥ ५५ ॥

१ 'प्रशमप्रश्रितादयः' इति पाठान्तरम् । तत्राक्षराधिक्यमार्षम् ।

ननु भगवतोऽवतारस्य कः कालः किं वा प्रयोजनमित्यपेक्षायामाह— यदेति । हीत्यवधारणे । यदा यदैव यस्मिन् यस्मिन्नेव काले धर्मस्य क्षयो विनाशः पाप्मनो वृद्धिश्च भवति तदा तु भगवान् दुष्कृतां विनाशाय साधूनां संरक्षणेन धर्मसंस्थापनायात्मानं सृजते अवतारयतीत्यन्वयः । तत्र हेतुमाह— हरिरिति, यतः स्वाश्रितानां साधूनां दुःखहरणशील इत्यर्थः । [1] तत्र सामर्थ्यमाह— ईश इति, कर्तुमकर्तुमन्यथाकर्तुं समर्थ इत्यर्थः । तत्र हेतुः— भगवानिति, अवतारावस्थायामप्यैश्वर्यादिगुणगणपूर्ण इत्यर्थः ॥ ५६ ॥ ननु जीवानां तु जन्मकर्मणोः प्राचीनपुण्यपापादिर्हेतुरस्ति स एव यदि भगवतोऽपि जन्मकर्मणोर्हेतुः स्यात्तर्हि भगवत्त्वं भज्येतातस्तत्र को हेतुरित्यपेक्षायामाह— नहीति । तवाप्ययमर्थः सम्मत इति सूचयन् सम्बोधयति— हे महीपते इति । आत्मनो भगवतो मायां " अहं बहु स्या " इति श्रुत्युक्तामिच्छा विना ततोऽन्यः कालकर्मस्वभावादिरस्य भगवतो जन्मनः कर्मणो वा हेतुर्नास्त्येवेत्यन्वयः । हीत्यवधारणे । तत्र हेतुमाह— ईशस्येति । कालकर्मादीनामपि नियन्तुः स्वतन्त्रस्य कथं कालाद्यधीनजन्मादि स्यादित्याशयः । तत्र हेतुमाह— परस्यात्मन इति । अनेन स्वभृत्यादिनियन्तुरपि राज्ञः कालाद्यधीनत्वदर्शनात् तस्यापि कश्चिदन्यो नियन्ता स्यादिति शङ्का

**यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः ॥ तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥ नह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ॥ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्याय हि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥ अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ॥ भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥**

निरस्ता । तत उत्कृष्टस्यान्यस्याभावादित्यर्थः । तथापि धर्माधर्मादौ प्रवर्तकत्वेन सुखदुःखप्रदत्वाद्वैषम्यं तस्य स्यादेवेत्याशङ्क्याह— द्रष्टुरिति । जीवानां धर्माधर्मादिसाक्षितया तदनुसारेणैव प्रवर्तकत्वात् फलप्रदत्वाच्च न वैषम्यनैर्घृण्यमिति भावः ॥ ५७ ॥ किं बहुना सर्वजीवस्य बन्धमोक्षकर्तुः तस्य कथ कर्माद्यधीनता स्यादित्याशयेनाह— यन्मायेति । सर्वशास्त्रप्रसिद्धमेतदित्याह— हीति । यस्य मायाचेष्टितमिच्छया लीलामात्रं पुसः प्राणिमात्रस्य स्थितिः पालनं उत्पत्तिर्जन्म अप्ययः संहारस्तदर्थं भवति, तथा यस्यानुग्रहः कृपा प्राणिनस्तन्निवृत्तेः जन्मादिसंसारनिवृत्तितः आत्मलाभाय मोक्षाय चेष्यते पर्यवस्यति, तस्य जन्मादौ स्वेच्छां विनाऽन्यो हेतुर्नास्तीति पूर्वेणैवान्वयः ॥ ५८ ॥ एव सामान्यतः सर्वावतारप्रयोजनमुक्त्वा श्रीकृष्णावतारप्रयोजनं तच्चरितं च सङ्क्षेपत आह— अक्षौहिणीनामित्यादिना यावदध्यायसमाप्ति । नृपाणां क्षत्रियाणामिव लाञ्छनानि चिह्नानि येषां तैः नृपवदाभासमानैर्वस्तुतस्तु असुरैरासुरसम्पत्त्या जातैरनेकाक्षौहिणीसङ्ख्यानां सेनानां पतिभिः शिशुपालजरासन्धकंसादिभिराक्रम्यमाणाया भारायमाणाया भुवः पृथ्व्या अभाराय भारावताराय कृत उद्यमो येन सः ॥ ५९ ॥

---

१ ' यदा यदेह ' इत्येवंरूपे पाठान्तरे इह नृलोके इत्यर्थ ।

सङ्कर्षणेन रामेण सहितो भगवान् श्रीकृष्णः सुरेश्वरैरिन्द्रादिभिरपि मनसाऽप्यपरिमेयाणि सङ्कल्पयितुमशक्यानि पूतनाबककेशिकंसचाणूरमागधशिशुपालादिसंहाररूपाणि कर्माणि चक्रे। न केवलमिदानीं श्रीकृष्णावतारे एव दैत्या हताः किन्त्वग्रेऽपि मध्वादयो महान्तो दैत्यास्तेन विनिहता इति सूचयन्नाह– मधुसूदन इति ॥ ६० ॥ भूभारहरणं तु सङ्कल्पमात्रेणोपायान्तरेण वाऽपि कर्तुं प्रभवत्यतः श्रीकृष्णावतारस्य मुख्यं प्रयोजनान्तरमाह– कलाविति। कलौ युगे जनिष्यमाणानां भक्तानामनुग्रहाय श्रवणकीर्तनादिना धर्मादिचतुर्विधपुरुषार्थलाभाय पुण्यं धर्मादिपुरुषार्थानुगुणपुण्यजनकं पुरुषार्थप्रतिबन्धकं दुःखं शोकं तमस्तत्कारणमज्ञानं च नुदति अपनयतीति तथाभूत यशो व्यतनोत्, गोवर्धनोद्धरणरासादिलीलाभिर्विस्तारितवानित्यर्थः ॥ ६१ ॥ तद्यशसो मोक्षहेतुतां स्पष्टयति– यस्मिन्निति। सतां बहुजन्मानुष्ठितसुकृतैर्निर्मलान्तःकरणाना कर्णयोः श्रोत्रयोः पीयूषे अमृततुल्ये यस्मिन् यशोरूपे तीर्थश्रेष्ठे श्रोत्रमेवाञ्जलिः पानसाधनं यस्य स पुरुषः सकृदपि –किं पुनर्वारंवारं ?– तत्राप्युपस्पृश्याचम्य आचमनवत्किञ्चित् श्रुत्वा– किं पुनः पानवद्बहु श्रुत्वा– कर्मवासनां मोक्षप्रतिबन्धकीभूतां धुनुते, क्षपयतीत्यर्थः ॥ ६२ ॥ भगवदवतारसमये वर्तमानाना तत्स्वरूपलीला-

कर्माण्यपरिमेयाणि मनसाऽपि सुरेश्वरैः ॥ सहसङ्कर्षणश्चक्रे भगवान् मधुसूदनः ॥ ६० ॥ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ॥ अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ॥ ६१ ॥ यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ॥ श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥ भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितः शश्वत् कुरुसञ्जयपाण्डुभिः ॥ ६३ ॥ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥ यस्याऽऽननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ॥ नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥

माधुर्यानुभववता तु सुकृतं सुखं च किं वक्तव्यमित्याशयेन तच्चरितमाह– भोजेति द्वयेन। भोजादिभिः कुर्वादिभिश्च श्लाघनीयमीहितं लीला यस्य स श्रीकृष्णः स्निग्धं स्नेहपूर्वकं स्मितं यत्र तथाभूतं यदीक्षितमवलोकनं तेनोदारैर्भक्तमनोरथपूरकैर्वाक्यैर्विक्रमः पराक्रमस्तत्पूर्विकया गोवर्धनोद्धरणकालियदमनयमलार्जुनभञ्जनादिलीलया च सर्वैरङ्गै रम्यया मूर्त्या च भूलोक रमयामास आनन्दितं चकारेति द्वयोरन्वयः ॥ ६३ ॥ ६४ ॥ मूर्तेः सर्वाङ्गरम्यत्वमेव स्पष्टयन्, तन्मुखारविन्दं पश्यतामतृप्तिमाह– यस्येति। यस्य श्रीकृष्णस्य आननं दृशिभिर्नेत्रैः पिबन्त्योऽतितृष्णया पश्यन्त्यो मुदिता नार्यो नराश्च न ततृपुः तृप्ता न जाताः नालं मन्यन्तेत्यन्वयः। किं बहुना ? निमेषोन्मेषव्यवधानमपि असहमाना निमेषोन्मेषकर्तुर्निमेश्च कुपिता बभूवुः। इक्ष्वाकुतनयस्य निमेर्निमेषादिकर्तृत्वं पूर्वमेवोक्तम्। अतृप्तिहेतुत्वेन शोभातिशयं सूचयन्नाननं विशिनष्टि– मकराकृतिकुण्डलाभ्यां चारू कर्णौ भ्राजन्तौ कपोलौ च तैः सुभगं सुन्दरम्, सविलासो हासो यस्मिंस्तत्, नित्यमुत्सवः शोभातिशयो यस्मिंस्तत् ॥ ६५ ॥

श्रीकृष्णचरितं समासतो वर्णयति—जात इति द्वयेन । पुरुषः पुरुषात् जातः सन् पितृगृहात् कारागृहाद्व्रजं गतः, तत्र व्रजवासनामाधिताः सम्पादिताः अर्थाः पुरुषार्था येन सः, रिपून् पूतनादीन् हत्वा कृताः स्वीकृताः उरवः षोडशसहस्रैकशताष्टसङ्ख्याकाः दाराः कलत्राणि येन सः, तेषु दारेषु सुतानां शतानि-शतानीति बहुत्वोपलक्षणं प्रत्येकं दशपुत्रैककन्योत्पादनस्य वक्ष्यमाणत्वात्- तथाच अशीत्यधिकैकषष्टिसहस्रोत्तरैकलक्षसङ्ख्याकान् पुत्रान् अष्टोत्तरैकशताधिकषोडशसहस्रसंख्याकाः कन्याश्च उत्पाद्य आत्मनिगमं स्वकीयं वेदमार्गं जनेषु प्रथयन् प्रथयितुं क्रतुभिर्नानाविधैर्यागैरात्मानमेव समीजे

जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून् सुतशतानि कृतोरुदारः ॥ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥ पृथ्व्याः स वै गुरुभरं क्षपयन् कुरूणामन्तःसमुत्थकलिना युधि भूपचम्वः ॥ दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात् स्वधाम ॥ ६७ ॥ ॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यां वैयासिक्यामष्टादशसाहस्र्यां संहितायां नवमस्कन्धे सोमवंशनिरूपणप्रकरणे श्रीकृष्णजन्मनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

सम्यगाराधितवान् ॥ ६६ ॥ स वै भगवान् कृष्णः कुरूणां अन्तः परस्परं समुत्थेन कलिना कलहेन निमित्तेन पृथिव्याः गुरुमाधिकं भारं क्षपयन् युधि सङ्ग्रामे भूपानां चम्वः सेनाः स्वदृष्ट्यैव विधूय निरस्य विजयेऽर्जुने जयमुद्विघोष्य अर्जुनेन जितमिति लोके प्रख्यातं कृत्वा परं तत्त्वं उद्धवाय प्रोच्योपदिश्य च स्वं धाम वैकुण्ठं जगाम ॥ ६७ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता नवमे तत्र सोमवंशनिरूपणे ॥ चतुर्विंशो गतो वृत्तिं कृष्णजन्मनिरूपकः ॥ ३ ॥ टीकेयं नवमे यस्यानुग्रहेण विनिर्मिता ॥ अर्पिता तत्पदाम्भोजे तेन मे स प्रसीदतु ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



इति श्रीमद्भागवते बालप्रबोधिनीटीकासमन्विते

नवमस्कन्धः समाप्तः ।